बौद्धभारतीग्रन्थमालायाः

अष्टमं पुष्पम्

धर्मकीर्त्तिनिबन्धावलिः (२)

# वादन्यायः

# सम्बन्धपरीक्षा च




वाराणसी

१९७२

बौद्धभारतीग्रन्थमाला—८

Bauddha Bharati Series-8

धर्मकीर्त्तिनिबन्धावलिः (२)

# वादन्यायप्रकरणम्

## सम्बन्धपरीक्षा च

सम्पादकः

स्वामी द्वारिकादासशास्त्री

*Bauddha Bharati Series–8*

**Dharmakirtti Nibandhawali (2)**

# VADANYAYAPRAKARAṆA

**OF**

**ACHARYA DHARMAKIRTTI**

WITH THE COMMENTARY

**VIPANCHITĀRTHĀ**

**OF**

**ACHARYA ŚĀNTARAKṢITA**

**AND**

**SAMBANDHAPARĪKṢĀ**

WITH THE COMMENTARY

**OF**

**ACHARYA PRABHACHANDRA**

*Critically edited by*

SWAMI DWARIKADAS SHASTRI

*Ācārya (Vyākaraṇa, Pāli & Bauddha Darśana)*

**BAUDDHA BHARATI**

**VARANASI**

**1972**

बौद्धभारतीग्रन्थमालाप्रकाशनम्-८

आचार्यश्रीधर्मकीर्त्तिविरचिता

धर्मकीर्त्तिनिबन्धावलिः (२)

# वादन्यायप्रकरणम्

आचार्यशान्तरक्षितकृतविपञ्चितार्थव्याख्यायुतम्

एवं

आचार्यप्रभाचन्द्रकृतव्याख्यासनाथा

# सम्बन्धपरीक्षा

सम्पादकः

स्वामी द्वारिकादासशास्त्री

व्याकरणपालि-साहित्य-बौद्धदर्शनाचार्यः




१९७२ ख्रिस्टाब्दः ]　　वाराणसी　　[ २५१६ बुद्धाब्दः

प्रकाशिका
© बौद्धभारती
पो० बा० ४९
वाराणसी

Published by
© Bauddha Bharati
P. Box 49
VARANASI (India)





प्रथमं संस्करणम्
मूल्यम् ~~१५.००~~
(~~पञ्चदशरूप्यकाणि~~)

First Edition
Price 20.00
(~~Rupees Fifteen~~)

मुद्रक
मालती प्रेस,
विवेकानन्द नगर
वाराणसी-२

Printed at
Malati Press,
Vivekanand Nagar
VARANASI-2.

## प्रकाशकीयम्

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।

अयि मान्या विद्वांसः !

महान् प्रमोदावसरोऽयमस्मत्कृते यद् वयं सङ्कल्पानुसारं चतुर्थे वर्षे बौद्धभारतीग्रन्थमालाया अष्टमं पुष्पं बौद्धसाहित्यस्य शिरोरत्नभूतं धर्मकीर्त्ति-निबन्धावलौ वादन्यायप्रकरणम्, सम्बन्धपरीक्षां च श्रीमतां करकमलेषु समुपाहरामः ।

इदं तु सर्वैर्विदितचरमेव यदिदानीं यावद् धर्मकीर्त्तेः सर्वास्वपि महत्त्व-शालिनीषु कृतिषु काश्चित् यथासमयं कथञ्चित् मुद्रिता अपि दुर्लभा एव, येन बौद्धदर्शनजिज्ञासवो वाञ्छन्तोऽपि न प्रामाणिकं बौद्धसाहित्यमनायासेन प्राप्तुं शक्नुवन्ति स्म । प्रमाणवार्त्तिकं तु मुद्राणां चतुःशतकेनापि आपणे नोपलभ्यते—इति गोष्ठीषु काले काले कल्याणमित्त्राणां चेतांसि दोदूयन्ते स्म । एतत् सर्वमव-धार्यास्माभिः तत्त्वसंग्रहतोऽनन्तरं प्रमाणवार्त्तिकं प्रकाशितम् । प्रमाणवार्त्तिकस्य चेदानीमुपलभ्यमानासु वृत्तिषु आचार्यमनोरथनन्दिकृता वृत्तिरेव सर्वाङ्गसौष्ठव-सम्पन्ना । यत्र हि 'नामूलं लिख्यते किञ्चित्, नानपेक्षितमुच्यते' इति । एषैव वृत्तिः विदुषामन्तेवासिनां चोभयेषां कृते समा हितावहेति सम्प्रधार्यास्माभिः ग्रन्थेन सहैषापि योजिता ।

इदानीम् आचार्यशान्तरक्षितकृतविपञ्चितार्थव्याख्यायुतम् आचार्यधर्मकीर्तेः वादन्यायप्रकरणम्, आचार्यप्रभाचन्द्रकृतव्याख्यासंवलितां सम्बन्धपरीक्षां च श्रीमतां समक्षं समुपस्थास्यामः । अनेन भवतां भवदन्तेवासिनां च मनांसि मोदमाप्स्यन्तीत्याशास्महे ।

इदं वादन्यायप्रकरणं पूर्वं (१९३३ ई०) महापण्डितराहुलसाङ्कृत्यायनैः सम्पादितं वाराणसेय (सारनाथ) महाबोधिसोसाइटीतः प्रकाशितमभूत् । तदेव संस्करणमस्माभिरपि आदर्शत्वेन स्वीकृत्य विपञ्चितार्थटीकासाहाय्येन सम्पादितम् ।

अन्ते च न्यायदर्शनस्य भाष्यवार्तिकसहितस्यावश्यकोऽशोऽपि संयोजितः।

सम्बन्धपरीक्षायाः पाण्डुलिपिस्तु नैवाद्यावध्युपलब्धा। केवलमाचार्यप्रभाचन्द्रविरचिते प्रमेयकमलमार्तण्डे अस्याः सम्बन्धपरीक्षाया द्वाविंशतिः कारिकाः पूर्वपक्षरूपेणोपस्थापिताः दृश्यन्ते। तत्राप्यन्तिमास्तिस्रः कारिकाः न सन्तीति द्वाविंशतिः कारिका एवास्मिन् संस्करणे उद्धृताः। जिज्ञासूनामुपकारायाचार्यप्रभाचन्द्रकृता श्रीमहेन्द्रकुमारशास्त्रिसम्पादिता आसां कारिकाणां व्याख्या अपि स्थापिता। अत्र वयं श्रीमहेन्द्रकुमारशास्त्रिणा भृशमुपकृता इति तेभ्यो महापण्डितराहुलसांकृत्यायनेभ्यश्च शतशो धन्यवादान् समर्पयामः।

अनुपदमेव चास्यां ग्रन्थमालायां सर्वानप्यवशिष्टान् आचार्यधर्मकीर्तिप्रणीतान् सन्तानान्तरसिद्धि-हेतुबिन्दु-न्यायबिन्दुप्रभृतिग्रन्थान् निर्विघ्नं प्रकाशयेम—इत्येतदर्थं भवतां शुभाशंसनं कामयामहे।

प्रकाशकः

## विषयक्रमः

वादन्याये वस्तुजातं व्याख्यातं धर्मकीर्तिना ।
तस्य क्रमोऽत्र तद्वृत्तिमनुसृत्य वितन्यते ॥


१. निग्रहस्थानलक्षणम् १-७१

१. स्वभावहेतौ साधनाङ्गसमर्थनम् ६-१५

२. कार्यहेतौ साधनाङ्गसमर्थनम् १५-१८

३. अनुपलब्धौ साधनाङ्गसमर्थनम् १९-५८

४. प्रतिज्ञादीनामसाधनाङ्गत्वम् ५९-६४

५. असाधनाङ्गवचनं वादिनो निग्रहस्थानम् ६४-६६

६. अदोषोद्भावनं निग्रहस्थानम् ६७-६८

७. वादे छलव्यवहारनिषेधः ६८-७१

२. न्यायमतखण्डनम् ७३-१३६

प्रथमनिग्रहस्थानखण्डनम् ७३-७५

द्वितीयनिग्रहस्थानखण्डनम् ७५-७७

तृतीयनिग्रहस्थानखण्डनम् ७७-९२

चतुर्थनिग्रहस्थानखण्डनम् ९२-९३

पञ्चमनिग्रहस्थानखण्डनम् ९३-९४

षष्ठनिग्रहस्थानसमर्थनम् ९४-९५

सप्तमनिग्रहस्थानखण्डनम् ९५-९६

अष्टमनिग्रहस्थानखण्डनम् ९६-९७

नवमनिग्रहस्थानखण्डनम् ९७-९८

दशमनिग्रहस्थानखण्डनम् ९८-१०४

एकादशनिग्रहस्थानखण्डनम् १०४

द्वादशनिग्रहस्थानखण्डनम् १०५

त्रयोदशनिग्रहस्थानखण्डनम् १०५-१०६

चतुर्दशनिग्रहस्थानखण्डनम् १०६-१०९

पञ्चदशनिग्रहस्थानखण्डनम् १०९

षोडशनिग्रहस्थानखण्डनम् १०९-११४

सप्तदशनिग्रहस्थानखण्डनम् ११४-११७

अष्टादशनिग्रहस्थानसमर्थनम् ११७

एकोनविंशनिग्रहस्थानखण्डनम् ११८-१२१

विंशनिग्रहस्थानखण्डनम् १२१-१२२

एकविंशनिग्रहस्थानखण्डनम् १२२-१२४

द्वाविंशनिग्रहस्थानखण्डनम् १२४-१२५

त्रयोविंशनिग्रहस्थानखण्डनम् १२५-१३०

चतुर्विंशनिग्रहस्थानखण्डनम् १३०-१३६

**सम्बन्धपरीक्षा** १३८-१५०

**परिशिष्टानि**

सभाष्यवार्तिकं न्यायदर्शनम् (आवश्यकोऽशः) १५३-१६३

उद्धरणसूची १६४-१६६

ग्रन्थ-ग्रन्थकृतां सूची १६७-१६८

* नमः समन्तभद्राय *

# वादन्यायः

## १. निग्रहस्थानलक्षणम्

**न्यायवादिनमपि वादेषु असद्व्यवस्थोपन्यासैः[1] शठा निगृह्णन्ति, तन्निषेधार्थमिदमारभ्यते ।**

---

* नमो विघ्नप्रमथनाय *

## विपञ्चितार्था टीका

नानासद्गुणरत्नराशिकिरणध्वस्तान्धकारः सदा,
यो नानाविधसत्त्ववाञ्छितफलप्राप्त्यर्थमत्युद्यतः ।
तन्निःशेषजगद्धितोदयपरं नत्वाऽऽर्यमञ्जुश्रियं,
वादन्यायविभाग एष विमलः संक्षिप्त आरभ्यते ॥

यत् प्रयोजनरहितं तत् प्रेक्षापूर्वकारिभिर्नारभ्यते, यथा बलिभुग्दशनविनिश्चयादिकम्[2], अप्रयोजनं चेदं प्रकरणम् ?—इत्याशङ्कावतस्तदाशङ्कापरिजिहीर्षया प्रयोजनप्रदर्शनाय न्यायवादिनमित्यादि वाक्यमुपन्यस्तवान् । कथं पुनरनेन वाक्येनास्य प्रयोजनमुपदर्श्यत इति ? आस्तां तावदेतत् । अर्थस्तु व्याख्यायते—

न्यायः = त्रिरूपलिङ्गलक्षणा युक्तिः, नीयते = प्राप्यते विवक्षितार्थसिद्धिरनेन इति कृत्वा । अत एव "त्रिविधं लिङ्गम्" इत्यादिना त्रिरूपमेव लिङ्गमनन्तरं वक्ष्यति । तदभिधायि वचनम्—इत्यपरे । तं वदितुं शीलं यस्य स तथोक्तः । तमपि निगृह्णन्ति, पराजयन्त इत्यर्थः ।

निगृह्णन्तु नामान्यायवादिनम् पराजयाधिकरणत्वादेव, न्यायवादिनं त्वनिग्रहार्हमपि यन्निगृह्णन्ति—तन्न सम्भाव्यते ? परोत्कर्षव्यारोपधियस्तु तमपि पराजयन्ते इति । सम्भावनायाम् अपिशब्दः समुच्चयार्थः, अतिशयद्योतनार्थो वा । केषु निगृह्णन्ति ? इत्याह—वादेषु । साधनदूषणसंशब्दितेषु विचारेष्विति यावत् ।

विवादेष्विति क्वचित् पाठः । तत्र विरुद्धा वादाः = विवादाः, तेषु–इति व्याख्येयम् । विरुद्धाश्च[3] कथम् ? साधनदूषणसंशब्दितानां विचाराणां तद्विरुद्धार्थसाधनप्रवृत्तत्वात् ।

कथं पुनर्न्यायवादिनमसत्स्वसिद्ध्यादिषु हेतुदोषेषु निगृह्णन्ति ? इत्याह—असद्व्यवस्थोपन्यासैः । असताम् = असाधूनाम् व्यवस्थाः, असत्यो वा व्यवस्थाः,

---

१. शङ्कावस्थो०–रा० । २. बलित्वग्दर्शन०–रा० । ३. विरुद्धाश्च–रा० ।

**असाधनाङ्गवचनमदोषोद्भावनं द्वयोः ।**

सद्भिः कुत्सितत्वात् । ताश्च फलजात्यसन्निग्रहस्थानलक्षणाः । तासामुपन्यासाः = प्रयोगाः[1], तैरिति विग्रहः ।

के पुनरह्रीकास्ते एवंविधाः ? इत्याह—शठाः । धूर्ताः, मायाविनः । परसम्पत्तावीर्ष्यालव इति यावत् ।

यस्मात् तं तथा निगृह्णन्ति, इति तस्मात् तन्निषेधार्थम् तेषां शठानाम्, तेषां वा असद्व्यवस्थोपन्यासानाम्, तस्य वा निग्रहस्य, त्रयाणां वा निषेधः = निरासः । तदर्थम् = तन्निमित्तम्, इदं प्रकरणम् आरभ्यते । स एवार्थोऽस्य इति विग्रहीतव्यम् । तन्निषेधे च कृते सम्यग् विचारः प्रवर्तते, तत्पूर्वकश्च सर्वः पुरुषार्थ इत्यभिप्रायः । आसन्नविषयिणा त्वन्तर्विपरिवर्ति प्रकरणमिदमापरामृषति; अन्तस्तन्त्वात्मना परिनिष्पन्नत्वात् । अन्यथा अपरिनिष्पन्नात्मतया आसन्नत्वाभावाद्[2] 'इदम्'शब्दप्रयोगो न स्यात् ।

आरभ्यत इति वर्तमानकालनिर्देशः । कथमिति चेत् ? "वर्तमानसामीप्ये वर्तमानवद्वा" ( पा. सू. ३.३.३१ ) इति वचनात् ।

सम्बन्धोऽप्यभिधानीय[3] एव; अन्यथा बालोन्मत्तप्रलापवदग्राह्यमिदं प्रेक्षापूर्वकारिणां भवेदिति चेत् ? सत्यमेतत्; प्रयोजनान्तर्गतत्वात् पृथगसौ नाभिहितः । तथा हि—तन्निषेधार्थमिदमारभ्यते, ततश्चैतत् प्रयोजनमनेन प्रकरणेन साध्यते । तथा च—'प्रयोजनप्रकरणयोः साध्यसाधनलक्षणः सम्बन्धः' इति सूचितम् ।

ये त्वन्ये क्रियानन्तर्यादिलक्षणाः सम्बन्धाः, ते न वाच्या एव ; प्रकरणक्रियायामनङ्गभूतत्वात् । तथा हि–तेषु सत्स्वपि प्रयोजनाभावे नारभ्यत एव प्रकरणम्, असत्स्वपि च तेषु सति प्रयोजने प्रारभ्यत एव । तस्मात् प्रकरणारम्भस्य प्रयोजनान्वयव्यतिरेकानुविधानात् प्रयोजनमेवाभिधानीयं प्रेक्षापूर्वकारिणा । तस्मिंश्चाभिहिते सम्बन्धोऽप्युक्त एव भवति—इति मन्यते ।

नानवधारितप्रकरणशरीराः प्रवर्तन्ते प्रेक्षावन्तः, तस्मात् प्रयोजनवत्प्रवृत्त्यङ्गत्वात् प्रकरणशरीरमपि वक्तव्यमेवेति चेत् ? एवमेतत्; प्रयोजनवाक्येन त्वभिहितत्वान्नैव तदपि सम्बन्धवत् पृथगभिधानमर्हति; यतः 'तन्निषेधार्थमिदमारभ्यते' इत्युक्तम्, अतश्च 'तन्निषेधोऽस्य शरीरम्' इत्युक्तं भवति । यदा च एतन्निषेधार्थमिदमारभ्यते, तदा पूर्वको हेतुरसिद्धः । प्रतिप्रमाणद्वयं वा अनेन सूचितम्—१. प्रारब्धव्यमिदं प्रकरणं प्रेक्षावता, सति सामर्थ्ये । २. ग्राह्यं वा; प्रयोजनवत्त्वात्, सम्बन्धवत्त्वाच्च; तदन्यशास्त्रवदिति स्वभावहेतुः ।

एवमभिधाय प्रयोजनम्, सकलप्रकरणार्थसंग्राहकं श्लोकमाह–असाधनाङ्गवचनमित्यादिना । असाधनाङ्गवचनम्, अदोषोद्भावनं च द्वयोर्वादिप्रतिवादिनोर्यथाक्रमं निग्रहस्थानं पराजयाधिकरणम् ।

---

१. प्रयोगः–रा० । २. असन्नत्वाभावाद्–रा० । ३. आरभमाणस्य प्रकरणस्येत्यर्थः ।

**निग्रहस्थानम्, अन्यत्तु न युक्तमिति नेष्यते ॥**

**इष्टस्यार्थस्य सिद्धिः साधनम्, तस्य निर्वर्तकम् अङ्गम्, तस्य अवचनम् तस्याङ्गस्यानुच्चारणं वादिनो निग्रहाधिकरणम्; तदभ्युपगम्य अप्रतिभया तूष्णीम्भावात्। साधनाङ्गस्यासमर्थनाद् वा।**

---

अन्यत्तु इति। एतद्द्वयव्यतिरिक्तम्[1] अक्षपादपरिकल्पितं प्रतिज्ञासन्न्यासादिकं वक्ष्यमाणं निग्रहस्थानम्। न युक्तमिति कृत्वा नेष्यते। 'निग्रहस्थानम्' इति वर्तते। अयं तावत् समासेन श्लोकार्थः।

इष्टस्येत्यादिना विभागमारभते। इष्टोऽर्थः 'अनित्यः शब्दः' इत्यादिसाध्यत्वेनेप्सितः, तस्य सिद्धिः = प्रतिपत्तिः, साधनम्। तदनेन भावसाधनोऽयं[2] साधनशब्दस्तावदस्मिन् व्याख्यानेऽभिप्रेतः, न तु करणसाधन इति दर्शयति।

तस्य साधनस्येष्टार्थसिद्धिलक्षणमस्याङ्गम्। किं तद्? इत्याह—निर्वर्तकम्। जनकम्। अनेन अङ्गशब्दं व्याचष्टे। कारणपर्यायोऽयमत्राङ्गशब्दः, नावयवपर्याय इत्यर्थः। तच्च साधनाङ्गमिह निश्चितत्रैरूप्यं लिङ्गमुच्यते। अस्य साधनाङ्गस्य वचनं त्रिरूपलिङ्गाख्यानम्। तस्य साधनाङ्गस्य अवचनम् अनुच्चारणम्, अनभिधानं यत् तदसाधनाङ्गवचनम्। अनेनैतत् कथयति—असाधनाङ्गस्य पक्षोपनयनादेर्वचनमसाधनाङ्गवचनमिति नैव प्रतिपत्तव्यमस्मिन् व्याख्याने; किन्तु साधनाङ्गस्यैवावचनम् असाधनाङ्गवचनमिति। तदसाधनाङ्गवचनं वादिनो निग्रहस्थानम्। तदेतेन श्लोकस्य पूर्वभागं विवृणोति।

कथं पुनः साधनाङ्गस्यानुच्चारणं भवति, निग्रहस्थानं च? इत्याह—तदभ्युगम्येति। तदिति इष्टं साध्यम् अभ्युपगम्य 'अहमेतत् साधयामि' इति प्रतिज्ञया अप्रतिभया करणभूतया तूष्णीम्भावात्। अप्रतिभात्र पूर्वाधिगतार्थविस्मरणम्, स्तम्भितत्वं च गृह्यते। अनेन सर्वथा साधनाङ्गस्यावचनमाह।

अभिधाने वा यदि न समर्थितम्, तदा उक्तमप्यनुक्तमेव[3], स्वकार्याकरणात्—इत्यभिप्रायवानाह—साधनाङ्गस्यासमर्थनाद्वेति। 'तदभ्युपगम्य' इति वर्तते। 'वा' शब्दः पूर्वापेक्षया[4] विकल्पार्थः। साधनाङ्गस्यासमर्थनं त्रिष्वपि रूपेषु निश्चयाप्रदर्शनम्। तस्मात् तूष्णीम्भावाद, असमर्थनाच्च साधनाङ्गस्यानुच्चारणम्। ततश्च प्रतिज्ञातार्थाकरणात् वादिनो निग्रहाधिकरणमिति प्रकृतेन सम्बन्धः।

क्वचित्तु वादिनः इति पाठः। तत्र तच्छब्देन प्रकृतमनुच्चारणं सम्बध्यते।

कथं पुनः साधनाङ्गासमर्थनं भवति, येन तद्विपर्ययेण[5] असमर्थनात् प्रतिज्ञातार्थाकारणाद् वादिनो निग्रहाधिकरणत्वमिति कदाचित् कश्चिद् ब्रूयाद्—

---

१. एतद्द्वेय०–रा०। २. भावस्य साधनोऽयं–रा०।

३. ० मप्यनूक्तमेव–रा०।

४. पुर्व्वापेक्षया--रा०। ५. तद्विपर्ययेन–रा०।

१. स्वभावहेतौ साधनाङ्गसमर्थनम्

त्रिविधमेव हि लिङ्गमप्रत्यक्षस्य सिद्धेरङ्गम्—

---

इत्येतत् परिजिहीर्षुः आदिप्रस्थानमारचयति—त्रिविधमेवेत्यादिना। त्रिप्रकारमेव लिङ्गमङ्गकरणम्। कस्याः सिद्धेः? प्रतिपत्तिरूपायाः। कस्य सिद्धेः? इत्याह—अप्रत्यक्षस्य[1] परोक्षस्य, अनुमेयभूतस्य वस्तुन इति यावत्। अवधारणं चतुरादिव्यवच्छेदमाचष्टे।

त्रिविधमेवेति नियमः कथमयमिति चेत्? यस्माद् विधिप्रतिषेधरूपतया द्विधा साध्यं व्यवस्थितम्। विधिरूपं च सद्भावरूपं कारणरूपं वा भवद् भवेद्, नान्यत्; तत्र हेतोः प्रतिबन्धायोगात्। न ह्यर्थान्तरस्याकार्यस्य सद्भावेऽपरस्य सद्भावो युक्तः, पटसद्भाव इवोष्ट्रस्य। नाप्यर्थान्तरस्याकारणस्य निवृत्तावकार्यस्य अन्यस्य च निवृत्तिर्युक्तिमती, उष्ट्रे निवृत्ताविव पटस्य। न चान्वयव्यतिरेक-विकलस्य गमकत्वं युक्तम्; पटस्याप्युष्ट्रगमकत्वप्रसङ्गात्। स्वभावभूतधर्मसद्भावे तु स्वभावभूतस्यान्यस्य सद्भावो युक्तः। न हि स्वभावः स्वभावं परित्यज्य वर्तते; तत्स्वभावत्वाभावप्रसङ्गात्[2]।

कार्यस्यापि भावे कारणस्य भावो युक्तः, तन्निवृत्तौ च निवृत्तिः, अन्यथा तेन विनापि भावात् कार्यमेव तत् तस्य न स्यात्, तदन्यवत्। तस्मात् स्वभाव-कारणभूतसाध्यभेदात् द्विधैव विधिरूपं साध्यम्; तत्रैव हेतोः प्रतिबन्धात्। स्वभावभूतं च साध्यं स्वभावहेतुः साधयति, कारणभूतं च कार्यहेतुरित्यभ्युपेयम्। प्रतिषेधमप्युपलब्धिलक्षणप्राप्तानुपलब्धिरेव साधयति नान्या यथा, तथा विस्तरेण प्रतिपादयिष्यति।

तदिदमिह संक्षिप्तसमर्थतत्त्वम्—विषयव्यपेक्षया विषयिणो लिङ्गस्य व्यवस्था। विषयश्च विधिः, प्रतिषेधो वा भवेत्। विधावपि अर्थान्तरं वा विधीयेत, अनर्थान्तरं वा। अर्थान्तरविधावपि कार्यकारणम्, अनुभयं वा साध्यते। कार्य-प्रतिपादनेऽपि कारणसामान्यं वाऽमेघादिव्यावृत्तं वस्तुमात्रं लिङ्गत्वेनोच्यते, कारणविशेषो वा; योऽप्रतिबद्धसामर्थ्यो मेघादिः। प्रतिषेधोऽपि निषेध्याभिमत-स्यानुपलम्भनेन, उपलम्भनेन वा प्रतिपाद्येत। अनुपलम्भेऽपि उपलम्भनिवृत्ति-मात्रलक्षणो वा भवेत्, तत्तुल्ययोगावस्थः केवलापरपदार्थोपलम्भरूपो वा—इति विकल्पाः।

तत्र नावश्यं गम्भीरध्वानादियुक्तमपि मेघादिकारणमात्रं वृष्ट्यादिकार्या-विर्भावकम्; अन्तरा प्रतिबन्धसम्भवेन व्यभिचारात्। अतो न कारणमात्रं गमकम्। कारणविशेषादप्यप्रतिहतशक्तेरनन्तरं सम्बन्धस्मृतिव्यवहितादनुमेय-विज्ञानात् प्राक् कार्यमेवोद्भूतमक्षज्ञानग्राह्यं भवतीति न तस्यापि लिङ्गत्वम्।

---

१. अप्रत्यक्षस्या–रा०।

२. तन्निवृत्तौ च निवृत्तिः—इत्यधिकः पाठो रा० पुस्तके।

**स्वभावः, कार्यम्, अनुपलम्भश्च ।**

**तस्य समर्थनं साध्येन व्याप्तिं प्रसाध्य धर्मिणि भावसाधनम् ।**

---

कार्यं तु कारणलिङ्गं युक्तम्; तदविनाभावात् । तदतिक्रमे वा हेतुमत्तां विलङ्घयेत् । अनुभयमपि असम्बन्धानुगमकम्, अतिप्रसङ्गो वा । अनर्थान्तरमप्यव्यभिचाराद्[1] गम्यते इति युक्तिमत् । निषेधोऽप्युपलम्भेन न युज्यते; विरोधात् । कथं हि नाम उपलभ्यते च, नास्ति च—इत्युपपद्यते ! तज्ज्ञाननिवृत्तिमात्रमपि व्यभिचारि । एकज्ञानसंसर्गिणस्तु कैवल्यदृष्टेरसत्ताव्यवहारो युक्तः । यदि हि स्यादुपलभ्यः, सत्त्व एव भवेत् । प्रमाणं च—'यदनुपपद्यमानविषयं न तद्विषयि युक्तम्, यथा वाजिविषाणम्' । अनुपपद्यमानविषयं चोक्तप्रकारेण स्वभावादि स्याद्, अन्यसंयोग्यादिपरपरिकल्पितं लिङ्गमिति व्यापकानुपलम्भः । वैधर्म्येण नीलादिज्ञानम् , तदेव वा कार्यादिलिङ्गम् । नैमित्तिकशब्दार्थानुपपत्तिर्बाधिका । किमेवं सिद्धम् ? अगमकत्वमन्येषाम् । तथा हि—विषयित्वम्, गमकत्वम्, प्रकाशकत्वम् इत्यादयः पर्यायाः । तस्मात् साध्यस्य त्रिविधत्वात् तद्गमको[2] हेतुरपि त्रिविध एवेति स्थितमेतत् ।

कथं त्रिविधम् ? इत्याह—स्वभाव इत्यादि । च-शब्दः स्वभाव-कार्यापेक्षया समुच्चयार्थः । एतच्चाभिमतहेतुप्रदर्शनं स्वभाव-कार्य-अनुपलम्भभेदात् त्रिविधमप्रत्यक्षस्य सिद्धेरङ्गम्, न तु कारणैकार्थसमवायिविरोध्यादिभेदादिति दर्शनार्थम् । ननु चोपलब्धिलक्षणप्राप्तानुपलम्भश्चेति वक्तव्यम्, तस्यैवाप्रत्यक्षस्य सिद्धेर्वक्ष्यमाणेन न्यायेनाङ्गत्वात्, नानुपलम्भमात्रस्य, तत् कथं सामान्येनोक्तमिति चेत् ? एवमेतत्; समर्थितसाधनाङ्गाधिकारात् तु सामान्यशब्दोऽप्ययमनुपलम्भशब्दः उपलब्धिलक्षणप्राप्तानुपलम्भ एव वर्तते । तथा हि—सामान्यशब्दा अपि शब्दान्तरसन्निधानात्, प्रकरणसामर्थ्याच्च विशेषेष्ववतिष्ठन्ते । यदाह—"न हि विशेषशब्दसन्निधिरेव शब्दानां विशेषावस्थितिहेतुः, अपि तु प्रकरणसामर्थ्यादिकमपि" (　　　) इति ।

यथा चानुपलम्भमात्रस्य समर्थितसाधनाङ्गत्वं न सम्भवति, तथोत्तरत्र प्रतिपादयिष्यति । अप्रत्यक्षसिद्धिहेतुलिङ्गाधिकाराद् वा अचोद्यमेवैतत् ।

किं पुनरस्य त्रिविधस्य साधनाङ्गस्य समर्थनम्, यद्विपर्ययादसमर्थनं भविष्यति ? इत्याह—तस्येत्यादि । साध्यशब्दोऽत्रानित्यत्वादिधर्ममात्रस्य वाचकः; अवयवसमुदायोपचारात् । न तु साध्यधर्मिधर्मसमुदायस्य; व्याप्तेरेवाभावप्रसङ्गात् । शब्दादिधर्मिविशिष्टस्यानित्यत्वादेर्दृष्टान्तधर्मिण्यभावात् । व्याप्तिं प्रसाध्य अन्वयव्यतिरेकसाधनकेन प्रमाणेन अनेनान्वयव्यतिरेकनिश्चयावुक्तौ । धर्मिणि जिज्ञासितविशेषे शब्दादौ भावसाधनं पक्षधर्मत्वसाधकेन प्रमाणेन सत्त्वकथनमित्यर्थः । अनेनापि पक्षधर्मत्वनिश्चय उक्तः ।

---

१. ० मव्यभिचाराङ्—रा० ।　　२. तङ्गमको—रा० ।

यथा 'यत् सत् कृतकं वा, तत् सर्वमनित्यम्, यथा घटादिः', 'सन् कृतको वा शब्दः' इति ।

अत्रापि न कश्चित् क्रमनियमः; इष्टार्थसिद्धेरुभयत्राविशेषात् ।

यस्माद् धर्मिणि प्राक् सत्त्वं प्रसाध्य पश्चादपि व्याप्तिः प्रसाध्यत एव । यथा—'सन् शब्दः कृतको वा, यश्चैवं स सर्वोऽनित्यः, यथा—घटादिः' इति ।

अत्र व्याप्तिसाधनं विपर्यये बाधकप्रमाणोपदर्शनम् ।

---

कथं पुनः सर्वोपसंहारेण व्याप्तिं प्रसाध्य धर्मिणि भावः कथ्यते ? इत्यत्रोदाहरणमाह—यथेत्यादि । तत् सर्वमिति । अनेन सर्वोपसंहारेण व्याप्तिप्रदर्शनं कथयति । किमर्थम् ? विप्रतिपत्तिनिरासार्थम् । तथा हि—पक्षसपक्षापेक्षयान्तर्व्याप्तिः, बहिर्व्याप्तिश्च प्रदर्श्यते इत्येके विप्रतिपन्नाः, तच्च न युक्तम्; वस्तुबलायातत्वाद् व्याप्तेः ।

'पूर्वं साध्येन व्याप्तिं प्रसाध्य पश्चाद् धर्मिणि सत्त्वं कथयितव्यम्' इत्ययमीदृशः क्रमनियमः किमत्रास्ति न वा ? इत्याह—अत्रापीत्यादि । अत्रेति मन्मते, साधनाङ्गसमर्थने वा । अपिशब्दोऽवधारणे । प्रतिषेधे न च सम्बन्धनीयः । नैव कश्चिदयमीदृशः, क्रमनियमः परिपाटिनियम इति यावत् । किं कारणम् ? इत्याह—इष्टार्थसिद्धेरुभयत्राविशेषादिति । व्याप्तिसाधनाभिधानपूर्वकधर्मिभावसाधनाभिधाने[1], धर्मिभावसाधनाभिधानपूर्वके वा व्याप्तिसाधनाभिधाने साध्यार्थसिद्धेर्विशेषाभावादित्यर्थः ।

एवमाकूतम्—क्रमनियमो हि किमर्थमाश्रीयते ? साध्यसिद्ध्यर्थम् । यथा साधर्म्यवति[2] दृष्टान्तप्रयोगे साध्येनैव हेतोरविनाभावः प्रदर्श्यते, न हेतुना साध्यस्य; तथा वैधर्म्यवति साध्याभाव एव हेतोरभावः कथ्यते, न तु हेत्वभावे साध्यस्य । किमर्थम् ? मा भूद् हेतोः साध्येनाविनाभावित्वाप्रदर्शनेनेष्टार्थसिद्धेरसिद्धिः, विपर्ययसिद्धिश्चेति । यदाह—'एवं हि हेतोः सपक्ष एव सत्त्वम्, साध्याभावे चासत्त्वमेव शक्यं दर्शयितुम्, न विपर्ययाद्' इति । यथा नित्यता अकृतकत्वेन, नाशित्वाद्वाऽत्र कार्यता स्याद्, अनुक्ताकृताव्यापित्वनिष्ठश्च समन्वय इति । तदत्र युक्तं क्रमसमाश्रयणम् । इह तु विनाप्यनेनाभिमतार्थसिद्धिः सम्पद्यत इति सूक्तम्—'न कश्चित् क्रमनियमः' इति ।

'इष्टार्थसिद्धेरुभयत्राविशेषाद्'—इत्येतदेवात्र कुत इति चेद् ? आह—यस्माद् धर्मिणीत्यादि । 'साध्येन व्याप्तिं प्रसाध्य' इत्युक्तं प्राक्, किं पुनस्तद्व्याप्तिसाधनम् ? इत्याह—अत्रेत्यादि । अत्रेति स्वभावहेतौ । कार्यानुपलम्भयोस्तु पश्चाद् व्याप्तिसाधनमभिधा स्यात् । विपर्यये । साध्यस्य हेतोर्वर्तमानस्य सत इति शेषः । बाधकं प्रमाणम् । येन साध्यविपर्यये वर्तमानो हेतुर्बाध्यते, तस्य कथनं यत् तद् व्याप्तिसाधनमित्यर्थः ।

---

१. धर्मिभावसाधनाभिधाने—इति पदं रा० पुस्तके द्विरावृत्तं दृश्यते ।

२. साधर्मवति–ह० ।     १. रा० पुस्तके नास्ति ।

**यदि न सर्वं सत् कृतकं वा प्रतिक्षणविनाशि स्याद्, अक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाऽयोगाद् अर्थक्रियासामर्थ्यलक्षणमतो व्यावृत्तम्[1]–इत्यसदेव स्यात्।**

---

किं पुनस्तद् बाधकप्रमाणोपदर्शनम्? इत्याह—यदि न सर्वं वस्तु सत् कृतकं चेति। पूर्वोक्तहेतुद्वयं परामृषति। प्रतिक्षणविनाशि स्यात्। तदाऽसदेव स्यादिति सम्बन्धः। कुतः? अक्षणिकस्य पदार्थस्य क्रमयौगपद्याभ्यामर्थक्रियायोगात्। तथा हि[2]—क्षणिकत्वेनाभिमतस्य भावस्य क्रमेण तावदर्थक्रिया न युज्यते; कार्यनिवर्तनयोग्यस्य स्वभावस्य सदा सत्त्वात्। अन्यथा पश्चादपि न कुर्यात्। पूर्वस्वभावाप्रच्युतः पुरावत् सहकारिणमासाद्य करोतीति चेत्? न; अनाधेयात्मातिशयस्य पूर्वस्वभावापरित्यागिनः सहकारिष्वपेक्षायोगात्। आदधत्येव सहकारिणस्तस्यात्मातिशयमिति चेत्? न; सहकारिभिराहितस्यातिशयस्य तत्त्वान्यत्वायोगात्। तथा हि—न तावदयमात्मातिशयस्तस्यात्मभूतः; तस्यैव तदव्यतिरेकादात्मातिशयवत् सहकारिबलादुत्पत्तिप्रसङ्गात्। एवं चाभ्युपेतमस्याक्षणिकत्वमवहीयते। व्यतिरिक्त एव स तस्मादिति चेत्? भवतु; किन्तु तस्मादेवात्मातिशयात् कार्योत्पत्तेस्तदवस्थमस्यार्थक्रियास्वसामर्थ्यमिति दुर्निवारः प्रसङ्गः समापतति। सम्बन्धोऽप्यनेन कथम्?—इति वश्चिन्ताविषयमवतरत्येव। अतिशयबलात् 'करोति' इत्यत्रापि सहकार्यपेक्षापक्षोदितो दोषः।

समर्थस्वभावत्वादनाधेयातिशयत्वेऽपि कुविन्दादिवत् किञ्चिदपेक्ष्य कार्यजनक इति चेत्? न तत् सारम्; न हि सहकारिणः प्रत्ययास्तस्य तावदतिशयमाधातुं क्षमाः। न चाप्यनुपकारके भावेऽपेक्षा युक्तिमनुपतति; अतिप्रसङ्गात्[3]। एवं च सर्वकालमस्याकार्यजनकत्वप्रसङ्गः; कुविन्दादीनामपि तत्स्वभावस्य करणाद्, अकारकस्य वा। "तत्स्वभावत्वाद्" इत्यादि हेतुबिन्दावुक्तम्, इति नेहोच्यते।

एवं तावत् क्रमेणास्य अर्थक्रिया न युज्यते, नापि युगपत्। तथा हि—अर्थक्रियानिवर्त्तनयोग्यस्वभावाध्यासितमूर्तिः सहैवासौ, अतश्च पश्चादपि तद्रूपवियोगात् कार्यमुत्पादयेद्, अन्यथोदयानन्तरमेवास्य क्षयः स्यात्। न चाप्यक्षणिकत्वेनोपगतस्य सकृत् कार्यमुत्पद्यमानमुपलभ्यते; क्रमसम्भवदर्शनात्। तदेवमयमक्षणिकः पदार्थः क्रमेण युगपद्वा न काञ्चिदप्यदर्थक्रियामात्रामंशतोऽपि क्षमो निवर्तयितुमित्यसत्त्वमेवास्य।

यदि नामार्थक्रिया, सा न युक्ता, तत् किमित्यसत्त्वमेवास्य स्याद्? इत्याह—अर्थक्रियेत्यादि। अर्थक्रियायाः सामर्थ्यम्, तदेव लक्षणं यस्य सत्त्वस्येति विग्रहः।

---

१. निवृत्तम्—रा०। २. तथाह–रा०। ३. अतिप्रसांगात्—पा०।

सर्वसामर्थ्योपाख्यविरहलक्षणं हि निरुपाख्यमिति।

एवं साधनस्य साध्यविपर्यये बाधकप्रमाणानुपदर्शने विरोधाभावादस्य विपर्ययवृत्तेरदर्शने सन् कृतको वा स्यात्, नित्यश्च–इत्यनिवृत्तिरेव शङ्कायाः।

---

अतोऽर्थक्रियासामर्थ्यलक्षणात् सत्त्वाद् व्यावृत्तं व्यवच्छिन्नम्। इतिश्रुतिः हेतौ। तस्मादर्थे वा।

कथं पुनरिदमवसीयते—अर्थक्रियासामर्थ्यं सत्त्वलक्षणमिति? अत आह—सर्वेत्यादि। सर्वेषां सामर्थ्यानामुपाख्या श्रुतिः, उपाख्यायते अनयेति कृत्वा, तस्या विरहः=अभावः। स एव लक्षणं यस्य निरुपाख्यस्य स तथाऽऽख्यायते। अत्रापीतिश्रुतिर्हेतौ। सर्वग्रहणं घटादीनामपि क्षणिकत्वेनाभिमतानां विषयभेदेनार्थक्रियासामर्थ्यनिर्वृत्तेरस्तीति तेषामसत्त्वव्यवच्छेदाय। नैवार्थक्रियासामर्थ्यं सत्त्वलक्षणम्, अपि तु सत्तायोग इति चेत्? न; सत्ताया अभावात्। तदभावश्चान्यत्र प्रतिपादित इति नेहोच्यते। सत्तायाश्च नैव सत्त्वं प्राप्नोति; सत्तायोगाभावात्, 'निःसामान्यानि सामान्यानि' इति समयात्। न च स्वयमतद्रूपाः पदार्थात्मानः स्वभावान्तरसम्पर्कमासादयन्तोऽपि ताद्रूप्यं प्रतिपद्यन्ते, स्फटिकाभ्रपटलादय इव जपाकुसुमादिरूपमिति यत्किञ्चिदेतत्। तत्त्वेतावदेवाभिधानीयम्–सर्वसामर्थ्यविरहलक्षणं निरुपाख्यमिति। तत् किमनेनोपाख्याग्रहणेनेति चेत्? सूक्तमेतत्; सर्वसामर्थ्यरहितस्य तु सामर्थ्यनिबन्धनस्य कस्यचिदपि शब्दस्यावृत्तेरसद्व्यवहारविषयत्वख्यापनाय, संज्ञायाश्चानुगतार्थत्वसिद्ध्यर्थमिदमुक्तमिति गम्यते।

यदि त्वेवं साध्यविपर्यये हेतोर्बाधकप्रमाणोपदर्शनं न क्रियते, ततः किं स्यादिति चेद्? आह—एवं साधनस्य साध्यविपर्यये बाधकप्रमाणानुपदर्शने। सत्यनिवृत्तिरेवाशंकाया इति सम्बन्धः। का पुनः सा शंका? 'स कृतको वा स्यान्नित्यश्च' एवम्प्रकारा।

ननु विपक्षहेतोर्वृत्तिर्नोपलभ्यते, तत् कथमनिवृत्तिः? इत्याह–अदर्शनेऽपि वृत्तेरस्य साधनस्याक्षविपर्यये साध्यस्य हि उपस्कारः। किमित्येवमप्यनिवृत्तिः? इत्याह—विरोधाभावादिति। साधनसाध्यविपक्षयोरिति शेषः। अयमस्याभिप्रायः—यदि साधनस्य साध्यविपर्यस्य च परस्परं विरोधः सिद्धः स्यात्, भवेददर्शनमात्रे ते, अन्यथा बाधकासिद्धौ संशयो दुर्निवारः स्यात्? इत्याशङ्क्याह—न च नैव सर्वानुपलब्धिर्बाधिका प्रतिषेधिका युक्तेत्युपस्कारः। कस्य? भावस्य सत्त्वस्य, साध्यविपर्यये हेतोरिति शेषः। प्रकरणाद्धैतद् गम्यत एव। इदमुक्तं भवति–व्यापकानुपलब्धिरेव सहभावं बाधते हेतोः साध्याभावेन। यथा प्रतिपादितं प्राक्—'नाप्यदर्शनमात्राद्व्यावृत्तिः, विप्रकृष्टसर्वदर्शिनोऽदर्शनस्याभावासाधनाद्' इत्यादिना। तस्मात्सूक्तम्–अन्यथा बाधकासिद्धौ संशयो दुर्निवारः स्यादिति। अनेन पूर्वोक्तमेव स्मारयति। एवञ्चैतदर्थवत्।

'अभावसाधनस्यादर्शनस्याप्रतिषेधाद्' इत्युक्तम्, भवेत् तत्र कस्यचिदाशंका—

न च सर्वानुपलब्धिर्भावस्य बाधिका, तत्र सामर्थ्यं क्रमाक्रमयोगेन व्याप्तं सिद्धम्; प्रकारान्तराभावात्।

तेन व्यापकधर्मानुपलब्धिरक्षणिके सामर्थ्यं बाधते।

क्रमयौगपद्यायोगस्य सामर्थ्याभावेन व्याप्तिसिद्धेर्नानवस्थाप्रसङ्गः।

अत्राप्यदर्शनमप्रमाणम्; यतः क्रमयौगपद्यायोगस्यैवासामर्थ्येन व्याप्त्यसिद्धेः

---

किमनेन 'अभावसाधनस्य' इति विशेषणेन, यावता सर्वमेवादर्शनमभावसाधनम्? इयतस्तदाशङ्कानिवृत्त्यर्थमिदमाह—न चेत्यादि। अत्र चशब्दो हिशब्दार्थे प्रतिपत्तव्यः। तस्मिन् नैव वाऽवधारणे। व्याख्यानं पूर्ववत्।

ननु च बाधकस्यैव प्रमाणस्य क्रमाक्रमयोगस्यासामर्थ्येन व्याप्तिर्न सिद्धा, तत् कथं तत् स्वयमसिद्धव्याप्तिकं सदपरस्य सत्त्वादेर्हेतोर्व्याप्तिसाधने पर्याप्तम्? प्रमाणान्तरेण तत्र व्याप्तिः साध्यत इति चेत्? सैव तर्हीयमनवस्थादोषादिवानुबध्नातीति कदाचित् परो ब्रूयात्? इत्याशङ्क्य सर्वमिदमाह—तत्रेत्यादि। तत्रशब्दो वाक्योपन्यासार्थः। सामर्थ्यं यद्वस्तुलक्षणं तत्क्रमाक्रमयोगेन व्याप्तं सिद्धम्। यत्र सामर्थ्यं तत्र क्रमाक्रमाभ्यामर्थक्रियया भवितव्यमित्यनेनाकारेण। तदेव कुत इति चेदाह—प्रकारान्तरासम्भवात्। यस्मादन्यत् क्रमाक्रमव्यतिरिक्तं प्रकारान्तरं नास्ति, तस्माद् यत्रेदं सत्त्वलक्षणमर्थक्रियासामर्थ्यं तत्रावश्यं च क्रमाक्रमाभ्यामर्थक्रियया भवितव्यम्।

ननु च क्रमाक्रमाभ्यामन्यो राशिर्नास्तीत्येतदेव कथं सिद्धम्, क्रमाक्रमयोरन्योन्यपरिहारस्थितलक्षणत्वेन तृतीयप्रकारव्यतिरेकत्वात्? भावाभाववदिति ब्रूमः। भवत्वेवम्, स तु क्रमयौगपद्यरूप एवेति कुत इति चेत्? कस्तर्ह्यन्यो भवतु। कश्चिद् भवेदिति चेत्? किमर्थं तर्हि महत्यनर्थसङ्कटे पतितोऽसि यदिदन्तया तद्रूपाभिधानेऽप्यसमर्थोऽसि! यदि नाम सामर्थ्यं क्रमाक्रमयोगेन व्याप्तं सिद्धम्, तथापि किं सिद्धमिति चेद्? आह—तेन सामर्थ्यस्य क्रमाक्रमयोगेन व्याप्तत्वेन व्यापकस्य धर्मस्य क्रमाक्रमयोगस्यानुपलब्धिः अक्षणिके पदार्थेऽभ्युपगते सामर्थ्यं बाधते, निराकरोतीत्यर्थः॥

तथा ह्ययं क्रमाक्रमयोगस्तस्य सामर्थ्यस्य व्यापकः। ततश्चास्य निवृत्तावश्यमेव सामर्थ्यस्यापि निवृत्तिः, अन्यथायमस्य व्यापक एव न प्राप्नोति। यस्मात् तद् बाधते इति तस्मात् क्रमयौगपद्यायोगस्य व्यापकाभावस्य कर्मभूतस्य सामर्थ्याभावेन व्याप्याभावेन कर्तृभूतेन व्याप्तिसिद्धेः कारणात् नानवस्थाप्रसङ्गः।

यदि तर्हि बाधकप्रमाणोपदर्शनेन हेतोर्व्याप्तिः प्रसाध्यते, तथा सत्यनवस्था भवतः प्राप्नोति? इत्याशंकापनोदनाय पूर्वपक्षमारचयन्नाह—अत्रापीत्यादि। अत्रेति बाधके प्रमाणे। अदर्शनमप्रमाणयतस्तव नादर्शनमात्राद्धेतोर्व्यतिरेकनिश्चय इत्यनेनाकारेण न केवलं मौले हेतावित्यपिशब्दः। किम् पूर्वस्यापि मौलस्य

**पूर्वकस्यापि हेतोरव्याप्तिः । इहापि पुनः साधनोपगमेऽनवस्थाप्रसङ्ग इति चेत् ? न; अभावसाधनस्यादर्शनस्याप्रतिषेधात्[1] ।**

**यददर्शनं विपर्ययं साधयति हेतोः साध्यविपर्यये, तदस्य विरुद्धप्रत्युपस्थानाद् बाधकं प्रमाणमुच्यते ।**

**एवं हि स हेतुः साध्याभावेऽसन् सिध्येत्, यदि तत्र प्रमाणवता स्वविरुद्धेन बाध्येत । अन्यथा तत्रास्य बाधकासिद्धौ संशयो दुर्निवारः ।**

---

हेतोरव्याप्तिः प्राप्नोतीति क्रियापदम् । किङ्कारणम् ? क्रमयौगपद्यायोगस्य वा सामर्थ्येन व्याप्त्यसिद्धः । तथा हि यद्यदर्शनमात्रेण न व्यतिरेकनिश्चयः, तथा सति क्रमयौगपद्यायोगश्च भविष्यति, सल्लक्षणं सामर्थ्यं च भविष्यति, कोऽनयोर्विरोध इत्यत्रैव बाधके प्रमाणे व्याप्तिर्न सिद्धा ।

यदि नामात्र न सिद्धा, मौलहेतावेतद्बलेन व्याप्तिः सेत्स्यतीति चेद् ? आह— पूर्वस्यापि मौलस्यापि हेतोरव्याप्तिः । प्राप्नोतीत्यध्याहारः । तथाहि—न स्वयमप्रमाणकं बाधकं प्रमाणमन्यस्य प्रमाणमुपकल्पयितुमलम्; प्रामाण्यप्रसङ्गात् ।

यद्येवम्, अत्रापि तर्हि व्यापके प्रमाणेऽन्येन व्यापकेन प्रमाणेन व्याप्तिर्निश्चीयते ? इत्याह—इहापि । न केवलं मौलहेतावित्यपिनाह । पुनः साधनोपक्रमे सत्यनवस्था भवेत् । तथा हि यत्तद् बाधके प्रमाणे व्याप्तिप्रसाधनार्थं बाधकं प्रमाणमुच्यते, तत्रापि व्याप्तिरन्येन बाधकेन प्रमाणेन साध्या; यस्मान्न तदपि स्वयमप्रमाणमितरस्य प्रामाण्यं कर्त्तुं समर्थमित्येतत् तत्रापि शक्यं वक्तुम् । तस्याप्यन्येन व्याप्तिः साध्यत इति चेत् ? यद्येवम्, तत्रापीयमेव वार्त्तेत्यनवस्था भवतस्तथा सति प्रसजति ।

एवं समारचितपूर्वपक्षः साम्प्रतमत्र प्रतिविधानमाह—नाभावसाधनस्येत्यादि । व्यतिरेकसाधनत्वेनेत्युपस्कारः । इदमुक्तं भवति—न सर्वमत्रादर्शनं प्रतिक्षिप्यते, व्यतिरेकनिश्चायकस्य व्यापकानुपलब्धिसंज्ञकस्यानिषेधात्, किन्त्वदर्शनमात्रमिति । यदाह—यददर्शनं विपर्ययमभावं साधयतीति । कस्य ? हेतोः । कुत्र ? साध्यविपर्यये । तददर्शनमस्य हेतोर्बाधकं प्रमाणमुच्यते । कस्माद् ? विरुद्धप्रत्युपस्थापनात् । अस्येति वर्त्तते । तथा हि—यस्य क्रमयौगपद्याभ्यामर्थक्रियायोगः, तस्य सामर्थ्यलक्षणं सत्त्वं नास्ति । यथा बन्ध्यातनयादीनाम्, तथा वा क्षणिकानामपि क्रमयौगपद्याभ्यामर्थक्रियाऽयोग इति क्रमाक्रमाभ्यामर्थक्रियाऽयोगादित्ययं व्यापकानुपलम्भः । सत्त्वादित्यस्य हेतोर्विरुद्धमसत्त्वं साध्यविपर्यये प्रत्युपस्थापयद् बाधकं प्रमाणमुच्यते । एवं च कृतकत्वादावपि यथायोग्यं वाच्यम् ।

कस्माद्विरुद्धप्रत्युपस्थापनादस्य तद्बाधकं प्रमाणमुच्यते ? इत्याह—एवं हि स हेतुः सत्त्वादिलक्षणः साध्याभावे तस्मिन्नसन्निति सिध्येत् , यदि तत्र साध्याभावे बाध्येत निराक्रियता । केन ? स्वविरुद्धेन । स्वरूपविरुद्धे नासत्त्वादिनेति यावत् । किम्भूतेन ? प्रमाणवता, प्रमाणयुक्तेन । कस्मादेवमसौ तत्रासत् सिध्यति? इत्याह—

---

[1] भावसाधन०–रा० ।

ततो व्यतिरेकस्य सन्देहादनैकान्तिकः स्याद्धेत्वाभासः ।

नाप्यदर्शनमात्राद् व्यावृत्तिः; विप्रकृष्टेष्वसर्वदर्शिनोऽदर्शनस्याभावासाधनाद्, अर्वाग्दर्शनेन सतामपि केषाञ्चिदर्थानामदर्शनाद् ।

बाधकं पुनः प्रमाणम् । यत्र क्रमयौगपद्यायोगो न तस्य क्वचित् सामर्थ्यम् ।

---

अन्यथा तत्र साध्यविपर्ययेऽस्य हेतोर्बाधकस्यासिद्धौ सत्यां संशयः । संश्च स्यान्नित्यश्च इत्यादि दुर्निवारः स्यादिति शेषः । दुःखेन निवार्यत इति दुर्निवारः, दुर्न्निषेध इत्यर्थः । बाधकग्रहणेनात्र विरुद्धस्य प्रत्युपस्थापकं प्रमाणं गृह्यते । बाधकप्रमाणप्रत्युपस्थापितं वा हेतुविरुद्धम् ।

ननु चानुपलब्धिमात्रादेव साध्यविपर्यये हेतोर्व्यावृत्तिनिश्चयादसन्दिग्धो व्यतिरेको भविष्यति, तत् किमुच्यसे—शङ्काया व्यावृत्तिः ? बाधकप्रमाणानुपदर्शने तु स एव न सिध्यति तत् कथमियं निवर्त्तेतेति ? यदि नामेयमाशङ्का न व्यावर्त्तते, ततः किम् ? इत्याह—ततः आशंकाया अनिवृत्तेरनैकान्तिकः स्याद्धेत्वाभासः । कस्माद् ? व्यतिरेकस्य साध्याभावे हेतोरभावलक्षणस्य सन्देहात् कारणात् सन्दिग्धविपक्षव्यावृत्तिकः स्याद् हेत्वाभास इत्यर्थः ।

किं पुनरदर्शनेऽप्यनिवृत्तिराशंकायाः, यावता तददर्शनमभावं साधयति ? इत्याह—नाप्यदर्शनमात्राद्व्यावृत्तिः । साध्याभावे हेतोः सिध्यतीति वाक्याध्याहारः । अपिशब्दो यस्मादर्थे । मात्रग्रहणमुपलब्धिलक्षणप्राप्तादर्शनस्य व्यवच्छेदार्थम् । कुत एतत् ? विप्रकृष्टेषु देशकालस्वभावविप्रकर्षैः पदार्थेषु चीनदाशरथिपिशाचप्रभृतिषु यददर्शनं तस्याभावासाधनात् । कस्याभावं साधयतीति चेत् ? प्रकृतत्वाद् विप्रकृष्टानामिति गम्यते ।

ननु समासादितसकलपदार्थव्यापि जानाति स यस्यादर्शनमभावं विप्रकृष्टानामपि साधयति, तत् कथमिदमुक्तम् ? इत्याह—असर्वदर्शिन इति । सर्वं द्रष्टुं शीलमस्य, ततो नञा समासः । कस्मात् तस्याप्यदर्शनमभावं न साधयतीति ? अर्वाग्दर्शनेन पुंसा सतामपि केषाञ्चिदर्थानां विप्रकृष्टानामदर्शनात् । इदमागूरितम्—नेह सर्वदर्शिदर्शनं समस्तवस्तुसत्तां प्राप्नोति, येन तन्निवर्त्तमानमर्थसत्तां वृक्षवच्छिशपां निवर्त्तयेद्, भेदात् । नापि तत्तस्याः कारणं येन वह्निवद् धूमं निवर्त्तमानं निवर्त्तयेत्, तदभावेऽपि भावादिति ।

बाधकं पुनः प्रामाणमित्यादि । अत्र केचिदेवं पूर्वपक्षयन्ति—किं पुनर्बाधकं प्रमाणं यस्योपदर्शनेन मौलस्य हेतोर्व्याप्तिप्रतीतिर्भवति ? इत्याह—बाधकं पुनरित्यादि । तेषां कथमत्र व्याप्तिसाधनं विपर्यये बाधकप्रमाणोपदर्शनम् 'यदि न सर्वं सत् कृतकं वा प्रतिक्षणविनाशि स्याद्' इत्यादिनाऽत्रैव प्रागर्थस्याभिहितत्वात् पुनरुक्तदोषप्रसक्तिर्न भवतीति चिन्त्यमेतत् तैरेवेत्यलं परदोषसंकीर्त्तनेन ।

तस्मादन्यथा पूर्वपक्ष्यते—यस्यापि तर्हि बाधकं प्रमाणमस्ति, तस्य

अस्ति चाक्षणिके स इति प्रवर्तमानमसामर्थ्यमसल्लक्षणमाकर्षति। तेन 'यत् सत् कृतकं वा तदनित्यमेव' इति सिद्ध्यति।

तावता साधनधर्ममात्रान्वयः साध्यधर्मस्य स्वभावहेतुलक्षणं च सिद्धं भवति।

एवं स्वभावहेतुप्रयोगेषु समर्थितं साधनाङ्गं भवति। तस्यासमर्थनं साधनाङ्गावचनम्। तद् वादिनः पराजयस्थानम्; प्रारब्धार्थासाधनात्। वस्तुतः समर्थस्य हेतोरुपादानेऽपि सामर्थ्याप्रतिपादनात्॥

---

कथमयमदोष इति ? अत आह—बाधकं पुनः प्रमाणम्। प्रवर्त्तमानमसामर्थ्यमाकर्षतीति क्रियापदम्। कीदृशम् ? सल्लक्षणम्। कथं प्रमाणम् यस्य पदार्थस्य क्रमयौगपद्यायोगः। अर्थक्रियाया इत्यध्याहार्यम्। न तस्य क्वचित् कार्ये सामर्थ्यम्, यथा नभस्तलारविन्दस्येत्यध्याहार्यो दृष्टान्तः। अस्ति चाक्षणिके भावे स क्रमयौगपद्याभ्यामर्थक्रियाया अयोग इत्येवम्प्रवर्त्तमानम्। ततः किं जातमिति चेद् ? आह—तेन कारणेन, येन तत् प्रवर्त्तमानमसल्लक्षणमसामर्थ्यमाकर्षयति, यत् सत् कृतकं वा तदनित्यमेवेति सिध्यति।

एवमपि किं सिद्धं भवति ? इत्याह—तावता च बाधकप्रमाणोपदर्शनमात्रेण साधनधर्ममात्रान्वयः। सिध्यतीति वर्त्तते। केन ? इत्याह—साध्यधर्मस्य। कर्त्तरि चेयं षष्ठी प्रतिपत्तव्या। तेन साध्यधर्मेण साधनधर्ममात्रस्यानपेक्षितहेत्वन्तरव्यापारस्यान्वयः सिध्यतीति वाक्यार्थः सन्तिष्ठते। न त्वेवं करणीयम्—साधनधर्ममात्रेणान्वयः साध्यधर्मेति। एवं हि साध्यमेव हेतुनाऽविनाभूतं जातं न हेतुरिति हेतोरगमकत्वं भवेत्।

ततश्च को गुणो लभ्यते ? इत्याह—स्वभावहेतुलक्षणं च सिद्धं भवति। तावता चेति वर्त्तते। स्वभावहेतुलक्षणं च तद्भावमात्राद्धर्मिनिःस्वभावोऽपि प्रत्ययाभावेऽपुनर्यत्नापेक्षितत्वात्। कलधौतमलविशुद्धिवदित्येवमादयो हेतवः प्रतिलब्धसामर्थ्यातिशयाः सन्त्येव।

एवं स्वभावहेतोः साधनाङ्गसमर्थनमभिधायाधुना निगमयति—एवमित्यादिना। एवं च यदि न समर्थनं क्रियते, तदेव तद्वादिनः पराजयमावहतीति प्राक् प्रतिज्ञातमेवायोजयति—तस्यासमर्थनमित्यादिना। कस्मादेवम् ? प्रारब्धार्थासाधनादिति। न ह्यसमर्थितं साधनमारब्धमर्थं साधयितुं समर्थम्; विवादाभावप्रसङ्गात्। तथा हि सार्वज्ञज्ञानसाधने संस्कारोत्कर्षभेदेन सम्भवे प्रकर्षपर्यन्तवृत्तयः प्रज्ञादयो गुणाः स्थिराश्रयवर्त्ति सकृद् यथाकथञ्चिदाहितविशेषं विना हेतुरात्मनीति।

ते च यद्यसमर्थिता एव ज्ञाप्यसमर्थं ज्ञापयेयुस्तदा जैमिनिप्रभृतीनां विवादाभाव एव भवेत्। नन्वेतदेव न सम्भाव्यते यत् परमार्थतः समर्थस्यापि हेतोरभिधाने निग्रहार्होऽसौ ? इत्याशङ्कायां स्वाभिप्रायं प्रकटयति—वस्तुतः समर्थस्य हेतोरुपादानेऽपि सामर्थ्याप्रतिपादनादिति। अयमस्य भावः—यदि

## २. कार्यहेतौ साधनाङ्गसमर्थनम्

**कार्यहेतावपि साधनाङ्गस्य समर्थनम्। यत् कार्यं लिङ्गं कारणस्य साधनायोपादीयते, तस्य तेन सह कार्यकारणभावप्रसाधनं भावाभावप्रसाधनप्रमाणाभ्याम्। यथा—'इदमस्मिन् सति भवति'। सत्स्वपि तदन्येषु समर्थेषु तद्धेतुषु तदभावे न भवतीति।**

---

नामानेन परमार्थतः समर्थो हेतुरुपात्तः, तथापि तस्य सामर्थ्यं साधनाङ्गासमर्थनान्न प्रतिपादितमनेनेति असमर्थकल्प एवासौ। न ह्यर्थस्य परार्थानुमाने गुणदोषावधिक्रियेते। किं तर्हि? वचनस्य; वक्तुरयथार्थाभिधानेनोपालम्भात्। अत एव यत्राप्यर्थस्य गुणदोषावधिक्रियेते, तत्रापि वचनद्वारेणैव। एवमेतदभ्युपगन्तव्यम्; अन्यथा 'क्षणिकः शब्दः' इत्येतावन्मात्रमेव प्रतिज्ञावचनमभिधाय स्थातव्यम्; तथाभिधानादेवाभिमतार्थसिद्धेरिति॥

एवं स्वभावहेतावुपदर्श्य साधनाङ्गसमर्थनमिदानीं कार्यहेतावाह—कार्यहेतावपीत्यादिना। किं पुनस्तद्? इत्याह—यत्कार्यं लिङ्गं धूमादिसंज्ञकं कारणस्य दहनादेः साधनायोपादीयते, तस्य धूमादेस्तेन दहनादिना सह कार्यकारणभावप्रसाधनलिङ्गलिङ्गयोर्हेतुफलभावसाधनमेव यत्तदेव कार्यहेतौ साधनाङ्गसमर्थनमित्यर्थः।

केन पुनस्तयोः कार्यकारणभावः प्रसाध्यते? इत्याह—भावाभावसाधनप्रमाणाभ्यामिति। भावाभावौ कार्यकारणयोः सदसत्त्वे, तयोः साधने ते च ते प्रमाणे चेति व्युत्पत्तिक्रमः। साधनशब्दश्च करणसाधनः। भावाभावसाधनप्रमाणे च प्रत्यक्षानुपलम्भो यथाक्रमम्। कथं पुनः प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावः प्रसाध्यते? इत्याह—यथेत्यादि। इदं धूमादिसंज्ञकं कार्यमस्मिन् दहने सति भवति। उपलब्धिलक्षणप्राप्तं सदनुपलब्धं प्रागिति वाक्यशेषः कार्यः। अन्यथा दहनस्य तत्र धूमे व्यापार एव न कथितः स्यात्; दहनसन्निधानात् प्रागप्येतदासीदित्याशङ्कासम्भवात्। यथोक्तानुपलम्भग्रहणे तु नैवेयमवतरति। अत एव च प्रमाणविनिश्चियादावप्येवमेवाभिहितमिति। अनेन च प्रत्यक्षप्रमाणव्यापार उक्तः। तथा हि 'अस्मिन् सतीदं भवति' इति प्रत्यक्षेणैतद् गम्यते।

सम्प्रत्यनुपलम्भस्य व्यापारं निर्दिदिक्षुराह—सत्स्वपीत्यादि। तस्माद् दहनादन्येषु विद्यमानेष्वपि। तथा तस्य धूमस्य हेतुष्विन्धनानिलादिषु समर्थेषु सत्स्वपीति वर्त्तते। चकारश्चात्र लुप्तनिर्दिष्टः प्रतिपत्तव्यः—समर्थेषु चेति। तस्य दहनस्याभावे न भवति। इदमित्यधिकृतम्। इति एवमित्यस्यार्थे वर्त्तते, व्यवच्छेदे वा। तदनेन गवाश्वादीनां तद्देशकालसन्निहितानामपि धूमजननं प्रति कारणत्वं निषिद्धम्; यतो यदि ते गवाश्वादयस्तस्य कारणं भवेयुः, तदा व्यतीतेऽप्यग्नौ तेषां सन्निहितत्वाद् धूमोत्पत्तिप्रसङ्गः। इन्धनादिकारणान्तरापेक्षास्ते तस्य जनका भवन्ति, ततोऽयमप्रसङ्ग इति चेत्? यद्येवम्, तेऽपि तत्र सन्निहिता एवेति न

एवं ह्यस्यासन्दिग्धं तत्कार्यत्वं समर्थितं भवति। अन्यथा केवलं 'तदभावे

व्यावर्त्तते प्रसङ्ग इति। दहनमपि सहकारिणमपेक्ष्य तं जनयन्ति ततो न युक्तमिदमिति चेत् ? नन्वेवं सत्यायातं दहनस्य धूमोत्पत्तिं प्रति कारणत्वम्, तत्किमिदमुच्यते—पूर्वापरव्याहतं गवाश्वादय एव तस्य कारणं न दहन इति ! अस्तु तर्हि तस्यापि दहनस्य कारणत्वं गवाश्वादीनामपीति चेत् ? न युक्तमेतत्; तत्र व्यतिरेकगतेर्दुर्घटत्वात्। तथा हि अपगतेष्वपि गवादिषु, सति च दहने तत्रेन्धनादिकलापे भवत्येव हुतभुग्घेतोरुत्पत्तिः; यतः कारणप्रबन्धं कार्यप्रबन्धं चाश्रित्य हेतुफलभावश्चिन्त्यते भावानाम्—कारणप्रबन्धपूर्वः कार्यप्रबन्ध इति। तत्तु क्षणभेदम्। नहि समासादितज्ञानातिशयानाम् 'अयं पूर्वः क्षणः, अयमुत्तरः' इति विशेषावलम्बि ज्ञानमुदेति। अर्वाग्दर्शिभिश्चाधिकृत्य प्रमाणलक्षणं प्रणयितं कृपावद्भिः। यथोक्तम्—"सांव्यवहारिकस्यैतत् प्रमाणस्य रूपमुक्तमत्रापि परे विमूढा विसंवादयन्ति लोके" इति। वासगृहादिषु तर्हि दहनाभावेऽपि धूमसद्भावाद् व्यभिचार इति चेत् ? भूतस्यापि दहनप्रबन्धपूर्वकत्वमस्त्येव। साक्षात्पारम्पर्यकृतस्तु विशेषः। अवयन्ति च विच्छिन्नाविच्छिन्नदर्शनप्रबन्धयोर्धूमप्रबन्धयोर्वासगृहादिरसवतीप्रदेशादिभाविनोः स्फुटमेव भेदं विचित्रभावस्वभावविवेकाभ्यासबलोपजातविदग्धबुद्धय इति भेदेनाप्यनुमानमविरुद्धम्। अत एव देशकालाद्यपेक्षमनुमानं कार्यहेतौ विरुद्धकार्योपलम्भे चोक्तम्—

"इष्टं विरुद्धकार्येऽपि देशकालाद्यपेक्षणम्।
अन्यथा व्यभिचारि स्याद् भस्मेवाशीतसाधने"[१] ॥ (प्र० वा० ३. ६) इति।

अथापि कश्चिद् विविधभावभेदप्रविचयचातुर्यातिशयशलाकोन्मीलितप्रज्ञाचक्षुष्ट्वाद् 'अयं ज्वलनजनितो धूमः, अयं धूमजनितः' इति विवेचयति, तथापि न सुतरां व्यभिचारः। तथा हि नाग्निजन्यो धूमो धूमाद् भवति; निर्हेतुकत्वप्रसङ्गात्। तथा च यदुक्तम्—

"अतश्चानग्नितो धूमो यदि धूमस्य सम्भवः।
शक्रमूर्ध्नस्तथा तस्य केन वार्येत सम्भवः" ॥ ( ) इत्यादि,

तदसारमित्यप्युपेक्षते। तस्मान्न तेषां गवाश्वादीनां तत्र कारणत्वमस्तीति निश्चयः समाधीयताम्। अतश्च दहन एव तस्य कारणं नाश्वादय इति स्थितमेतत्।

यथा[२] च दहनस्य कारणत्वं योजितमन्वयव्यतिरेकाभ्यां यथोक्तप्रकाराभ्याम्, एवमिन्धनादिसामग्र्याः सर्वस्याः कारणं योजयितव्यम्। यदि वैकवाक्यतयैव व्याख्यायते—सत्स्वपि तस्माद्दहनादन्येषु समर्थेषु तद्धेतुष्विन्धनादिष्वस्याभावे न भवतीति। गवाश्वादीनां त्वहेतुत्वं व्यतिरेकाभावतया यथोक्तेन विधिना बोद्धव्यम्।

ननु चैतदेव युक्तं वक्तुम्—तदभावे न भवतीति, अथ किमर्थं 'सत्स्वपि तदन्येषु समर्थेषु तद्धेतुषु' इत्युच्यत इति चेद् ? आह—एवं हीत्यादि। यस्मादेवं सत्स्व-

१. गत्येवासीत साधन—रा०। २. तथा—रा०।

न भवति' इत्युपदर्शनेऽन्यस्यापि तत्राभावे सन्दिग्धमस्य सामर्थ्यम्। अन्यत् तत्र समर्थम्, तदभावात् तन्न भूतम्।

एतन्निवृत्तौ पुनर्निवृत्तिर्यदृच्छासंवादः। मातृविवाहो हि तद्देशजन्मनः

---

पीत्यादिनाऽभिधीयमानोऽस्य धूमस्य तत्कार्यत्वमग्निकार्यत्वं समर्थितं निश्चितमसन्दिग्धं भवति। अन्यथा यद्येवं नोपदर्श्यते, केवलं तदभावेन भवतीत्युपदर्श्यते; तदा तदभावे न भवतीत्युपदर्शने क्रियमाणेऽन्यस्यापि तु गवाश्वादेरिन्धनादेश्च तत्राग्निशून्यभूभागेऽभावे सति सन्दिग्धमस्याग्नेः सामर्थ्यं भवतीति कुतः कारणभावनिश्चय इति समुदायार्थः। तत एवाह—सत्सु हि समर्थेषु तद्धेतुषु कार्यानुत्पत्तिः कारणान्तरविकल्पं सूचयतीति। सन्दिग्धमस्यान्यथा सामर्थ्यमित्येतदेव अन्यत्तत्रेत्यादिना सूचयति। तत्र धूमाश्वकार्येऽन्यदेवाश्वादि। यदिन्धनादिसमर्थं तदभावात्तन्न भूतं दहनशून्यदेशे। अस्य स्वभावात् तन्न जातमिति कुतोऽयं निश्चय इत्यर्थः।

यद्यन्यत्तत्र समर्थं तदभावात् तन्न जातमेतन्निवृत्तौ निवृत्तिः, तर्ह्यस्य कथमिति चेद्? आह—एतन्निवृत्तावित्यादि। एतस्याग्नेर्निवृत्तौ धूमनिवृत्तिर्येयं धूमस्य सा यदृच्छासंवादः। काकतालीयन्यायेनेत्यर्थः। यदा तु सत्स्वपीति क्रियते, तदा सर्वेषां तत्र सन्निपाताद् 'एतस्यैव निवृत्तावस्य निवृत्तिः' इति निश्चयान्न यदृच्छासंवाद इत्यभिप्रायः।

किंवदेतन्निवृत्तौ निवृत्तिर्यदृच्छासंवादः? इत्याह—मातृविवाह इत्यादि। मातुर्विवाह उचित आचरितो यस्मिन् देशे स तथा। ततो देशशब्देन सह विशेषणसमासः, तत्र। स च जन्माश्रयत्वादुपचारात्। जन्म उत्पत्तिर्यस्य तस्य। पारसीकदेशभाविनं इति यावत्। देशान्तरे मालवकादिदेशे यथाऽभावो मातृविवाहाभावे यदृच्छासंवादस्तद्वदत्रापि। तथा हि मृद्विशेषाभावाद्देशान्तरे तस्याभावः, न तु मातृविवाहाभावादिति काकतालीयः, तदभावे तस्याभाव इति। एवं चैतत्।

अथ वा अन्यथा व्याख्यायते—यथेदं धूमादिकार्यमस्मिन्नग्नीन्धनादिकारणकलापे सति भवति। वाक्याध्याहारस्तु पूर्ववत् कार्यः। तस्य प्रयोजनं तदेवावगन्तव्यम्। इदं प्रत्यक्षव्यापारसङ्कीर्तनम्। सत्स्वपीत्यादिनाऽनुपलम्भस्य तदन्येषु पुनस्तस्मादग्न्यादिकारणकलापात् अन्येषु गवाश्वादिषु समर्थेषु तद्धेतुष्वस्याग्न्यादिकारणकलापस्याभावे न भवति। एतच्च परमतापेक्षमुक्तम्, न तु तेषां तद्धेतुत्वमस्ति। यदि पुनस्ते तस्य हेतवः स्युः, तदा तत्कलापसन्निधेः प्रागपि पश्चादिव धूमोत्पादप्रसङ्गः। तत्सापेक्षतया तत्कृतकत्वं तेषामिति चेत्? आयातं तर्हि तस्य कलापस्य कारणत्वम्।

भवतु तर्हि उभयोरपि, न नः काचित् क्षतिरिति चेत्? न; व्यतिरेकगतेस्तत्र[1] दुर्घटत्वादित्युक्तम्। यथाऽपगतेष्वपि सर्वेषु तेषु तस्मिन् कलापे सति भवत्येव तस्य सम्भव इति तदभावे न भवतीति वाच्यम्, तत्किमर्थं सत्स्वपीत्याद्युक्तमिति'

---

१. व्यतिरेकगतस्तत्र—रा०।

पिण्डखर्जूरस्य देशान्तरेषु मातृविवाहाभावेऽभाववत्। एवं हि[1] समर्थितं तत् कार्यं सिद्ध्यति।

सिद्धं सत् स्वसम्भवेन तत्सम्भवं साधयति; कार्यस्य कारणाव्यभिचारात्।
अव्यभिचारे च स्वकारणैः सर्वकार्याणां सदृशो न्यायः।
एवमसमर्थनं कार्यहेतावपि साधनाङ्गावचनं तद् वादिनः पराजयस्थानम्।
असमर्थिते तस्मिन् कार्यत्वासिद्धेरर्थान्तरस्य तद्भावाप्रतिबद्धस्वभावस्य भावे

---

चेद् ? आह—एवं हीत्यादि। अन्यथा तस्य कलापस्याभावे न भवतीत्युपदर्शने तस्यापि गवाश्वादेस्तत्राभावे सति सन्दिग्धमस्य कलापस्य सामर्थ्यं भवेत्; यतोऽन्यद् गवाश्वादि तत्र शक्तम्, तदभावात्तन्न भूतमेतस्य कलापस्य निवृत्तौ निवृत्तिर्यदृच्छासंवादः। शेषं पूर्ववत्।

एवं[2] कार्यकारणभावनिश्चयोपायविधिमुक्त्वा[2] प्रकृतमुपसंहरति—एवमित्यादिना। एवं यथोक्तेन विधिना तद् धूमादि तस्य वह्न्यादेः कार्यं समर्थितं निश्चितं सिध्यति भवति। यदेवासमर्थितमसन्दिग्धं सिध्यतीति निश्चीयते। अथ वा-एवं प्रत्यक्षानुपलम्भाभ्यां समर्थितं[3] सत्तत् तस्य कार्यं सिध्यति।

यदि नाम सिध्यति तत् किम्? इत्याह-सिद्धं सत् स्वसम्भवेन आत्मसन्निधानेन तत्सम्भवं तस्य कारणस्य सन्निधानं साधयति। देशकालाद्यपेक्षयेत्याध्याहर्त्तव्यम्। एतदुक्तं भवति—कार्यकारणभावनिश्चयात् सिद्धं सदुत्पत्तिलक्षणं प्रतिवस्तु यत्रैवमेतादृश उपलभ्यते तत्रैव स्वसत्तामात्रेण देशकालाद्यपेक्षया तत् स्वकारणं गमयतीति। किं कारणम्? इत्याह-कार्यस्य कारणाव्यभिचारादिति। अन्यथा हि तत्तस्य कार्यमेव न स्यात्; तद्व्यभिचारात्। नहि यद्व्यतिरेकेण यद् भवति तत्तस्य कार्यं युक्तम्, कुण्डलमिव केयूरस्येत्यभिसन्धिः।

ननु यदि नाम धूमोऽग्निकार्यत्वं न व्यभिचरति, अन्यस्य त्वङ्कुरादेः स्वकारणैरेव बीजादिभिरव्यभिचार इति कुत एतत्? इत्याह—अव्यभिचारे चेत्यादि। इदमुक्तं भवति-यदा धूमस्य स्वकारणाव्यभिचारस्तदुत्पत्तेः सिद्धः, तदा बीजादिभिरात्मीयैः कारणैः सहाङ्कुरादीनां सर्वकार्याणां सदृशोऽव्यभिचारन्यायः। तथा हि तेऽपि यथोक्तप्रकाराभ्यां प्रत्यक्षानुपलम्भाभ्यां तत्कार्यतया सिद्धाः सन्तस्तदव्यभिचारिणः सिद्ध्यन्ति। एतत् साधनाङ्गसमर्थनं कार्यहेतौ। एतद्विपरीतं चासमर्थनम्। तद् वादिनः पराजयाधिकरणमिति दर्शयन्नाह—एवमित्यादि। एवमिति प्रत्यक्षानुपलम्भाभ्यां यथोक्तप्रकाराभ्यां कार्यहेतावपि न केवलं पूर्वोक्तेन प्रकारेण स्वभावहेतावसमर्थनं वादिनः पराजयस्थानमित्यपिशब्दः।

कस्मादेवम्? इत्याह—असमर्थित[4] इत्यादि[4]। असमर्थिते तस्मिन् कार्यकारणभावे लिङ्गलिङ्गिनोः, लिङ्गस्य वा तत्कार्यत्वे आरब्धार्थासिद्धेरिति क्रियापदम्। आरब्धोऽर्थः कारणस्य सत्तासाधनम्, तस्यासिद्धेस्तत्पराजयस्थानमिति प्रकृतेन सम्बन्धः।

---

१. रा० पुस्तके नास्ति। २-२. एवाङ्का०—रा०।
३. समर्थित-पा०। ४-४. असमर्थितमि०—रा०।

तद्भावनियमाभावात्, आरब्धार्थासिद्धेर्वस्तुतः कार्यस्याप्युपादाने तदप्रतिपादनात् ॥

३. अनुपलब्धावपि साधनाङ्गसमर्थनम्

अनुपलब्धावपि प्रतिपत्तुरुपलब्धिलक्षणप्राप्तस्याऽनुपलब्धिसाधनं समर्थनम्, तादृश्या एव चानुपलब्धेरसद्व्यवहारसिद्धेः ।

---

एतदेव कुतः ? इत्याह—अर्थान्तरस्य धूमादेर्भावे सत्त्वे तस्यान्यादेर्भावनियमाभावात् । नियमग्रहणं यदृच्छासंवादनिरासार्थम् । अर्थान्तरस्यापि तद्भावे प्रतिबद्धस्वभावस्य भावे भवत्येव तद्भावनियम इत्यत आह—तद्भावाप्रतिबद्धस्वभावस्येति । तद्भावेऽन्यादिभावेऽप्रतिबद्धोऽनायत्तः स्वभावोऽस्येति विग्रहः । एतच्चार्थान्तरस्य भावे तद्भावनियमाभावादित्येतस्य कारणमवगन्तव्यम् । प्रयोगः पुनः—योऽर्थान्तरभूतो यस्मिन्न प्रतिबद्धस्वभावस्तस्य भावे न तद्भावनियमः । तद्यथा—नूपुरस्य भावे मुकुटस्य । अर्थान्तरभूतश्चायं धूमादिरप्रतिबद्धस्वभावस्तस्मिन्नग्न्यादाविति व्यापकानुपलब्धिः । व्यापकविरुद्धोपलब्धिविधिना वा हेत्वर्थकल्पना । तद्भावाप्रतिबद्धस्वभावत्वमेव कुतः ? इत्याह—कार्यत्वासिद्धेरिति । एतत् पुनरसमर्थिते तस्मिन्निति बोद्धव्यम् । तत् च परमार्थतस्तेन कार्यहेतुरेवोपात्तः, तद्यदि नाम तत्कार्यं तेन न समर्थितम्, तथाहि कथमसौ निगृहीतः ? इत्याह—वस्तुतः कार्यस्याप्युपादानप्रतिपादनाद्विति । तत्कार्यत्वस्येति विशेषः ॥

एवं कार्यहेतावपि साधनाङ्गसमर्थनमभिधायानुपलब्धावाह—अनुपलब्धावपि समर्थनमिति सम्बन्धः । साधनाङ्गस्येत्यध्याहार्यः । किं पुनस्तद् ? इत्याह—अनुपलब्धिसाधनम् । किं यस्य कस्यचित् ? नेत्याह—उपलब्धिलक्षणप्राप्तस्येति । दृश्यस्वभावस्य, नान्यस्येति यावत् । उपलब्धिः=ज्ञानम् । उपलब्धिशब्दस्य भावकरणसाधनतया ज्ञानपर्यायत्वात्तस्या लक्षणं कारणम्; लक्षणशब्दस्य करणसाधनत्वेन कृतकाभिधायित्वात् । तच्च प्रत्ययान्तरसाकल्यम्, स्वभावविशेषश्च, तद्व्याप्तस्यानुपलब्धिः, तस्याः साधनं प्रतिपादनमिति व्युत्पत्तिक्रमः ।

कथमेवंविधस्यानुपलब्धिरिति चेत् ? नोच्यते तस्य तत्रैवेति, अपि त्वन्यत्र तज्जातीयस्य । कस्य पुनरेवंविधस्यानुपलब्धिः प्रसाध्यते ? इत्याह—प्रतिपत्तुः । प्रतिवादिनः । यदि चोपलब्धिलक्षणप्राप्ताः पिशाचादयोऽपि भवन्ति तज्जातीयानाम्, अन्येषां प्रभाववतां वा, तत्किं तेषामप्यनुपलब्धिसाधनं साधनाङ्गसमर्थनं भवति ? नेत्याह । प्रतिपत्तुः । एतदुक्तं भवति—य एवासौ प्रतिपाद्यस्तस्यैव यदुपलब्धिलक्षणं चायाति तस्यैवानुपलब्धिसाधनम्, नान्यस्येति । किं पुनः कारणमेवम्प्रकारस्यैवानुपलब्धिसाधनम्, नान्यस्य ? इत्याह—तादृश्या एवानुपलब्धेरसद्व्यवहारसिद्धेरिति । अनुपलब्धिलक्षणप्राप्तानुपलब्धेः संशयहेतुतया अगमकत्वादिति भावः । असद्व्यवहारसिद्धेरिति वचनम्—असद्व्यवहार एव तया साध्यते, न त्वभावः; स्वभावनुपलब्धेः स्वयमभावरूपत्वादिति प्रदर्शनार्थम् । असद्व्यवहारग्रहणं चोपलक्षणार्थम् । तेनासज्ज्ञानशब्दावपि ग्राह्यौ ।

**अनुपलब्धिलक्षणप्राप्तस्य प्रतिपत्तृप्रत्यक्षोपलब्धिनिवृत्तावप्यभावासिद्धेः।**

**तत्रोपलब्धिलक्षणप्राप्तिः स्वभावविशेषः। कारणान्तरसाकल्यं च स्वभावविशेषो यन्न त्रिविधेन विप्रकर्षेण विप्रकृष्टम्। यदनात्मरूपप्रतिभासविवेकेन प्रतिपत्तृप्रत्यक्षप्रतिभासरूपम्। तादृशः सत्स्वन्येषूपलम्भप्रत्ययेषु तथाऽनुपलब्धोऽसद्व्यवहारविषयः[1], अन्यथा सति लिङ्गे संशयः।**

---

एतत् पुनः कुतोऽवसीयते इति चेद्? आह—अनुपलब्धिलक्षणप्राप्तस्यार्थस्य प्रतिपत्तुः प्रत्यक्षं तदेवोपलब्धिस्तस्यानिवृत्तावपि सत्यामभावासिद्धेः। अभावग्रहणमभावव्यवहारशब्दज्ञानोपलक्षणम्। उपलब्धिलक्षणं च ज्ञानपरिग्रहेण तत्प्रमितवस्तुव्युदासाय।

का पुनरियमुपलब्धिलक्षणप्राप्तिः, यद्योगादुपलब्धिलक्षणप्राप्त इत्युच्यते? इत्याह—तत्रेत्यादि। तत्रश्रुतिर्वचनोपन्यासार्था। स्वभावविशेषः। किमियदेव? नेत्याह—कारणान्तरसाकल्यं च। तस्मात् स्वभावविशेषाद्यान्यन्यानि कारणानीन्द्रियमनस्कारादीनि, तानि कारणान्तराणि, तेषां साकल्यं सामग्र्यम्। स्वभावविशेषापेक्षया समुच्चयार्थश्चकारः।

कः पुनरयं स्वभावविशेष इत्याह—स्वभाव इत्यादि। यद्ययं त्रिविधेन विप्रकर्षेण व्यवधानेन देशकालस्वभावलक्षणेन न विप्रकृष्टं मेरुरामसुरादिरूपवत् स्वभावविशेष उच्यते। तमेव स्पष्टयति—यदित्यादिना। न आत्मरूपोऽनात्मरूपः, पररूप इत्यर्थः। स चासौ प्रतिभासश्च तस्य विवेकोऽभावस्तेनाकारेण यत्प्रतिपत्तुः प्रत्यक्षम्, तत्र प्रतिभासितुं[2] शीलं यस्य रूपस्य स्वभावस्य तद्रूपं तथोक्तम्।

अथ वा—रूपशब्देन[3] सह विशेषणसमासः कार्यः। सत्युपलम्भप्रत्ययान्तरसाकल्य इत्युपस्क्रियते। यः सजातीयविजातीयरहितेनात्मना प्रतिभासते स्वज्ञाने तदन्यकारणसमवधाने सति स स्वभाव इति यावत्।

तादृश इति। त्रिविधविप्रकर्षाविप्रकृष्टरूपः पदार्थः, तथाऽनात्मरूपप्रतिभासविवेकेन प्रतिपत्तृप्रत्यक्षप्रतिभासेनाशयेनानुपलब्धः। स न असद्व्यवहारस्य विषयो भवति। असद्व्यवहारप्रतिपत्तियोग्यो भवतीत्यर्थः। विद्यमानोऽपीन्द्रियस्यालोकस्य मनस्कारस्य वाऽभावान्नोपलभ्यते तादृशः, तत् कथमसद्व्यवहारविषयो भवतीति चेद्? आह—सत्स्वन्येषूपलम्भकारणेष्विति।

नन्वविप्रकृष्टोऽपि घटादिरुपलम्भकारणान्तरसमवधानेऽपि च सन्तानविपरिणामापेक्षत्वान्नोपलभ्यते, न हि हेत्वन्तरसन्निधानमिति स्वफलोत्पादनानुगुणः परिणामो भवति कारणस्य; तथा हि—सत्यामपि पृथिवीबीजजलादिसामग्र्यामतिबहुनैव कालेन तालबीजस्य स्वकार्योदयानुकूला परिणतिर्भवति, शणादिबीजस्य त्वनन्तरमेव, तथात्रापि भविष्यतीति? किञ्च—अन्यप्रभाववतायोगे पिशाचमाया-

---

१. विषयस्तो०—रा०। २. तत्राप्रति०—रा०। ३. रूपशब्देण—पा०।

अत्रापि सर्वमेवंविधमसद्व्यवहारविषय इति व्याप्तिः, कस्यचिदसतोऽभ्युपगमे तल्लक्षणाविशेषात् ।

---

कारादिनाऽधिष्ठितो भवति यदायं भावः, तदा विद्यमानोऽपि नोपलभ्यते, तत् कथमुक्तम्—तादृशः सत्स्वन्येषूपलम्भकारणेष्वनुपलब्धोऽसद्व्यवहारविषय इति ? नूनं भवान् न्यायबिन्दावप्यकृतपरिश्रमः । तथाहि अत्रोक्तम्—स्वभावो यः सत्स्वन्येषूपलम्भकारणेषु सन्प्रत्यक्ष एव भवतीति (न्या० २. १४) । यश्चायं सन्तानपरिणाममपेक्षते, यश्च प्रभाववताधिष्ठितः, स स्वभावविशेष एव न भवति; सकलतदन्योपलम्भप्रत्ययसमवधानेऽपि स्वरूपविषयोपलम्भजनकत्वात् । तथैवंविधस्य पिशाचादिस्वभावाविशिष्टरूपस्याभावव्यवहारविषयता न साध्यते । किं तर्हि ? इन्द्रियाद्युपलम्भप्रत्ययान्तरसन्निधाने यः सन् प्रत्यक्ष एव भवति तस्य । नैवं तर्हि सर्वथाऽभावः साधितो भवतीति चेत् ? सुष्ठ्वनुकूलमाचरसि । यतोऽनन्तरमेवोक्तम्—य एवायमनुपहतेन्द्रियादिसाकल्ये दर्शनपथमुपयाति, तस्य च तत्साकल्येऽनुपलम्भेऽस्य च व्यवहारविषयता साध्यते, न तु पिशाचादिस्वभावाविशिष्टरूपस्येति । न च तथाविधस्यापि सकलतदन्योपलम्भप्रत्ययसमवधानेऽनुपलब्धस्यास्तित्वं युक्तम्; अनुपलब्धेरेवायोगात्, उपलम्भजनने कस्यचिदपेक्षणीयस्याभावात् ।

प्रमाणविनिश्चये तु स्पष्टीकृतमेवेदम्—न कार्यकालेऽभावप्रतिपत्तेरित्यादिना । एतेनैव यदेकेनावश्यं सामग्रिसाकल्येऽपि परिणामस्तालगणबीजवदित्यादिना, स तमतिशयवत् मतिमतो मनागप्यनवगच्छन्तश्चोद्यचुञ्चवश्चोचुदुः, तत्र सर्वमयं दुःस्थितं वेदितव्यमित्यलमप्रतिष्ठितबालप्रलापैरिति विरम्यते ।

तस्मादुपलब्धिलक्षणप्राप्तानुपलब्धिरेवाभावव्यवहारसाधनीति स्थितमेतत् ।

यतश्चैतदेवम्, ततस्तस्मात् कारणादन्यथा सति लिङ्गे समवाय उपलब्धिलक्षणप्राप्तानुपलब्धिमुक्त्वा, यदन्यदसद्व्यवहारसाधनमनुपलब्धिमात्रं लिङ्गमुपादीयते । तदा तस्मिन् सति संशयो भवति नास्त्यसद्व्यवहारनिश्चयः; उपलब्धिनिवृत्तावप्यर्थाभावासिद्धेरिति समुदायार्थः ।

यदि वा—ततो दृश्यानुपलम्भाल्लिङ्गात् सकाशादन्यथा सति लिङ्गे संशय इति व्याख्यातव्यम् । तस्माच्छब्दस्तु पूर्वमध्याहर्त्तव्यः । अथ वा—तत उपलब्धिलक्षणप्राप्तादन्यथा तद्विहीने संशये सति तल्लिङ्ग इति व्याख्येयम् ।

का पुनरत्रानुपलब्धौ व्याप्तिः ? इत्याह—अत्रापीत्यादि । एवंविधमिति । दृश्यं सदनुपलब्धम् । सर्वग्रहणं सर्वोपसंहारेण व्याप्तिप्रदर्शनार्थम् ॥

ननु यदि नाम कस्यचिद् विषाणादेः शशमस्तकादावुपलब्धिलक्षणप्राप्तानुपलब्धस्यासद्व्यवहारविषयता, अन्येनापि सामान्ये विशेष्येऽवयविद्रव्यसंयोगविभागादिना तथाविधेन तथा भवितव्यमिति कुतोऽयं नियमः ? इत्यत आह—कस्यचिदित्यादि । कस्यचिदुपलब्धिलक्षणप्राप्तस्यानुपलब्धस्य शशविषाणादेरसतोऽसद्व्यवहारविषयेऽस्त्यभ्युपगमेऽसद्व्यवहारादिविषयोऽसन्नित्युक्तः । तल्लक्षणा-

नह्येवंविधस्याऽसत्त्वानभ्युपगमेऽन्यत्र तस्य योगः। न ह्येवंविधस्य सतः सत्स्वन्येषूपलम्भकारणेष्वनुपलब्धिः। अनुपलभ्यमानं त्वीदृशं नास्तीत्येतावन्मात्रनिमित्तोऽयमसद्व्यवहारः; अन्यस्य तन्निमित्तस्याभावात्।

सर्वसामर्थ्यविवेको निमित्तमिति चेत्? एवमेतत्, तस्यैव सर्वसामर्थ्यविवे-

---

विशेषादिति। तस्यासतो लक्षणं निमित्तं यथोक्तानुपलब्धिः। लक्षणशब्दश्च करणसाधनः; तस्याविशिष्टत्वात्। सामान्यविशेषावयविद्रव्यादाविति वाक्यशेषः। एतदुक्तं भवति—शशविषाणादेरप्यसद्व्यवहारविषयत्वं कस्मादिष्यते, यथोक्तानुपलम्भस्य तन्निमित्तस्य सदभावादिति चेत्? यद्येवम्, सामान्यविशेषता तस्यास्तीति कस्मात् तथा सद्व्यवहारविषयत्वं नाभ्युपगम्यते। अन्यथा तत्रापि तत् स्याच्चेत्? नहि पुरुषेच्छावशाद्धेतौ विषयप्रविभागो युक्त इति।

नहीत्यादिनैतदेव व्यनक्ति। एवंविधस्य दृश्यस्य सत्त्वेऽनुपलब्धस्यासत्त्वानभ्युपगम इति। असद्व्यवहारादिविषयत्वान्नाभ्युपगम इत्यर्थः। असत्त्वशब्देनासद्व्यवहारो विनिश्चयस्तस्योपलक्षणम्। युक्तोपलम्भस्य तस्यैवानुपलम्भनं प्रतिषेधहेतुरित्यादि चेत्? अन्यत्र शशशृङ्गाभावे दण्डेन पुरुषस्य योगः स एव इत्यर्थः। न ह्येवंविधस्य दृश्यस्य चक्षुरादिशून्येषूपलम्भकारणेषु स अनुपलब्धिर्भवति। किं तर्हि? उपलब्धिरेव भवतीति प्रतिषेधद्वयेनाह। अन्यस्योपलब्धिप्रत्ययस्य कस्यचिदपेक्षणीयस्याभावादिति भावः।

तदनेन प्रकृतमेव स्पष्टयति। अनुपलभ्यमानं त्वीदृशमित्युपलब्धिलक्षणप्राप्तं नास्ति। तस्मादेतावन्मात्र[1] उपलब्धिलक्षणप्राप्तानुपलब्धिमात्रं निमित्तं यस्यासद्व्यवहारस्य स तथा ख्यातः। तदनेनासद्व्यवहारस्यानन्यनिमित्ततामाह। एतदेव कुतः इत्याह? अन्यस्येत्यादि। यथोक्तानुपलब्धिमपास्यान्यस्य नास्तित्वव्यवहारनिमित्तस्याभावादिति समुच्चयार्थः[2]।

ननु च यस्य यत्र न किञ्चित् सामर्थ्यमस्ति तदसद्व्यवहारविषयः; यथा नभस्तले कमलम्। तथाभिमतेऽपि देशादावभिमतस्य भावस्य न किञ्चित् सामर्थ्यमस्तीति सर्वसामर्थ्यविवेक एव नास्तित्वव्यवहारस्य निमत्तं भविष्यति, एतत्किमसम्बद्धमेवोद्घाटितशिरोभिरभिधीयते—अन्यस्य तन्निमित्तस्याभावादिति कदाचित् कश्चित् ब्रूयादिति तन्मतमाशङ्कते—सर्वसामर्थ्यविवेको निमित्तमिति चेदिति।

अत्र समाधिमाह—एवमित्यादिना। एवं मन्यते—सूक्तमेतत् सर्वसामर्थ्यविवेको निमित्तमिति, किन्तु स एव सर्वसामर्थ्यविवेकोऽयं पदार्थः कथमवगतो यथोक्तामनुपलब्धिमपास्य येन सर्वसामर्थ्यविवेकोऽस्यासद्व्यवहारस्य निमित्तं भविष्यति। न चासावज्ञात एव तस्य निमित्तं भवितुमर्हति; ज्ञापकहेत्वधिकारात्। कस्मात् सर्वसामर्थ्यविवेकिनो यथोक्तानुपलम्भेनैव[3] प्रतीतिः? इत्याह—

---

१. देतावत्सात्र–रा०। २. समच्चयार्थः–पा०। ३. लम्भेनेव–पा०।

किन एवम्प्रतीतिः; अन्यस्य तत्प्रतिपत्त्युपायस्याभावात्। तत्प्रतिपत्तौ च सत्यामसद्व्यवहार इतीदं तन्निमित्तमुच्यते।

बुद्धिव्यपदेशार्थक्रियाभ्यः सद्व्यवहारो विपर्यये चासद्व्यवहार इति चेत्? भवति बुद्धेर्यथोक्तप्रतिभासायाः सद्व्यवहारः, विपर्ययेऽसद्व्यवहारः।

प्रत्यक्षाविषये तु स्याल्लिङ्गजाया अपि कुतश्चित् सद्व्यवहारः।

असद्व्यवहारस्तु तद्विपर्ययेऽनैकान्तिकः; विप्रकृष्टेऽर्थे प्रतिपत्तृप्रत्यक्षस्य अन्यस्य वा प्रमाणस्य निवृत्तावपि संशयात्।

---

अन्यस्य तत्प्रतिपत्त्युपायस्याभावादिति। यदा तु यथोक्तानुपलब्ध्या तस्य सर्वसामर्थ्यविवेकिनः प्रतीतिर्भवति, तदा तत्प्रतिपत्तौ सत्यामसद्व्यवहारो भवति। इति तस्मादिदं यथोक्तानुपलम्भनं तस्यासद्व्यवहारस्य निमित्तमुच्यते।

पुनरपि परः 'अन्यस्य तन्निमित्तस्याभावाद्' इत्यस्य कदाचिदयुक्ततां ब्रूयादित्याशङ्कते—बुद्धिव्यपदेश इत्यादिना। अयमस्याभिसन्धिः—बुद्धिव्यपदेशार्थक्रियाभ्यः सकाशात्[1] तद्व्यवहारो भवति। तथा हि—ताः प्रवर्त्तमाना वस्तुसत्तां साधयन्ति। तद्भेदाभेदौ च वस्तुभेदाभेदावित्याशयः। ताश्च निवर्त्तमानाः स्वनिमित्तं सद्व्यवहारं निवर्तयन्ति, अग्निरिव धूमम्। तन्निवृत्तौ चासद्व्यवहारः; सद्व्यवहारासद्व्यवहारयोरन्योन्यव्यवच्छेदस्थितरूपत्वेन एकत्यागस्यापरोपादानेनान्तरीयकत्वात्। ततश्च बुद्ध्यादिनिवृत्तौ चासद्व्यवहारनिमित्तमिति नेदं युक्तं वक्तुम्—अन्यस्येत्यादि।

अत्रापि प्रतिविधानमाह—भवतीत्यादि। यथोक्तप्रतिभासा[2] बुद्धिः प्रतिपत्तृप्रत्यक्षप्रतिभासिरूपनिर्भासा। यथोक्तः प्रतिभासो यस्या इति विग्रहः। उक्तं च—यदनात्मेत्यादिना। तस्याः सकाशात्[1] सद्व्यवहारो भवति साक्षाद् वस्तुग्रहणात्। तस्यां च विपर्ययोऽभावः, तस्मिन् सत्यसद्व्यवहारो भवति। सत्स्वन्येषूपलम्भकारणेष्विति वाक्यपरिसमाप्तिः कार्या[3]; अन्यथा संशयोत्पत्तेः। नहि वस्तुसत्त्व उपलम्भप्रत्ययान्तरसाकल्ये च सा निवर्त्तत इति निवेदितमेतत् पुरोऽस्माभिरिति भावः। तदनेन—यद्येवंविधा बुद्धिरभिमता त्वया, तदावयोरैकमत्यमेव, तथापि न नः किञ्चिदनिष्टमुक्तं स्यात्। अथान्या[4], तदा व्यभिचार इति दर्शयति।

तमेव व्यभिचारं दर्शयन्नाह—प्रत्यक्षाविषये त्वित्यादिना। लिङ्गाज्जाता लिङ्गजाः। अनुमानमित्यर्थः। तस्याः सकासात् सद्व्यवहारः स्यात् परोक्षेऽर्थेन केवलमनन्तरोदितरूपायाः स्वग्राह्य इत्यपिनाह। किं लिङ्गजायाः सर्वस्याः सम्भवति? नेत्याह—कुतश्चिदिति। स्वभावकार्यलिङ्गद्वयबलोपजाताया इत्यर्थः। अनुपलम्भस्यासत्ताऽसद्व्यवहारसाधकत्वादिति भावः।

यदि नामैवम्, ततः कथं व्यभिचार इति चेद्? आह—असद्व्यवहारस्त्वित्यादि। तद्विपर्यय इति। तस्या यथोक्तलिङ्गजाया बुद्धेर्विनिवृत्तावनैकान्तिकः सन्दिग्ध

---

१. सकासात्—पा०। २. प्रतिभाषा—पा०। ३. कार्याः—पा०। ४. ०न्यः—रा०।

इत्यर्थः। किं कारणम् ? विप्रकृष्टेऽर्थे देशादिविप्रकर्षैः प्रतिपत्तृप्रत्यक्षस्य प्रमाणस्य निवृतावपि संशयात् कारणात्। अर्थाभाव इति शेषः। प्रतिपत्तुः प्रत्यक्षमिति षष्ठीसमासः। इदं च प्रहीणसकलज्ञेयावरणास्य प्रत्यक्षनिवृत्तौ त्वसंदेह एवेति कथनायोपात्तम्। अन्यस्य वेति[1] अनुमानस्य, आगमस्य च। एतच्चागमस्य प्रामाण्यमभ्युपगम्याभिधीयते। न तु तस्य प्रामाण्यमस्ति;

> नान्तरीयकताभावाच्छब्दानां वस्तुभि सह।
> नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः॥ ( प्र० वा० २.२१३-१४ )

इत्यादिवचनात्।

अयमस्याभिप्रायः—यदि नाम प्रमाणत्रयं निवृत्तमप्रत्यक्षवस्तुनि, तथापि तन्नास्तीति कुतोऽयं निश्चयः! तथा हि—मलयनगनिकुञ्जवर्तिदूर्वाप्रवालपत्रप्रभृतयः प्रमाणत्रयगोचरभावातिक्रान्तां मूर्तिमुद्वहन्तस्तिष्ठन्ति। न च ते न सन्तीति शक्यमभिधातुम्; प्रमाणभावस्य सकलविषयसत्त्वव्यापकत्वकारणत्वाभावात्। न च तद्रूपविकलपदार्थनिवृत्तावन्यनिवृत्तिनियमेनातिप्रसङ्गदोषोपनिपातादित्यावेदितमेतत्[2] पुरस्तात्। यदाह—

> शास्त्राधिकारासम्बद्धा बहवोऽर्थाक्तितेन्द्रियाः।
> अलिङ्गाश्च कथं तेषामभावोऽनुपलम्भता॥ इति।

ननु चात्र लिङ्गजाया मतेरसद्व्यवहारहेतुत्वं निषेद्धुमारब्धम्, तद्विपर्यय इत्याद्यभिधानात्; तत् कस्मादप्रस्तुतस्यैव प्रत्यक्षस्य चागमस्य चोपक्षेपः कृत इति चेत् ? युक्तमेतत्। सर्वप्रमाणनिवृत्तेस्त्वगमकत्वप्रदर्शनेनैतदेकान्तासम्भवदर्शनायोक्तमिति लक्ष्यतेऽस्य सुधियोऽभिसन्धिः।

नन्विदमुक्तम्—सद्व्यवहारासद्व्यवहारयोरन्योन्यव्यवच्छेदस्थितलक्षणत्वेनैकाभावस्यापरभावनान्तरीयकत्वात् विप्रकृष्टे तन्निमित्ताभावात् सद्व्यवहारनिवृत्त्याऽसद्व्यवहार इति ? सत्यमुक्तमेवैतत्, न पुनर्युक्तम्; तथाहि—परोक्षेऽर्थेसद्व्यवहारनिवृत्तिः कथम्! तन्निमित्ताभावेऽपि द्वयोरप्यनयोरनुपलब्ध्योः स्वविपर्ययहेत्वभावभावाभ्यां सद्व्यवहारप्रतिषेधफलत्वं तुल्यम्, एकत्र संशयादपरत्र विपर्ययादिति वचनात् संशयेनेति चेत् ? यद्येवम्, कथं तर्ह्यसद्व्यवहारनिश्चयस्तत्र युक्तिमनुपतति। यत्र तु निश्चयेन सद्व्यवहारनिवृत्तिस्तत्रासद्व्यवहारोऽपि युक्त एव; अन्यः प्रवर्तनफलोऽसीत्युक्तेः। न चाभावरूपव्यवच्छेदे भावानुषङ्गोऽस्ति नियमेन। न हि वन्ध्यातनयनभःपङ्कजादिष्वसदवस्थता भवति; प्रतिषेधात्। प्रतिषेधमात्रं[3] तु स्यात्; तयोरन्योन्यव्यवच्छेदेनावस्थानात्। तथात्राप्यप्रत्यक्षे सद्व्यवहारप्रतिषेधान्न विधिभूतासद्व्यवहारानुषङ्गः। तद्व्यवच्छेदमात्रं तु स्यात्; तद्भावस्य तदभावस्यान्योन्यपरिहारेण अवस्थितत्वात्। उक्तं चैतदमलन्यायतत्त्वप्रबोधोद्गतप्रज्ञालोकतिरस्कृताशेषपरतीर्थ्यप्रवादध्वान्तेन धर्मकीर्तिनैवानित्यनिरात्मतादिव्यवच्छेदेऽपि तच्च स्यादित्यादिनेत्यास्तां तावत्।

---

१. चेति-रा०। २. वेदितमेतः-पा०। ३. सदवस्थता भवति प्रति०-रा०।

न च सर्वे बुद्धिव्यपदेशास्तद्भेदाभेदौ वा वस्तुसत्तां वस्तुभेदाभेदसत्तां वा साधयन्ति, असत्स्वपि कथञ्चिदतीतानागतादिषु नानैकार्थकारिषु वाऽर्थेषु तद्भावख्यापनाय; नानैकात्मताऽभावेऽपि नानैकरूपाणां वृत्तेः–राजा महासम्मतः प्रभवो राजवंशस्य, शङ्खश्चक्रवर्ती महासम्मतनिर्मितस्य यूपस्योत्थापयिता, शशविषाणम्, कथं सनिदर्शनं सप्रतिघम्, घटश्चेति।

नहि सनिदर्शनादिशब्दा नानावस्तुविषयाः; एकत्रोपसंहारात्।

---

अधुना सामान्यभूतानां बुद्धिव्यपदेशानां सद्व्यवहारहेतुत्वमपि नास्तीति कथयन्नाह—न चेत्यादि। तत्र च यथाक्रममभिसम्बन्धः। ते सर्वे बुद्धिव्यपदेशा न वस्तुसत्तां साधयन्ति। तेषां वा भेदाभेदौ न वस्तुभेदाभेदयोः सत्तासद्भावमिति। सर्वग्रहणं केचित्तु साधयन्त्येवेति प्रदर्शनाय। कुत एतद्? इत्याह—असत्स्वप्यतीतानागतादिषु। वृत्तेरिति क्रियापदम्। आदिशब्देन व्योमोत्पलादयः परिगृह्यन्ते। कथं पुनर्विषयमन्तरेण तेषु तेषां वृत्तिर्युक्तेति चेद्? आह—कथञ्चित्तद्रूपः, अनुभवाहितवासनापरिपाकप्रभावादित्यर्थः। तेषां च वस्तुप्रतिबन्धाभावादिति भावः। शङ्खश्चक्रवर्तीत्यादिना प्रकारेण। तदनेन वस्तुसत्तां साधयन्तीत्येतस्य कारणमाह—नानैकामर्थक्रियां कर्तुं शीलं येषां ते तथोक्ताः, तेष्वपि च वृत्तेः कारणात्। किमर्थं तेषु तेषां वृत्तिः? तद्भावख्यापनाय। तेषां नानैकार्थक्रियाकारिणाम्भावस्तस्य ख्यापनाय। नानार्थक्रियाकारित्वस्यैकार्थक्रियाकारित्वस्य च कथनार्थमिति यावत्। अस्त्येव तर्हि तस्य वस्तुनस्तत्त्वम्? इत्यत आह—नानैकात्मताया अभावेऽपि। तस्य वस्तुन इत्याध्याहर्तव्यम्। नानैकरूपाणां बुद्धिव्यपदेशानाम्। तदनेन न वस्तुभेदाभेदौ साधयन्तीति साधयति।

इदमेव निदर्शनप्रदर्शनेन सफलीकरोति। राजा महासम्मतः इदमतीतवृत्तेरुदाहरणम्। यथेति चाध्याहार्यम्। शङ्खश्चक्रवर्तीत्याद्यनुत्पन्नवृत्तेः। शशविषाणमित्यादि पदोपात्तस्य। रूपं सनिदर्शनं चक्षुर्विज्ञानजनकत्वात्, सप्रतिघं च स्वदेशेपरोत्पत्तिप्रतिबन्धनात्। एतन्नानार्थक्रियाकारिषु वृत्तेरित्येतस्य निदर्शनम्। यस्मात् तच्चक्षुर्विज्ञानादिकार्यजनकत्वादेकरूपमपि नानारूपैः सनिदर्शनादिशब्दैर्विषयीक्रियते, तस्मान्न ते वस्तुभेदसाधनायालम्। घटश्चेत्येतदेकार्थक्रियाकारिष्वित्येतस्योदाहरणम्। तथाहि—बहवो रूपगन्धरसस्पर्शा उदकधारणविशेषादिकार्यनिर्वर्त्तनसमर्थत्वादभिन्नसमैस्तैः विषयत्वेनात्मसात्क्रियन्ते। ततस्ते नाभेदं साधयितुं क्षमाः। तच्चातीतानागतशशविषाणादिषु तत्प्रतिपत्तिर्न वस्तु साधयतीत्यतिप्रतीतमेतत्।

अथ कथमिदं गम्यते–सनिदर्शनादिबुद्धिशब्दा न वस्तुभेदं साधयन्तीति? अतः प्राह—नहीत्यादि। कस्मादेवात्र वस्तुनि रूपादावुपसंहारात् सनिदर्शनं सप्रतिघं रूपमित्येव समानाधिकरणत्वादिति यावत्। अन्यथा भिन्नाधिकरणत्वाद् वकुलोत्पलकमलमालतीमल्लिकादिशब्दानामेव सामानाधिकरण्यमेव न भवेदिति भावः।

नानाविषयत्वेऽप्येकत्रोपसंहारस्तन्निमित्तानां तत्तत्समवायादिति चेत् ? आयासे बतायं तपस्वी पदार्थे पतितोऽनेकसम्बन्धिनमुपकृत्यानेकं[1] शब्दमात्मनि तेभ्यः समाशंसन् ! स यैः शक्तिभेदैरनेकं सम्बन्धिनमुपकरोति, तैरेवानेकं शब्दं किं नोत्थापयति ! एवं ह्यनेन परम्परानुसारपरिश्रमः परिहृतो भवति ।

---

कणभक्षाक्षपादमतानुसारिणस्तु मिथ्यादर्शनानुरागजनितासद्विकल्पमलोपलिप्तान्तर्लोचनाः सञ्चक्षते—नानाविषयत्वेऽप्यभ्युपगम्यमाने तेषामेकत्रोपसंहारोऽविरुद्ध एव; तन्निमित्तानां सनिदर्शनादिनां तत्र रूपादौ समवायादिति ।

तदेतत् सर्वमेषामविचारितरमणीयतया विचारविमर्दाक्षमत्वात् पण्डितजनहासकारिदर्शनमित्यभिप्रायवानाह—आयासे बतायमित्यादि । बतशब्दोऽनुकंपायाम् । कोऽसौ ? इत्याह–अनेकं सम्बन्धिनं सनिदर्शनत्वादिकमुपकृत्यानुपकारे तेन तेषां तत्र सम्बन्धित्वायोगादित्यभिप्रायः । अनेकं सनिदर्शनादिशब्दं तेभ्यः सम्बन्धिभ्यः सकाशादात्मनि संमार्गयन् । इदमायासपतने कारणम् ।

ननु सरूपादिभावो यैः शक्तिभेदैरनेकसम्बन्धिनमुपकरोति, तैरेव शक्तिभेदैरनेकं बुद्ध्यादिशब्दं किन्नोत्थापयति । यदि पुनरेवं भवेत्तदा को गुणो लभ्यते ? इत्याह—एवं ह्यनेन परम्परानुसारश्रमः परिहृतो भवतीति । शक्तिभेदैः सम्बन्धिनमुपकरोति, तेभ्यश्च शब्दाः प्रवर्तन्ते—इत्ययं परम्परानुसरणायासोऽनेन तपस्विना रूपादिना त्यक्तो भवतीत्यर्थः ।

ननु च प्रतिनियतोऽपि कार्यशक्तिमन्तः सर्व एव भावाः, त्वयाप्येतदवश्यमेवाभ्युपेयम्, अन्यथा कस्माच्छालिबीजं शाल्यङ्कुरमेवोत्पादयति, न यवाङ्कुरमिति परेणाभियुक्तेन किमभिधानीयं भावप्रकृतिं मुक्त्वा । तस्मात् तव पदार्थप्रकृतिसमाश्रयणमेव शरणम्; अन्यथास्य दोषस्य परिहर्तुमशक्यत्वात् । एतच्च न ममापि राजकुलनिवारितम् । तथाहि–शक्यमेतन्मयाप्यभिधातुम्–अनेकसम्बन्ध्युपकार एव तस्य सामर्थ्यं नानेकशब्दोत्थापनमिति चेत् ? सत्यमेवमेतत्; एवं तु मन्यते—न तावत् सनिदर्शनत्वादयः सन्ति; क्रमयौगपद्याभ्यामर्थक्रियात्वनुप्रयोगात् । उपलब्धिलक्षणप्राप्तानां चानुपलम्भात् । न चोपलब्धिलक्षणप्राप्तं सदनुपलभ्यमानमस्तीति शक्यते वक्तुम्; अतिप्रसङ्गात् । अनुपलब्धिलक्षणप्राप्ततायां वा कथं तन्निबन्धनाः प्रत्ययव्यपदेशाः प्रवर्त्तन्ते गोगवयादिषु । एतेनोपलब्धानामपि क्षणिकत्वादिवत् व्यक्तिव्यतिरिक्तेनानुपलक्षणं[2] प्रत्यक्षम् । यस्मात्—

सामान्यं यदि दृष्टमप्यविकलं भिन्नं न संलक्ष्यते,<br>
भावे तद्बलभाविनी भवति सा या शब्दवृत्तिः कथम् ।<br>
दण्डयादौ न निबन्धनस्य न गतौ धीशब्दयोरस्ति सा,<br>
तस्मादस्य कथञ्चिदेव तदसौ युक्त्या[3] न सङ्गच्छते ॥

किञ्च—

---

१. मुपहृत्यानेकं–रा० । २. ० तिरिक्तेणानु०–पा० । ३. तदपि ते युक्त्या–रा० ।

भावानामैकदेश्यं प्रसजति भवतो दर्शने सर्वथैषाम्,
सत्तादेशादभेदात् सकृदिदमथ वा भिन्नदेशे निवृत्तम् ।
वृत्तौ वानेकमेतन्न हि भवति सकृत् सर्वथा वृत्तिभाजाम्,
तालादीनां फलानां बहुषु बहुविधेष्वाश्रयेष्वेकभावः ॥

सत्त्वे वा तेषान्न बुद्धिशब्दोत्थापनसामर्थ्यमन्वयव्यतिरेकाभ्यामवधार्यते । अत एवानुपलभ्यमानत्वात् पाचकादिष्वपि च तद्व्यतिरेकेणापि तेषां भावात् । उपपादितं चैतत् प्रमाणवार्तिके—

पाचकादिष्वभिन्नेन विनाप्यर्थेन वाचकः ।
भेदान्न हेतुः कर्मास्य न जातिः कर्मसंश्रया ॥ ( २. १५७-५८ )

इत्यादिनेति, नेहोच्यते । न च तेषामुपकार्यत्वमस्ति; नित्यतयाऽनाधेयातिशयत्वात् । न च पुरुषाभिप्रायानपेक्षो व्यक्त्युपकृतसप्रतिघत्वादिसामान्यसामर्थ्यभावेनोपनेयः । विवक्षायां तु सम्मुखीभावेऽपि प्रवृत्तिप्रसङ्गः । पुरुषाभिप्रायानुरूपे वा स एवास्तु नियामकः किमन्तर्गतृभिः सामान्यैः । तथाहि तद्गतान्वयव्यतिरेकानुविधानमेव लक्ष्यते सामान्यानाम्, न नित्यानामव्यतिरेकत्वात् ।

तस्मात् सर्वमेतत् कुदर्शनसमाश्रयेण कल्पनामात्रम् । कल्पना च सैव कर्तव्या या पुनर्न पर्यनुयोगमर्हति, तत्रत्यां कल्पनायां वरमेव कल्पनादोषाभावात् । गुणसद्भावाच्चेति । स्यान्मतम्—युक्तैवेयं कल्पना, न हि एकस्य नानाकशब्दोत्थापने सामर्थ्यमस्तीति ? यद्येवम्, अत्रापि ब्रूम इत्याह—नानाशब्दोत्थापनासामर्थ्ये नानासम्बन्ध्युपकारोऽपि मा भूदिति । एकस्यानेकोपकारकत्वविरोधाभ्युपगमादित्यभिसन्धिः । नित्यत्वात् सम्बन्धिनामनुपकारोऽभ्युपेत एवेति चेद् आह—अनुपकारे हि तेषां सनिदर्शनत्वादीनां तेनाङ्गीक्रियमाणे तत्सम्बन्धिता न सिध्यति । नहि यो येन नोपक्रियते हेतुः, स तस्य सम्बन्धियुक्तः; हिमवानिव मलयगिरेरिति भावः ।

एवं तावत्परपक्षनिराकरणेन सनिदर्शनादिशब्दानामभिन्नविषयत्वं साधितम् । त एव जडिम्नः पदमुद्वहन्तः पुनरपि पर्यनुयुञ्जते—

ननु भवतु नाम सनिदर्शनादिशब्दानामभिन्नविषयत्वम् । अथ कथमवसीयते—घटपटादिशब्दानामनेकार्थविषयत्वमिति, यावता रूपादिव्यतिरिक्तमन्यदेवावयवि द्रव्यमस्ति, तदेव च घटपटादिशब्दैर्विषयीक्रियते । तथा हि—विचारविषयापन्नः पटस्तन्तुभ्यो व्यतिरिच्यते; भिन्नकर्तृकत्वात्, घटादिवत् । तथा समस्तव्यस्तप्रत्ययाविषयत्वाद्, गवादिवत् । नहि तन्तवः तन्तुसमुदाय इति वा पटे प्रत्ययो दुष्टः । उपायान्तरसाध्यत्वाच्च, घटादिवत् । भिन्नदेशावस्थितेश्च क्रियमाणत्वात्, घटादिवदेव । भिन्नपरिमाणत्वाच्च, वकुलामलकबिम्बादिवत् । अतश्च पूर्वोत्तरकालभावित्वाद्, बीजाङ्कुरादिवत् । अथ वा—पटादन्ये तन्तवस्तत्कारण-

**तेषां तत्सम्बन्धितापि न सिद्ध्यति। घट इत्यपि च रूपादय एव बहव एकार्थक्रियाकारिण[1] एकशब्दवाच्या भवन्तु, किमर्थान्तरकल्पनया ?**

---

त्वात्, तुर्यादिवत्। तन्तुपटयोर्वाऽन्यत्वं भिन्नशक्तिमत्वात्, जलानलादिवत्। तथेदमपरं विचारविषयापन्नमिन्दीवरं गन्धादिभ्योऽत्यन्तभिन्नम्, तेषां व्यवच्छेदकत्वात्, चैत्रादिवत्। इह—'यद्यस्य व्यवच्छेदकं तत्तस्मादन्यत्, तद्यथा गोपिण्डाच्चैत्रः' इत्येतानि तद्व्यतिरेकसाधनप्रमाणानि सन्ति। तत् कथं तेषां भिन्नविषयत्वं भविष्यतीति ?

तदेतदप्येषामसद्दर्शनाभिनिवेशपटलप्रच्छादितान्तःकरणानां नाल्पीयसस्तमसो दुर्विलसितमित्यागूर्याह—घट इत्यपि च रूपादय एवैकार्थक्रियाकारिण एकशब्दवाच्या भवन्तु, किमर्थान्तरकल्पनयेति। कार्यमित्युपस्क्रियते। नैव किञ्चित्तस्य तादृशस्य नीलादिव्यतिरेकेणानुपलक्षणादित्याकूतमस्य। यानि त्वेतानि तत्प्रतिपादनाय प्रमाणान्युक्तानि, तान्यसिद्धतादिदोषदुष्टत्वान्नालं तद्भेदसाधनायेति भूतानामेव[2] पुरतः छायां दधतीति मन्यते। तथा हि—नेदं तावदाद्यं प्रमाणं परीक्ष्यमाणं पूर्वामपि परीक्षां क्षमते। यतोऽत्र विकल्पद्वयमाविर्भवति—अन्यावस्थावस्थितेभ्यो वा तन्तुभ्यः पटस्यान्यत्वं साध्यते, विशिष्टसंस्थानावस्थितेभ्यो वेति। तत्र न तावदयमाद्यः प्रकारः सहते विचारभारगौरवम्; सिद्धसाधनतादोषानुषङ्गात्। यस्मात् समधिगतसमस्तवस्तुयाथातथ्यसुगतसमयनयसमाश्रयप्रवृत्तिबलासादितावदातमतयः 'प्रसवानन्तरनिरोधभाजः सर्वभावाः' इति प्रकल्पयन्ति। ततश्च तेभ्योऽन्यत्वमिष्टमेवेति सिद्धसाध्यताप्रसङ्गोपनिपातपिशाचः कथमिव भवन्तं न गृह्णाति। द्वितीयोऽपि विकल्पः तीव्रानलोपतप्त इवोपलतले तलानि पादानां न प्रतिष्ठां समासादयति[3], हेतोः परं प्रत्यसिद्धत्वात्। न हि विशिष्टस्थानावस्थितेभ्यः पटस्य भिन्नकर्तृकत्वं परं प्रति सिद्धपद्धतिमवतरति। यो हि तादृक्प्रकारेभ्योऽन्यत्वमभावादेव नाभ्युपैति, स कथमिव भिन्नकर्तृकत्वमभ्युपगमिष्यतीति। तदनन्तराभिहितमपि प्रमाणेन समभिलषितमनोरथपरिपूरणायालं हेत्वसिद्धेः। यतः पट इति तन्तुष्वेव सन्निवेशविशेषेणावस्थितेषु प्रत्ययो वर्तते। तद्विविक्तरूपस्यात्यन्तमुन्मिषितचक्षुषाप्यदर्शनात् स्फटिकादौ दृष्टमिति चेत् ? एतदुत्तरत्र निषेत्स्यामः।

यत्त्विदम्—उपायान्तरसाध्यत्वात्, भिन्नदेशावस्थितैः क्रियमाणत्वात्, भिन्नपरिमाणत्वात्, पर्वोत्तरकालभावित्वाद्, भिन्नशक्तिमत्त्वाच्चेति। अत्र प्रथमसाधनाभिहितविकल्पदोषस्तीव्रामर्शविरक्तलोचन इवारातिस्तत्सम्पदं न सहते।

प्रथमे सिद्धसाध्यत्वं द्वितीये हेत्वसिद्धता।
क्षणिकत्वाद् विशिष्टानामुत्पादोऽभिमतो यतः॥

इति सङ्ग्रहश्लोकः।

---

१. बहव एकार्थक्रियाकरणे–रा०। २. भौतानामेव–रा०। ३. ०सादयंति–पा०।

यच्चेदमुक्तम्—विचारविषयापन्नमिन्दीवरमित्यादि, तदपि न सङ्गच्छते; यस्मादिन्दीवरस्य गन्धादय इतीन्दीवरस्वभावा गन्धादयो मधुभावनाविशेषादिकार्यनिर्वर्त्तनसमर्था[1] इति यावत्। अविशिष्टकार्यसाधनात्मना सामान्यभूतगन्धादिशब्दैः प्रसिद्धाविशिष्टकार्यसाधनाख्येन विशेषेण ये विशिष्टास्त एवमुच्यन्ते। न पुनरत्रान्यत् किञ्चिदित्यर्थावर्णितलक्षणं द्रव्यमस्ति, तस्य तादृशोऽनुपलब्धेरित्युक्तप्रायम्। तथा चानेन प्रकारेण तेषां तद्व्यवच्छेदकं भवतीति। तेषां तद्व्यच्छेदकं च न चात्यन्तं भिन्नमिति कोऽनयोर्विरोध इति। सन्दिग्धविपक्षव्यावृत्तिको हेतुः प्रतिबन्धासिद्धः। नहि दृष्टान्तमात्रात् सिद्धिरस्ति; सर्वसिद्धिप्रसङ्गात्। अपि च—शिलापुत्रकस्य शरीरम्, रूपस्य स्वभाव इत्यत्रापि शिलापुत्रक-रूपयोः शरीरस्वभावव्यवच्छेदकत्वमस्तीति भेदस्तयोरपि ततः प्रसजते, न च भवति; नैःस्वभाव्यप्रसङ्गात्। तस्मादयमेतेनानैकान्तिकः स्फुटमेव भवद्भिरभिधानीयः।

किञ्च—इदमतिविकलैर्मिथ्यादर्शनसंरागपिशाचाविष्टबुद्धिभिः किमिन्दीवरस्य गन्धादय इत्येते शब्दाः पुरुषाभिप्रायव्यापारनिरपेक्षा एव वस्तुतत्त्वनिबन्धनाः प्रवर्त्तन्ते, किं वा यथैव तैः प्रयुज्यन्ते तथैव वस्तुतत्त्वमनपेक्ष्य तमर्थमसत्कारेण प्रतिपादयन्तीति? यद्याद्यः पक्षः, तदा सदा ध्वननप्रसङ्गोऽतीतादिष्वन्यत्र च पुरुषेच्छावशान्नियोजनं न भवेत्। न च प्रवचनान्तरभेदेष्वर्थेषु प्रवृत्तिः प्राप्नोति। न च कस्याश्चिद् वाचोऽसत्यार्थता स्यात्। अथोत्तरः, तदा—

> येषां वस्तुवशा वाचो न विवक्षापराश्रयाः।
> षष्ठीवचनभेदादि चोद्यं तान् प्रति युक्तिमत्॥ ( प्र० वा० २.६५ )

यदाहुः—

> यद् यथा वाचकत्वेन वक्तृभिर्विनियम्यते।
> अनपेक्षितबाह्यार्थं तत् तथा वाचकं वचः॥ ( प्र० वा० २.६६ )

तदा न पुरुषेच्छाबलप्रवृत्तशब्दवशादर्थतत्त्वं व्यवतिष्ठत इति तदवस्थं सन्दिग्धविपक्षव्यतिरेकत्वं हेतोरिति। एतेनैतदपि प्रत्युक्तम्—विप्रतिपत्तिविषयापन्नाच्चन्दनादन्ये रूपरसगन्धस्पर्शा हेत्वादयश्चेति प्रतिजानीमहे; न व्यपदिश्यमानत्वात्, शिलातुलाढकप्रसेविकावदिति। तस्मात् तद्भावप्रतिपादनाय न किञ्चित् प्रमाणमस्तीति स्थितमेतत्।

अस्माकं तु तदभावप्रमाणसाधकं प्रमाणमेतत्—ये परस्परव्यावर्त्तमानस्वभावावस्थितिसमालिङ्गितशरीराः, ते व्यतिरिक्तावयविद्रव्यानुगतमूर्त्तिमात्मातिशयं नात्मसात् कुर्वन्ति। यथा बहवो भस्माधारनलालाथूकादयः। तथा च यथोपदिष्टधर्मवन्तस्तन्त्वादय इति स्वभावहेतुः। वैधर्म्येण नभःपङ्कजादयः, तेषां निःस्वभावत्वात्। परस्परव्यावर्त्तमानानामपि यद्येकस्वभावानभ्युपगमे तस्य तेषु सर्वात्मनाऽन्यथा वा वृत्त्ययोगो बाधकं प्रमाणम्।

---

१. निवर्तन०-पा०।

बह्वोऽपि हि एकार्थकारिणो भवेयुः, चक्षुरादिवत् । तत्सामर्थ्यख्यापनाय[1] तत्रैकशब्दनियोगोऽपि स्यादिति युक्तं पश्यामः ।

---

कुतस्तद्धि युगपदनेकत्र सर्वात्मना वर्त्तमानमनेकाधारस्थिताधेयवदनेकत्व-मात्मनोऽनुमापयतीति कथमस्याभिन्नस्वभावता योज्यते ! एकावयवोपलम्भवेलायां च सकलस्य तत्र परिसमाप्तत्वादुपलब्धिप्रसङ्गः । अनेकावयवोपलब्धिद्वारेणोप-लम्भकतिपयावयवदर्शनेऽपि स्यात् समस्तावयवोपलम्भद्वारेण उपलब्धौ सर्वकालमदर्शनप्रसङ्गः; तस्यां भास्वरमध्यभागानां सकृदनुपलम्भात् । एकाव-यवकम्पे च सर्वकम्पादिप्रसङ्गश्च वाच्यः । नाप्येकदेशेन; सावयत्वप्रसङ्गात् । एकदेशानां चानवस्थाप्रसङ्गात् । तेऽपि हि तस्यावयवा इति पाण्यवयववृत्तेष्वपि अन्येन वर्त्तितव्यमित्यादिना तदन्यैकदेशाभाववानेकः कश्चिदवयवी विद्यते । तथा चाण्वादिसमुदाय एवास्तु, कोऽनुरोधः—स्वात्मभूतेष्ववयवेष्विति ! न वा क्वचिदप्यसौ वृत्तः न ह्येकदेशाः प्रत्येकमवयवीत्यलं प्रतिष्ठितमिथ्याप्रलापैरिति विरम्यते ।

तदेवमेतत् परमतमलमालोच्यमानंतीव्रतरार्करश्मिसम्पातयोगिहिमशैलशिला-शकलवद् विलयमुपयातीति मन्यमानः प्राह—किमर्थान्तरकल्पनयेति ।

स्यादियत्तराशा परस्य नैवानेकस्यैकार्थक्रियाकारित्वमस्तीत्यत आह—बह्वोऽपि हीत्यादि । किंवत् ? चक्षुरादिवत् । यथा रूपालोकमनस्कारचक्षुरादयश्चक्षुरादि-विज्ञानमेकं कुर्वन्ति, तथा रूपादयोऽप्युदकधारणविशेषादिकामेकामर्थक्रियां करिष्यन्तीत्यर्थः । यतश्चैतदेवम्, तस्मात्तस्यैकार्थक्रियासामर्थ्यस्य ख्यापनाय तत्र रूपादावेकस्य पटादिशब्दस्य नियोगोऽपि स्यादिति एतद् युक्तं पश्यामः । न केवल-मेकार्थक्रियाकारित्वं तेषामित्यपिशब्देनाह ।

कथं युक्तमिति चेत् ? एवं मन्यते—केनचित् प्रयोजनेन केचिच्छब्दाः क्वचिन्नि-वेश्यन्ते, तत्र यदनेकमेकत्रोपयुज्यते तदवश्यं तत्र चोदनीयम् । तस्य च पृथक्कथं चोदनेऽतिगौरवं स्यात् । न चास्यानन्यसाधारणं रूपं शक्यं चोदयितुम् । नाप्यस्यायासस्य किञ्चित् साफल्यम्, केवलमनेन योग्यास्तत्र येऽर्थाश्चोदनीयास्त[2] एकेन वा शब्देन चोद्येरन् बहुभिर्वेति स्वातन्त्र्यमत्र वक्तुः । तदियमेका श्रुतिर्बहुषु वक्त्रभिप्रायवशात् प्रवर्त्तमाना नोपालम्भमर्हति । न चेयम-शक्यप्रवर्त्तमाना; इच्छाधीनत्वात् । यदि हि न प्रयोक्तुरिच्छा, कथमियमेकत्रापि वर्तेत ! इच्छायां वा क एनां बहुष्वपि प्रतिबद्धुं समर्थः । प्रयोजनाभावादप्रवर्त्त-नमित्यपि नाशङ्कनीयम्; भिन्नेष्वप्येकस्माच्छब्दात् प्रतीतिरस्तत्प्रयोजनभेदेन यथा स्यादित्युक्तत्वात् प्रयोजनस्य । तस्मात् सूक्तमस्माभिः—युक्तं पश्याम इति ।

यथा कथञ्चिद् विनैव प्रयोजनेन लोकः शब्दं प्रयुङ्क्ते, ततो न युक्तमेत-

---

१. स्थापनाय–रा० । २. तेऽर्थाश्चोद०–रा० ।

न च निष्प्रयोजना लोकस्यार्थेषु शब्दयोजना। तत्र येऽर्थाः सह पृथग्वा एकप्रयोजनाः, तेषां तद्भावख्यापनाय[1] हि एकशब्दो नियुज्येत यदि, किं स्यात्! तदर्थक्रियाशक्तिख्यापनाय नियुक्तस्य समुदायशब्दस्यैकवचनविरोधोऽपि नास्त्येव; सहितानां सा शक्तिरेका, न प्रत्येकमिति।

समुदायशब्द एकस्मिन् समुदाये वाच्ये एकवचनं घट इति।

---

दिति चेदाह—न च निःप्रयोजना लोकस्यार्थेषु शब्दयोजनेति। न हि व्यसनमेवैतल्लोकस्य यदयमसङ्गतं यन्न प्रयुञ्जानो वा शब्दान्तः खल्वासीत्। किन्तर्हि? सर्व एवास्यारम्भः प्रयोजनसापेक्षः। प्रयोजनं चैतदुक्तमिति मन्यते तत्र प्रयोजनवत्त्वेनेति। यथा रूपगन्धरसादयः सहैकप्रयोजनाः सङ्कलिता एककार्यकारिण इत्यर्थः। समवहितानामपि कदाचित् कस्यचिदेव कार्ये व्यापारः, अन्यस्य त्वौदासीन्यमिति स्यादाशङ्कासम्भवः, तत आह—पृथग्वेति। वाशब्दश्चार्थे। सर्व एव व्यापारवन्त इत्यर्थः। अन्ये त्वन्यथा व्याख्यानयन्ति, व्याख्यानं चादौ दूषयन्ति—तत्रैतस्मिन् शब्दैरर्थप्रत्यायनक्रमे येऽर्था रूपादयः सह पृथग्वैकप्रयोजनाः, तेषां रूपादीनां संहितानां पृथुबुध्नोदराकारसंस्थापितानामेकं प्रयोजनम्, यदुत मधूदकाद्याहरणम्; पृथग्वा तेषामेव प्रत्येकं स्वाकारज्ञानजननम्।

एकं च तत्प्रयोजनमेकत्र दृष्टं यत्तदन्यत्र नास्तीति सहभूतानामपि कदाचिदौदासीन्यदर्शनात् सर्वेषां सव्यापारतामादर्शयितुं पृथग्वेत्यभिहितम्। वाशब्दश्च समुच्चय इत्यन्ये। केवलमत्रैकप्रयोजना इत्यभिधानात् सर्वेषां तथाभावप्रतीतिरस्त्येवेति व्यर्थम् 'पृथग्वा' इति स्यात्। न चायं शब्दार्थ इति यत्किञ्चिदेतत्। तैः प्रकरणं न लक्षितम्। तथा हि अत्र समुदायशब्दस्यैकवचनप्रवृत्त्यविरोधः कथयितुमारब्धः। तत्र कः प्रस्तावः पृथग्वेत्यभिधानस्य! केवलं रूपादिशब्दश्चायं जातिशब्दः। तत्र चान्यादृश्येव प्रक्रिया भविष्यति।

यत्त्विदमुक्तम्—केवलमत्रैकप्रयोजना इत्यभिधानात् सर्वेषां तथाभावप्रतीतिरस्त्येवेति, तदपि न युक्तिसङ्गतम्; तथाहि परबलपराजयोद्यतानामेकप्रयोजनवत्त्वेऽपि न तत्र सर्वे व्यापारवन्तो भवन्ति। तद्वत्रापि भवेत्। अत एव च स्यादाशङ्कासम्भव इति व्याख्यातम्। यदा तु सर्वेषामेव सव्यापारताख्यापनाय पृथग्वेत्येतदुच्यते, तदाऽपह्नुतमुत्सार्यते[2]। तदेतेनैवाशब्दार्थत्वमपि प्रत्युक्तमिति यत्किञ्चिदेतदेव। अस्तु वैतदपि व्याख्यानं यदि कथञ्चिद् व्यवस्थापितुं पार्यते।

तेषामेवंविधानामर्थानां तस्यैकार्थक्रियाकारिणो भावस्य ख्यापनायैको घटादिशब्दो यदि नियुज्येत, तदा किं स्यात्, न कश्चिद्दोषः स्यात्। गुण एव तु केवलो लभ्यत इत्याह—तदर्थक्रियाशक्तेरभिन्नायाः ख्यापनाय नियुक्तस्य समुदायशब्दस्यैकवचनविरोधोऽपि नास्त्येव। कुतः? यस्मात् सहितानां सा शक्तिरेकाऽभिन्ना, न प्रत्येकं न तु पृथग्भूतानामित्यर्थः। इति तस्मात् समुदायशब्दे तस्मिन्नेकस्मिन् घटादौ समुदाये वाच्ये एकवचनं घट इति भवतीति शेषः। स्यादिति वा वक्ष्यमाणं क्रियापदम्।

---

१. ० स्थापनाय–रा०। २. ० तपह्नुतमु०–पा०।

जातिशब्देष्वर्थानां प्रत्येकसहितानां च शक्तिर्नानैका च शक्तिरिति नानैकशक्तिविवक्षायां बहुवचनमेकवचनं चेच्छातः, वृक्षा वृक्षमिति स्यात् ।

यदप्येष नियमो बहुष्वेव बहुवचनम्, एकस्मिन्नेवैकवचनमिति । अस्माकं तु साङ्केतिकेष्वर्थेषु सङ्केतवशात् तात्पर्याभिनिवेश एव[1] ।

नानेको रूपादिरेकशब्दोत्थापने समर्थ[2] इति चेत् ? किं वै पुरुषवृत्तेरनपेक्षाः शब्दानर्थाः स्वयमुत्थापयन्ति, आहोस्वित् पुरुषैः शब्दा व्यवहारार्थमर्थेषु

---

नन्वयं घटादिशब्दो गवादिशब्दवज्जातिशब्दः, तत्कथमेतदुक्तमिति चेत् ? सत्यं समुदायान्तरवृत्त्यपेक्षया जातिशब्दोऽयम्, रूपादिसमुदाय्यपेक्षया तु समुदायशब्दोऽपीत्यभिसन्धेरदोषः । तथाहि त्रय्येव गतिः शब्दानाम्—केचिज्जातिशब्दा एव; यथा सुखादिशब्दाः, सुखादेरनवयवत्वात् । केचित्तु समुदायशब्दा एव, यथा विन्ध्यहिमवत्सुमेर्वादिशब्दाः; तज्जातीयसमुदायान्तराभावात् । अपरे पुनर्जातिसमुदायशब्दाः, यथैत एव घटादिशब्दाः समुदायान्तरसमुदाय्यपेक्षयेति ।

एवं तावत् समुदायशब्देषु वचनप्रवृत्त्यविरोध उक्तः ।

अथ कथं जातिशब्देषु ? इत्याह—जातिशब्देष्वित्यादि । अर्थानां घटादीनां प्रत्येकं सहितानां च शक्तेः कारणात् नानाशक्तिरेका च । एतदुक्तं भवति—यस्मादेकोऽपि वृक्षो गृहकरणाद्यर्थक्रियानिर्वर्त्तनेऽपि[3] योग्यः, बहवोऽपि वृक्षाः । ततश्च तेषां केवलानामपि योग्यत्वादनेका शक्तिः समवहितानामपि योग्यत्वाद्, एका शक्तिरेकप्रत्यवमर्शप्रत्ययनिबन्धनत्वेनैकत्वोपचारात् । यतश्चैवमिति तस्माद् यथाक्रमं नानाशक्तिविवक्षायां सत्यां बहुवचनमनेकत्वाच्छक्तेर्वृक्षा इति भवति । एकशक्तिविवक्षायां तु एकत्वाच्छब्द एकवचनमुक्तमिति स्यात् । तदा यद्येष नियमो भवद्भिरसद्ग्रहग्रहावेशव्याकुलितचेतोभिरिष्यते—बहुष्वेव नान्येषु बहुवचनं भवति एकस्मिन्नेव चैकवचनमिति । तदनेन यदाप्येनद्दर्शनमाश्रीयते—"बहुषु बहुवचनं" भवति, "द्व्येकयोर्द्विवचनैकवचने" (पा० सू० १.४.२२) इति, तदापि न कश्चिद्दोष इति दर्शयति ।

भवतां तु कथम् ? इत्याह—अस्माकमित्यादि । संकेतवशाच्छब्दानां बहुवचनान्तानां दाराः सिकताः पादाः गुरव इत्यादिनाऽसत्यपि बहुत्वेऽभिधेयस्य वृत्तिः ।

तथा सत्यप्यनेकत्वे षण्णगरी षट्पूली वनमित्यादिनैकवचनान्तानां वृत्तिरित्यनभिनिवेश एव । को हि नाम सचेतनः पुरुषाभिप्रायमात्राधीनवृत्तिषु शब्देष्वभिनिवेशं कर्तुमुत्सहत इति भावः ।

परपक्षं पूर्वपक्षयति—नानेको रूपादिरेकशब्दोत्थापने समर्थ इति चेदिति । नहि अनेकस्यैकेन सम्बन्धो युज्यत इति । किमित्यादिना परिहारः । पुरुषाणां वृत्तिरिच्छा तत्रानपेक्षाः सन्तोऽर्थाः किं स्वयं शब्दानुत्थापयन्ति, आहोस्वित् पुरुषैस्ते व्यवहारार्थमर्थेषु यथा कथञ्चिन्नियुज्यन्त इति विकल्पद्वयम् । तत्र पुरुषैरेव ते यथेष्टं नियुज्यन्ते, अन्यथाऽतीताजातयोर्दर्शनान्तरभेदिष्वन्यत्र वा नियोजनं न भवेदिति भावः । ततश्च स्वयं पुरुषेच्छाऽनपेक्षाणामर्थानां शब्दो

---

१. वशात्तैरित्य—पा० । २. शक्त—रा० । ३. निवर्तने—पा० ।

नियुज्यन्ते ? स्वयमुत्थापने हि भावशक्तिः,अशक्तिर्वा चिन्त्येत ? न च,तद्युक्तम्; पुरुषस्तेषां नियोगे यथेष्टं नियुञ्जीरन्निति ,कस्तत्रोपालम्भः !

निमित्तं च नियोगस्योक्तमेव[1]।

अपि च—यदि न रूपादीनामेकेन शब्देन सम्बन्धः, कथमनेकेषामाश्रयाभिमतेन[2] द्रव्येण सम्बन्ध इति केवलमयमसद्भूताभिनिवेश एव।

न वयमेकसम्बन्धविरोधादेकं[3] शब्दं नेच्छामः, अपि त्वभिन्नानां रूपादीनां घटकम्बलादिषु नानार्थक्रियाशब्दविरोधात् त एकरूपाः समुदायोत्तरासम्भाविनीमर्थक्रियामेव न कुर्युः; तेन तत्प्रकाशनायैकेनापि शब्देनोच्येरन् ?

भवतु नाम कस्यचिदियं वाञ्छा—'भवेयुरेकरूपाः रूपादयः सर्वसमुदायेषु'

---

त्थापने सति भावस्य शक्तिः, अशक्तिर्वा चिन्त्येत—नानेक इत्यादिना।

अस्त्येव तर्हि स्वयमुत्थापनमिति चेद् ? आह—न च तद्युक्तम्। अनन्तरोकात् कारणत्रयादित्यभिप्रायः। तस्मात् पुरुषैस्तेतां शब्दानां नियोगोऽर्थेषु विनाप्येकत्वादिना ते पुरुषा यथेष्टम् एकत्रापि बहुवचनान्तम्, अनेकत्राप्येकवचनान्तं शब्दं नियुञ्जीरन्–इति कस्तत्र तेषु शब्देषूपालम्भः। 'नानेको रूपादिरेकशब्दोत्थापने समर्थः' इत्ययं नैव कश्चित् केवलमतिबहुलव्यामोहविजृम्भितमिति मन्यते।

स्यान्मतम्, किमित्येकं शब्दमनेकत्र नियुञ्जते ? इत्याह—निमित्तं च नियोगस्योक्तमेवेति।

उपचयमाह—अपि चेत्यादिना। आश्रयाभिमतेनेति। अवयविद्रव्येण। तेषां तत्र समवायसम्बन्धेन सम्बन्धात्। कथं सम्बन्धः। नैवानेकस्य एकेन सह सम्बन्धः; विरोधाभ्युपगमात्। अन्यथैकेन शब्देनापि सह प्राप्नोतीत्यभिसन्धिः।

परः प्राह—न वयमेकेन[4] सह सम्बन्धविरोधात् कारणाद् एकं शब्दं रूपादिषु नेच्छामः; किन्त्वभिन्नानामवशिष्टानां रूपादीनां घटकम्बलपर्यङ्कादिषु नानाविधा येयमर्थक्रिया जलधारणप्रावरणादिः, तस्या विरोधः। तथा च—तत्सामर्थ्यख्यापनाय शब्दस्य विरोधात्। तेषां चाभेदः; तदाश्रयद्रव्यभेदाभावात्। एतदेव स्फुटयति—ते रूपादय एकस्वभावाः सन्तः समुदायान्तरे कम्बलादौ येयमसम्भाविनी उदकधारणविशेषादयर्थक्रिया, तामेव कुर्युः। तेन कारणेन तस्या अर्थक्रियायाः प्रकाशनायेमामेतेऽर्थक्रियां न ते तदसम्भाविनीमर्थक्रियां कुर्वन्ति, यथा त एव कम्बलगता रूपादयः सजातीयेभ्यः। तथा च घटगता अपि रूपादयः कम्बलगतेभ्यो रूपादिभ्योऽविशिष्टस्वभावा इति व्यापकानुपलब्धिः। एवमन्यत्रापि योज्यम्। इतीयं पूर्वपक्षरचना।

अत्रोत्तरमाह—भवतु नामेत्यादिना। तदनेन हेतोरसिद्धिमुद्भावयति।

---

१. निन्दायास्यो०-रा०। २. ०मेकेनैषा०-रा०। ३. ०सम्बन्धि०-रा०। ४. चेदयमेकेन-रा०

इति, किमिदं परस्परविविक्तरूपप्रतिभासाध्यक्षदर्शनमेनामुपेक्षते ।

अनिष्टं चेदं रूपादीनां प्रतिसमुदायं स्वभावभेदोपगमात् ।

यद्यन्य[1] एव[1] रूपादिभ्यो घटादीनामेकः स्यात् ?

अस्तु, तस्य प्रत्यक्षस्य सतोऽरूपादिरूपस्य तद्विवेकेन बुद्धौ स्वरूपेण प्रतिभासने किमावरणम् !

---

अयमत्रार्थः—न हि रूपादीनां कम्बलादिष्वभेदोऽस्ति; परस्पररूपविविक्तानामेव प्रत्यक्षप्रमाणपरिच्छेद्यत्वात् । एवं च सति इदं प्रत्यक्षं किमेनां वाञ्छामुपेक्षते । 'किम्' प्रश्ने, क्षेपे वा । नैव क्षन्तुमर्हति, अपाकरोतीति ।

किञ्च—अनिष्टं चेदमस्माभिर्घटकम्बलादिष्वभिन्ना रूपादय इति कुतो रूपादीनां प्रतिसमुदायत्वे हेतुबलादनपेक्षितद्रव्याणां स्वभेदाभ्युपगमात् । तदनेनाभ्युपगमद्वारेणाप्यसिद्धतां चोदयति, पूर्वेण प्रत्यक्षद्वारेणेति विशेषः ।

पुनरपीर्ष्यालुः परः प्राह—यद्यन्य एव रूपादिभ्यो घटः स्यात् । किं स्यादिति ? न कश्चिद् दोषः स्यादित्याकूतम् । न वयं मात्सर्यात् तं नेच्छामः, किन्तु भवत्येतावत्त्वत्र वक्तव्यमस्तीत्याह[2]—तस्यावयविनः प्रत्यक्षस्य सतः चक्षुःस्पर्शनेन्द्रियग्राह्यतयाभ्युपगतत्वात् । अरूपादिरूपस्य । रूपगन्धादिस्वभावरहितस्येत्यर्थः; गुणद्रव्ययोर्भेदाभ्युपगमात् । तद्विवेकेन रूपादिविवेकेन बुद्धौ चक्षुःस्पर्शनेन्द्रियजायां प्रतिभासने किमावरणम् ! न कश्चित् प्रतिबन्धः इत्यर्थः । न च कश्चिदित्यादरेणाप्रतिहतकरणोऽपि निरूपयन् नीलमधुरसुरभिकर्कशादिव्यतिरेकेण तद्रूपं विविक्तरूपं घटादिद्रव्यमुपलब्धुमीश इति मन्यते ।

अविद्धकर्णस्त्वाह—"रूपाद्यग्रहेऽपि द्रव्यग्रहणमस्त्येव; यतो मन्दमन्दप्रकाशेऽनुपलभ्यमानरूपादिकं द्रव्यमुपलभ्यतेऽनिश्चितरूपम्—गौः, अश्वो वेति । ननु च तत्रापि संस्थानमात्रमुपलभ्यते ? सत्यमुपलभ्यते, न तु तद्रूपाद्यात्मकम् । रूपाद्यात्मकत्वे वा नीलपीतादि विशेष ग्रहणप्रसङ्गः । तथा अयस्कञ्चुकान्तर्गते पुरुषे पुरुषरूपाद्यग्रहेऽपि पुरुषप्रत्ययो दृष्टः । रात्रौ च वलाकाव्यामुक्तरूपाद्यग्रहेऽपि पक्षिप्रत्ययो दृष्टः । तथा नीलाद्युपधानभेदानुविधायिनः स्फटिकमणेः स्फटिकरूपाद्यग्रहेऽपि स्फटिकप्रत्ययः । तथा कषायरूपेण पटरूपाभिभवे पटरूपाद्यग्रहेऽपि पटप्रत्ययो दृष्टः" इति ।

तदेतत् सर्वमस्याल्पकालोपचितकुदर्शनाभ्यासोपजातबुद्धिमान्द्यविजृम्भितमेव प्रकटयति वचः । तथा हि यत् तावदिदमुक्तम्—'मन्दमन्दालोके रात्रौ च नीलाद्युपधानसद्भावे च तद्रूपाद्यग्रहेऽपि द्रव्यमुपलभ्यते' इति, तत्र वक्तव्यम्—'कीदृशं तत्र द्रव्यमुपलभ्यते' इति ? दृश्यत एव तत् यादृशमुपलभ्यत इति चेत् ? ननु श्यामरूपं मन्दमन्दालोके रात्रौ च तत्र तदुपलभ्यते उपधानं रूपं च, न च तद्रूपं तत्; ताद्रूप्येऽनन्तरोदितपक्षक्षयप्रसङ्गात् । तत्समीपपार्श्ववर्तिभिश्च तथानुपलम्भात् । न चाप्यन्याकारेण[3] बोधेन वस्तुनोऽवगतिः; यस्य

---

१-१. यद्यन्यत्र च–रा० । २. वक्तव्यस्तो०–रा० । ३. चाप्यण्याका०–पा० ।

कस्यचिज्ज्ञानस्य सर्ववस्तुपरिच्छेदकत्वप्रसङ्गात्। तस्माद् भ्रान्तमेतद् ज्ञानं भ्रान्तिबीजात् स्वोपादानादनादिकालीनान्निर्विषयमेव तथाप्रतिभासि द्विचन्द्रादिप्रत्ययवदुपजायते। निर्विषयत्वेऽपि प्रतिनियतदेशकालभावि भवति; स्वोपादानवासनाप्रबोधकबाह्याधिपतिप्रत्ययापेक्षणात्, द्विचन्द्रादिज्ञानवदेव। भ्रान्तत्वेऽप्यर्थाविसंवादः; विशिष्टाधिपतिप्रत्ययसद्भावात्, मणिप्रभायां मणिभ्रान्तिरिव। न चार्थाविसंवादनादेवास्य सविषयत्वं युक्तम्; अनुमानेन व्यभिचारात्, मणिभ्रान्त्या च।

तदेव द्रव्यं तथा गृह्णाति, ततोऽन्यस्य निर्विषयत्वमिति चेत्? ननु न तद् द्रव्यं तद्रूपम्, न वान्याकारानुस्यूतः प्रत्ययोऽन्यस्य परिच्छेदक इत्युक्तम्, एवं च सति तद्विषयत्वे सत्यपेक्षेऽपि सद्विषयत्वमस्त्येव। तथा हि—ममाप्येतच्छक्यं वक्तुम्—त एव नीलादयस्तथा प्रतिभासन्त इति। असति भ्रान्तिसन्देहकारणे सालोकावस्थायां योग्यदेशावस्थाने च निरुपधानावस्थायां च नोपलभ्यते तद् द्रव्यमनात्मरूपप्रतिभासि विवेकेन, अन्यदा तु सति भ्रान्तिसन्देहकारणे निशान्धकारावच्छादितलोचनावस्थायां दूरदेशावस्थाने सोपधानावस्थायां च तदन्याकारविवेकेन प्रतिभासत इति कोऽन्यो भौतिकाद् वक्तुमर्हति!

अयस्कञ्चुकान्तर्गते पुरुषप्रत्ययो न प्रत्यक्षः, किं तर्हि? लैङ्गिकः। तथा हि—पुरुषशरीरावयवसमाश्रयबलोद्भूतविशिष्टसंस्थानावस्थितकञ्चुकदर्शनात् कार्यलिङ्गज्ञानात् सम्बन्धस्मरणापेक्षिणः कारणभूते तथाविधे पुंसि 'पुरुषोऽयम्' इत्यनन्तरमेव प्रत्ययः समुद्भूतिमासादयति। अत एव चास्पष्टाकारा सा प्रतीतिः, 'कश्चायम्' इति संशयश्च भवति। तथाविधसंस्थानस्य च कञ्चुकस्योत्पत्तेः पुरुषरूपादय एव हेतवो भवन्ति, न त्वन्यदवयवि द्रव्यम्; तस्यासिद्धेः। असिद्धस्य च कारणत्वाभ्युपगमायोगात्। रूपादिभिस्तु प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावसिद्धेः। तेषामेव केवलानां तथासन्निविष्टानामुपलम्भात्।

पटे तु कषायमञ्जिष्ठादिसम्पर्कादर्थान्तरमेव केवलं तत् तथा जातमीक्ष्यते, न तु नानारूपयोर्द्रव्ययोः संसर्गादविभागात् तथोपलम्भः। पुनस्तद्द्रव्यसंस्थानस्थितिकारणविच्छेदात् तन्निवृत्तिः। तदुपादानकारणापेक्षिणश्च जलपावकादेरपरोत्पत्तिरिति।

एतेनायोगोलकतद्रूपग्रहणेऽपि तत्प्रत्ययो दृष्ट इत्येतदपि प्रतिस्फुटम्। तदेवं द्रव्यस्य प्रत्यक्षत्वासिद्धेर्यदुक्तम्—"गवाश्वमहिषवराहमातङ्गा विमत्यधिकरणभावापन्ना रूपादिव्यतिरिक्ता इत्येव घोषणा; ऐन्द्रियकत्वे सति समस्तरूपादिग्राहकवाक्येन्द्रियानवच्छेद्यत्वात्, प्रीत्यादिवत्" इति, तदपहस्तितम्।

प्रयोगः पुनः—'यद् दृश्यं सदसद्व्यतिरेकेण नोपलभ्यते, तत् ततो भिन्नं नाभ्युपेयम्, नास्तीति वाभ्युपगन्तव्यम्। यथा नरशिरसि विषाणं नोपलभ्यते। दृश्यं सन्नीलादिषु तद्व्यतिरेकेण सामान्यविशेषसंयोगविभागपरत्वादिकमिति स्वभावानुपलब्धिः। नास्य सिद्धिः; दृश्यत्वेन स्वयमभ्युगमात्'। तथा 'रूपाद्यर्थपञ्चकव्यतिरिक्तत्वेनोपगतं द्रव्यं न चक्षुःप्रत्ययावसेयम्; उपलब्धिलक्षणप्राप्तत्वेनोपगतत्वे सति नीलादिवस्तुविरहात्, शब्दगन्धरसवत्'।

**प्रतिभासमानाश्च विवेकेन प्रत्यक्षा अर्था दृश्यन्तेऽपृथग्देशत्वेऽपि गन्धरसादयः, वातातपस्पर्शादयश्चैकेन्द्रियग्राह्यत्वेऽपि ।**

---

न च तस्माद्व्यतिरिक्त एवायम्, तत्र चायं दोष इत्याशङ्क्याह—सोऽतिशयो व्यवच्छेदलक्षणस्तस्यातिशयवतोऽवस्थातुरात्मभूतोऽनन्वय इत्येकान्तेन निवर्तमानः व्यापकत्वाभावात् प्रवर्तमानोऽसन्नेव कथं न स्वभावनानात्वं सुखदुःखधीरिवाकर्षति ! अन्वाकर्षत्येवेत्यर्थः ।

प्रयोगः पुनः—यो यस्यात्मभूतः स तन्निवृत्तावेकान्तेन निवर्तते, प्रवृत्तौ चासन्नेव प्रवर्तते, यथा तस्यैवातिशयस्यात्मा । आत्मभूतश्चातिशयस्यातिशयवानिति स्वभावहेतुः । ततश्च तयोरवस्थयोरवस्थातुर्नानात्वं परस्परविरोधिपर्याध्यासितत्वात् सुखदुःखवदिति स्वभावहेतुरेव ।

न वासावतिशयोऽनन्वयः प्रवर्तते, निवर्तते वा । अतः पूर्वस्मिन् प्रमाणे साध्यविकलत्वं दृष्टान्तस्य, उत्तरत्र त्वसिद्धिर्हेतोरिति चेद् ? आह—सान्वयत्वे चातिशयस्य निवृत्तिप्रवृत्त्योरङ्गीक्रियमाणे का कस्य निवृत्तिः, प्रवृत्तिर्वेति ! नैव काचित् कस्यचिन्निवृत्तिः, प्रवृत्तिर्वा; सर्वस्य सर्वदा सत्त्वात् ।

तथा च 'सर्वं सर्वत्र समुपयुज्येत' इत्यादिना पुरोऽनुक्रान्तो दोषोनोपयुज्यत इत्यभिप्रायः ।

उपचयमाह—यदि च कस्यचित् स्वभावस्यातिशयाख्यस्य प्रवृत्तिः, निवृत्तिर्वेति स्वयमभ्यनुज्ञायते त्वया, 'एकातिशयनिवृत्त्या, अपरातिशयोत्पत्त्या व्यवहारभेदोपगमाद्' इत्यभिधानात्, तदेतदेव परस्तथागतवचोऽभ्यासोपजातावदातमतिर्ब्रुवाणो नानुमन्यते भद्रमुखेन[1] । भवेदेवं यदि यथा मया प्रवृत्तिनिवृत्ती अभ्यनुज्ञायेते, तथा तेनापि । यावतास्य निरन्वयोपजननविनाशोपगमसमर्थावा द्रव्यस्यालोकनीलादिवत्, तद्व्यतिरेकेणाप्रतिभासमानमभिन्नेन्द्रियग्राह्यत्वाद् वा तद्वदेवेत्यत आह—प्रतिभासमानाश्च विवेकेन 'इदं नीलम्', 'इदं सुरभि', 'मधुरमिदम्', 'कर्कशमिदम्' इति चेति प्रत्यक्षा अर्था दृश्यन्ते अपृथग्देशत्वेऽपि सति । के ते रूपादयः । लोकप्रसिद्ध्या चेदमुक्तम्, न तु तेषामभिन्नदेशत्वमस्ति; "सप्रतिघा दश रूपिणः" ( अभि० को० १.२९ ) इति वचनात् । तथा अभिन्नेन्द्रियग्राह्येऽपि वातातपस्पर्शादय इति यथाक्रमं चैतदुत्तरम् ।

अनेनैकान्तिकत्वं हेतोरुद्भावयति । उपेत्य च धर्मिसम्बन्धम्, अभिन्नेन्द्रियग्राह्यत्वस्य व्यभिचार उक्तः, न त्वसावस्यास्तीत्येकदेशासिद्धेः । कथम् ? यतो न सुरभिमधुरादयो द्रव्यग्राहकेन्द्रियग्राह्याः; सर्वेन्द्रियत्वप्रसङ्गाद् द्रव्यस्य । आलोकनीलादीनां त्वभेद एव; यतः प्रदीपादिसन्निधानात् प्रकाशरूपा एव तथाविधस्वभावाध्यासितवपुषस्ते समुद्भवन्ति, न तु तेषां भेदोऽस्तीति साध्यविकलता दृष्टान्तस्येति मन्यते । तस्मादस्य प्रत्यक्षत्वमभ्युपगच्छद्भिर्न बहिरवश्यं रूपादिविवेकेन भासनमभ्युपगन्तव्यम्; अन्यथा प्रत्यक्षत्वासिद्धेः । कुतः ? यस्मात्

---

१. भद्रमुखेण–पा० ।

इदमेव च प्रत्यक्षस्य प्रत्यक्षत्वं यदनात्मरूपादिविवेकेन स्वरूपस्य बुद्धौ समर्पणम्। अयं पुनर्घटादिरमूल्यदानक्रयी[1] यः स्वरूपं च नोपदर्शयति, प्रत्यक्षतां च स्वीकर्तुमिच्छति।

एतेन बुद्धिशब्दादयोऽपि व्याख्याताः, यदि तैस्तत्साधनमिष्यते।

न च प्रत्यक्षस्यानभिभवे रूपानुपलक्षणम्; येन तत्साधनाय लिङ्गमुच्यते।

अप्रत्यक्षत्वेऽप्यप्रमाणस्य सत्त्वोपगमो न युक्तः। तन्न रूपादिभ्योऽन्यो घटः।

एवं तावद् न बुद्धिव्यपदेशाभ्यां सत्ताव्यवहारः, सत्तभेदाभेदव्यवहारो वा।

---

इदमेवेत्यादि। सुबोधम्।

अयं पुनर्घटादिर्भवद्भिः रूपादिव्यतिरेकेणाभ्युपगतः, कोऽसावमूल्यदानक्रयी यः। तदेतेन नायमीदृशो लोकव्यवहारपद्धतिमवतरतीत्याचष्टे। स स्वरूपं च नोत्कर्षेण दर्शयति, अप्रतिभासमानत्वात्; प्रत्यक्षतां च स्वीकर्तुमिच्छति; 'दार्शनं स्पार्शनं च द्रव्यम्' इति सिद्धान्ते पाठात्। इत्येतदात्मनिरन्तरप्रेमाणः सुहृदः प्रत्येष्यन्तीति अध्याहर्तव्यम्। मूल्यदानक्रया विद्यन्तेऽस्य मूल्यदानक्रयी न तथेति वृत्तिः। अथ वा—क्रेतुं शीलं यस्यासौ क्रयी, मूल्यदानेन क्रयी न तथा। कथमेतद्? इत्याह—यः प्रत्यक्षतामित्यादि। मूल्यदानं चात्र स्वरूपार्पणमित्युपहसति।

ननु च 'एको घटः' इति प्रत्ययव्यपदेशसद्भावाद् रूपादिवत् तदस्त्येव, तत् कथमस्यासत्त्वमिति चेद्? आह—बुद्धिशब्दादयोऽपि व्याख्याताः 'न च सर्वं' इत्यादिना। आदिशब्देन तद्भेदाभेदोपादानम्। यदि तैर्बुद्धिव्यपदेशादिभिस्तस्य साधनसिद्धिरिष्यते।

स्यादेतत्, प्रतिभासमानमपि द्रव्यं लवणरसाभिभवे खण्डरसवन्नोपलक्ष्यते, ततस्तत्प्रसाधनाय लिङ्गमुच्यते इति? अत आह—न च प्रत्यक्षस्यार्थस्य रूपानुपलक्षणं युक्तम्। द्रव्यान्तरेणानभिभवे सति। अभिभवे तु युक्तमेव; यथा खण्डादिरसस्य। न चात्र केनचिदभिभवोऽस्ति। नीलादिभिरस्तीति चेत्? न; "महत्यनेकद्रव्यवत्ताद्रूप्याच्चोपलब्धिः" ( वै॰द॰ ४. १.६ ), तथा "रूपसंस्काराभावाद् वायावनुपलब्धिः" (वै॰ द॰ ४. १. ८) इत्युक्तम्। तस्य चानुपलक्षणे तेषामप्यनुपलक्षणप्रसङ्गः। ततश्च सर्वपदार्थानामनुपलक्षणाल्लोकव्यवहारोच्छेद एव भवेदिति मन्यते। येन अनुपलक्षणेन तस्यावयविनः साधनाय लिङ्गमुच्यते, तदभावसाधनं च लिङ्गमभ्युपगम्येत, तद्भाष्यते, न तु तद्गमकं लिङ्गं किञ्चिदस्ति। यथोक्तं प्राक्।

तत्प्रतिपादकप्रमाणाभावेऽपि तदस्त्येवेति चेद्? आह—अप्रत्यक्षत्वेऽप्यप्रमाणस्य सत्त्वोपगमोऽयुक्त इति। 'अप्रमाणस्य' इत्यनेन प्रत्यक्षव्यतिरिक्ततत्प्रसाधकप्रमाणाभावमाह। यस्य सद्भावसाधकं प्रमाणं नास्ति, न तदस्तीत्यङ्गीकर्तव्यम्। यथा—नभस्तले कमलम्। नास्ति चावयविनोऽस्तित्वसाधकं प्रमाणमिति सद्व्यवहारप्रतिषेधफलामनुपलब्धिं मन्यते। एवं विस्तरेणैकद्रव्याभावं प्रतिपाद्य प्रकृतमुपसंहरति—तदित्यादिना। मूलप्रकरणमपि निगमयति—एवं तावदित्यादिना।

---

१. घटादे॰—रा॰।

**अत एव न तद्विपर्ययाद् विपर्ययः ।**

**अर्थक्रियातस्तु सत्ताव्यवहारः स्यात्, न सत्ताभेदाभेदव्यवहारः; एकस्याप्यनेकार्थक्रियादर्शनात् । यथा प्रदीपस्य विज्ञानवर्त्तिविकारज्वालान्तरोत्पादनानि; अनेकस्यापि चक्षुरादेरेकविज्ञानक्रियादर्शनात् ।**

**न ब्रूमः[1]–अर्थक्रियाभेदमात्रेण सत्ताभेद इति, किं तर्हि ? अदृष्टार्थक्रियाभेदेन । या अर्थक्रिया यस्मिन्नदृष्टा पुनर्दृश्यते, सा सत्ताभेदं साधयति । यथा—मृद्यदृष्टा सत्युदकधारणाद्यर्थक्रिया घटे दृश्यमाना, अदृष्टा च तन्तुषु प्रावरणाद्यर्थक्रिया पटे दृश्यते इति सत्ताभेदः ?**

**सिद्ध्यत्येवमर्थान्तरम्, तथाप्यवयवी न सिद्ध्यति । यथाप्रत्ययं संस्कार-**

---

अत एव न तेषां बुद्ध्यादीनां विपर्ययात् तेषां सत्तादीनां विपर्ययोऽभावः । यो हि यस्य भावमेव न साधयति, स कथमिव वर्तमानस्तदभावं साधयतीत्याकूतम् ।

यदि नाम बुद्ध्यादयः सत्तां भेदाभेदौ वा न साधयन्ति, अर्थक्रिया तु तान् साधयिष्यति ? इत्यत आह—अर्थक्रियातस्तु सत्ताव्यवहारः स्यादिति । तल्लक्षणत्वात् सत्त्वस्येति भावः । अनेनावयोरत्र साम्यमेवेति दर्शयति । अन्यत्र तु विवाद इत्याह—न सत्ताभेदाभेदव्यवहार इति । कुतः ? एकस्यापि अनेकार्थक्रियादर्शनात् । तत्र नैकप्रत्ययजनितं किञ्चिदस्ति, तत् कथमेवमुच्यते ? सत्यमेतद्; एकं बह्वीषु सामग्रीषु वर्तत इत्यनेकार्थकृदुच्यते । यदाह—

न किञ्चिदेकमेकस्मात् सामग्र्याः सर्वसम्भवः ।
एकं स्यादपि सामग्र्योरित्युक्तं तदनेककृत् ॥ (प्र० वा० २. ५३६) इति ।

किंवत् ? यथा प्रदीपस्य विज्ञानस्य वर्तिविकारस्य ज्वालान्तरस्य च स्वपरसन्तानसम्बन्धिक्षणान्तरस्योत्पादनानि, तदेवं सत्ताभेदव्यवहाराभावे कारणम् । कथमेकमनेकं कार्यमुत्पादयतीति चेति ? एकस्यैव ईदृशस्यानेककार्यजननात् तुर्यातिशयक्रोडीकृतम्, रूपवतः स्वहेतुभ्यः सञ्जातत्वादिति भावो न्यायतत्त्वविदः ।

तथा अनेकस्यापि चक्षुरादेरेकविज्ञानक्रियादर्शनात् अभेदव्यवहाराभावे कारणमेतत् ।

कणभुग्मतविपर्यस्तधियस्त्वाहुः—न ब्रूम इत्यादि । किं तर्हि, अदृष्टार्थक्रियाभेदेन । सत्ताभेद इति वर्तते । तदेव व्यनक्ति—या अर्थक्रिया मध्वाद्याहरणादिलक्षणा यस्मिन् घटादौ अदृष्टा सती पुनर्दृश्यते अन्यत्र घटादौ सा एवंविधा सत्ताभेदं साधयति । तेषां घटादीनामनेन व्याप्तिः कथिता । किमिव ? यथा मृद्यदृष्टा[2] सत्युदकधारणाद्यर्थक्रिया घटे दृश्यमाना । सत्ताभेदं साधयतीति प्रकृतेनाभिसम्बन्धः । दृष्टान्तकथनं चैतत् । अदृष्टा च तन्तुषु प्रावरणाद्यर्थकिया पटे दृश्यते इति । पक्षधर्मोपदर्शनमिति । तस्मात् सत्ताभेदः । तन्तुपटयोः सिद्ध इति शेषः । तदनेन साधनफलं सङ्कीर्तितम् । स्वभावहेतुश्चायम्; यस्मात् तददृष्टार्थक्रियाकरणमात्रानुबन्धी सत्ताभेद इति । तदेतेन तन्तुभ्यः पटस्यान्यत्वं साधयन् अर्थान्तरभूतावयवसिद्धिं मन्यते ।

आचार्यस्त्वाह—सिद्ध्यत्येवं तन्तुपटयोः सत्ताभेद इति प्रकृतम्, वाञ्छितार्थसिद्धिस्तु भवतो नैवास्तीत्यभिप्रायवानाह–अर्थान्तरं तथाप्यवयवी न सिद्ध्यतीति । कुत

---

१. क्रमार्थ०–रा० । २. पटेऽदृष्टा–रा० ।

सन्ततौ स्वभेदोत्पत्तेरर्थक्रियाभेदः । अरणिनिर्मथनावस्थादाविवाग्नेः स्थूलकरीष-तृणकाष्ठदहनशक्तिभेदः, तथा यथाप्रत्ययं स्वभावभेदोत्पत्तेस्तन्त्वादिष्वर्थक्रियाभेदः।

एतेन बुद्धिव्यपदेशभेदाभेदौ व्याख्यातौ ।

तत्र यदुक्तम्—'अर्थक्रियातः सत्ताव्यवहारसिद्धिः, विपर्ययाद् विपर्ययः' इति; सत्यमेतत् । स एव तु विपर्ययोऽनुपलब्धिलक्षणप्राप्तेषु न सिध्यति ।

तत्र पुनरिदमनिच्छतोऽप्यायातम्—'यस्येदं सामर्थ्यमुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते, सोऽसद्व्यवहारविषयः; सामर्थ्यलक्षणत्वात् सत्त्वस्य' इति ।

तथापि कोऽतिशयः पूर्वकादस्य ? न हि स्वभावादर्थान्तरं सामर्थ्यम्; तस्यो-

---

एतद् ? यतो यथाप्रत्ययमस्यां संस्कारसन्ततौ स्वभावभेदोत्पत्तेः कारणादर्थक्रियाभेदः प्रावरणादिलक्षणो भवति । एतदुक्तं भवति—पिण्डीकृतेभ्यस्तन्तुभ्य उपादान-कारणभूतेभ्यः कुविन्दादिसहकारिप्रत्ययसन्निधानाच्च विशिष्टसन्निवेशावच्छिन्ना एव तन्तवो जायन्ते । ये प्रावरणाद्यर्थक्रियायामुपयुज्यन्ते । तेभ्यश्च पूर्वेभ्यः पटस्यान्यत्वमिष्टमेवास्माभिरपि, न तु विशिष्टसंस्थानावच्छिन्नेभ्य इति त्यज्यता-मियमर्थान्तरावयविसिद्धिप्रत्याशेति ।

तदेतेनैव अविद्धकर्णोक्तम्—'पूर्वोत्तरकालभावित्वाद्' इत्यादि तत्साधनमप-हस्तितं वेदितव्यम् । अस्माभिस्तु विस्तरेण प्राक् प्रयुक्तमेवेति न पुनर्योज्यते ।

किंवत् प्रत्ययवशात्[1] स्वभावविशेषोत्पत्तेरर्थक्रियाभेदः[2] ? इत्याह—अरणि-निर्मथनेत्यादि[3] । सुज्ञानम् ।

दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमाह—तथा यथेत्यादि ।

अनेनैव यथाप्रत्ययस्वभावभेदेन यदेके चोदयन्ति—'ननु च तन्तवः पट इति बुद्धिव्यपदेशभेदात् कथमस्यान्यत्वं नास्ति' इति, तत् प्रतिक्षिप्तमित्याकूतवानाह—एतेन बुद्धिव्यपदेशभेदाभेदौ व्याख्याताविति ।

तत्रैवं स्थिते यदुक्तं प्राक् त्वया—अर्थक्रियातः सद्व्यवहारसिद्धिर्भवति, विपर्यया-च्चार्थक्रियानिवृत्ते विपर्ययोऽसद्व्यवहार इति ? सत्यमेतत्; एतावत्तु ब्रूमः—स एव विपर्ययोऽर्थक्रियाया अनुपलब्धिलक्षणप्राप्तेषु न सिद्ध्यति । तथा हि—यद्ययमुपलब्धि-लक्षणप्राप्तानुपलम्भो नेष्यते, तदा अस्यार्थक्रियासामर्थ्यं नास्तीति कथमधिगतं भवता ! न चानुपलब्धिमात्रादिति युक्तं वक्तुम्; तस्य व्यभिचारात् ।

तत्र पुनरनिच्छतोऽप्यायातं तव—यस्येदमर्थक्रियासामर्थ्यम् उपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते, सोऽसद्व्यवहारविषय इति । कुतः ? सामर्थ्यलक्षणत्वात् सत्त्वस्य ।

भवत्वेवम्, को दोषः ? इति चेदाह—तथापि कोऽतिशयः पूर्वकाद् अस्मादुपव-र्णितादुपलभ्यानुपलम्भात् अस्य सामर्थ्यानुपलम्भस्य भवत्परिकल्पितस्य । स्यान्मतम्—स स्वभावस्यैवानुपलम्भः, अयं तु पुनः सामर्थ्यस्य ? इत्यत आह—न

---

१. प्रत्ययवसात्–पा० । २. ०विशेषो०–रा० । ३. निर्मथनादित्यादि–रा० ।

पलब्धिलक्षणप्राप्तस्य योऽनुपलम्भः स स्वभावस्यैवेति पूर्वकैवेयमनुपलब्धिः।

तस्मादनेन क्वचित् केषाञ्चिदसद्व्यवहारमभ्युपगच्छता अतोऽनुपलम्भादभ्युपगन्तव्यः।

सोऽन्यत्रापि[1] तथाविधेऽविशिष्ट इति सोऽपि तथास्तु इति। न वा क्वचिद्; विशेषाभावात्। व्याप्तिः—सर्व एवंविधोऽनुपलब्धोऽसद्व्यवहारविषय इति[1]।

नैव कश्चित् क्वचित् कथञ्चिदनुपलब्धोऽप्यसद्व्यवहारविषय इति चेत्? सर्वस्य सर्वरूपाणां सर्वदानिवृत्तेः सर्वं सर्वत्र सर्वदा समुपयुज्येत।

इदं च न स्यात्–'इदमतः', 'नात इदम्', 'इहेदम्', 'इह नेदम्', 'इदानीमिदम्',

---

हीत्यादि। तथा च तस्य सामर्थ्यस्य योऽनुपलम्भः स स्वभावस्यैवेति तस्मात् पूर्वकैव स्वभावानुपलब्धिरेवेयं सामर्थ्यानुपलब्धिः। तस्माद् दृश्यानुपलब्धिरेवासद्व्यवहारसाधनेति स्थितमेतत्।

यस्माच्चैवम्, तस्मादनेन वादिना क्वचिच्छशविषाणादौ असद्व्यवहारमभ्युपमच्छता दृश्यानुपलम्भादभ्युपगन्तव्यः; अन्यस्य तत्प्रतिपत्त्युपायस्याभावादिति भावः। ततः सोऽनुपलम्भोऽन्यत्रापि सामान्यविशेषसंयोगावयविद्रव्यादौ तथाविधे उपलब्धिलक्षणप्राप्ते अविशेष इति सोऽपि सामान्यविशेषादिस्तथास्त्वसद्व्यवहारविषयत्वेनास्तीत्यर्थः।

स्यादेतत्, नैव सामान्यविशेषादिस्तथाविधोऽनुपलब्धोऽस्य सद्व्यवहारविषयः? इत्यत आह—न वा क्वचित् शशविषाणादावसद्व्यवहारोऽभ्युपगन्तव्यः। कुतः? विशेषाभावादनुपलम्भस्य।

अयमत्रार्थः—द्वयोरनुपलम्भे तन्निमित्ते तुल्येऽपि यद्यसद्व्यवहारः सामान्यादौ नोत्पद्यते, अन्यत्रापि तर्हि स नाभ्युपेयः; विशेषहेत्वभावादिति। अनेन च पूर्वोक्तमेव 'कस्यचिदसतोऽभ्युपगमे तल्लक्षणाविशेषात्' इति स्मारयति। तस्मात् सर्व एवंविधो दृश्यानुपलम्भोऽसद्व्यवहारस्य विषय इति व्याप्तिः। अनुपलब्धौ सिद्धेति शेषः।

कापिलास्त्वाहुः—'सर्वमेव सर्वात्मिकम्'। अन्यथा यदि मृत्पिण्डदुग्धबीजादिषु घटदध्यङ्कुरादयो न विद्यन्त एव शक्त्यात्मना, तदा कथं पुनस्तेभ्यस्तेषामुत्पत्तिः! न हि शशविषाणमविद्यमानं तत्रोदेति। एवं च सति दृश्यः सन्ननुपलब्धोऽपि कश्चित् घटादिः क्वचित् देशादौ कथञ्चिच्च संस्थानविशेषादिना नैवाभावव्यवहारविषयो भवतीति। तेषां मतमाशङ्कते—नैवेत्यादिना।

"एतत् साङ्ख्यपशोः कोऽन्यः सलज्जो वक्तुमीहते।
अदृष्टपूर्वमस्तीति तृणाग्रे करिणां शतम्"॥ (प्र० वा० १. १६७-६८)

इत्यभिप्रायवानाह—सर्वस्येत्यादि। यद्यदृष्टमपि तत्रास्ति, तदा सर्व एव क्षीरादयः सर्वैर्घटादिरूपैरनुमतत्वात् तत्साध्यामर्थक्रियां कुर्युरित्यर्थः। किञ्च—इदमपरं न स्यात्। इदं दध्यादिकार्यम् अतः क्षीरादेर्भवति, नान्यतो जलादेः। यदि वा—नातः क्षीरादेः इदं मध्वादिकम्। तथा—इदं कुङ्कुमादिकम् इह कश्मीरा-

---

१–१. रा० पुस्तके व्यत्ययेनायं पाठो दृश्यते।

'इदानीं नेदम्', 'इदमेवम्', 'इदं नैवम्' इति; कस्यचिदपि रूपस्य कथञ्चित् क्वचित् कदाचिद् विविक्तहेतोरभावात्। अनन्वयव्यतिरेकं विश्वं स्यात्, भेदाभावात्।

अवस्थानिवृत्तिप्रवृत्तिभेदेभ्यो व्यवस्थेति चेत्[1]? नन्वत एव सर्वविषयस्याऽसद्व्यवहारस्याभावान्न ते सम्भवन्ति, यतस्तेभ्यो व्यवस्था स्यात्!

क्वचिद् विषयेऽसद्व्यवहारोपगमे स कुत इति वक्तव्यम्। न ह्यनुपलम्भादन्यो व्यवच्छेदहेतुरस्ति; विधिप्रतिषेधाभ्यां व्यवच्छेदे सर्वदानुपलम्भस्यैव साधनत्वात्।

अनुपलम्भादेव तदभ्युपगमे, स यत्रैवाऽस्ति सर्वोऽसद्व्यवहारविषय इति वक्तव्यम्; विशेषाभावात्।

---

दिदेशे, नेदमिह मालविकादिदेशे। यदि वा—नेदं चन्दनादिकमिह। तथा—इदं कुन्दादिकम् इदानीं शिशिरसमये, न त्विदमिदानीं निदाघकाले। अथ वा—नेदं कमलादिकमिदानीम्। तथेदं खण्डादिकम् एवं माधुर्यादिगुणविशिष्टम्, नेदमेवं कटुकादिरूपम्। यद्वा—नेदं निम्बादिकमेवमिति व्याख्यातव्यम्।

किं कारणमेवमेतद्? इत्यत आह—कस्यचिदपीत्यादि। 'इदमेवंविधमधुनाऽस्य रूपं नास्ति' इति योऽयं विवेकस्तस्य हेतोरभावात्। सर्वस्य सर्वरूपाणां सर्वदानुवृत्तेरिति मतिः।

नन्विदमनन्तरमेव वस्तुतोऽभिहितमेव—'सर्वं सर्वत्र समुपयुज्येत' इत्यत्र, तत् किमिदं पुनश्चर्वितचर्वणमास्थीयत इति चेत्? सत्यम्; पूर्वं कारणगतो व्यापारः कथितः, अधुना तु कार्यगत इति विशेषाददोषः।

इदं चान्यतरमुखेन[1] दूषणवचनं शिष्यव्युत्पादनाय। ततश्च भेदाभावान्न विद्येते अन्वयव्यतिरेकौ यस्मिन्निति विग्रहः। 'इदमत्रास्ति' इत्याद्यन्वयः, 'नास्ति' इति व्यतिरेकः।

परः प्राह—अवस्थेत्यादिना। एतदुक्तं भवति—यत्र यद् व्यक्तं तत् तत्रास्तीत्यादि व्यवह्रियते। यत्र तु यन्नैव व्यक्तं तत्र तन्नास्तीत्यतोऽयमदोष इति।

नन्वित्याद्याचार्यः[2]। त एवावस्थानिवृत्तिप्रवृत्तिभेदा न सम्भवन्ति तावकीने दर्शने। कुतः? सर्वविषयस्यासद्व्यवहारस्याभावात्।

अथापि क्वचिद् विषयेऽसद्व्यवहार इष्यते, तदा तस्य कारणं भवद्भिर्वक्तव्यम्? इत्याह—क्वचिदित्यादि। यदि वावश्यमनेन परिकल्पिते व्यतिरिक्तावयव्यादावसद्व्यवहारोऽङ्गीकर्तव्यः, स चास्य न युक्तः; हेत्वभावात्? इत्याह—क्वचिदित्यादि। कुतः? यस्मान्न हि अनुपलम्भादन्यो व्यवच्छेदस्याभावस्य हेतुरस्ति प्रसाधक इति शेषः। स च त्वया नेष्टव्य[3] इति भावः। कस्मादेवम्? यतो विधिना स्वभावविरुद्धोपलम्भादौ प्रतिषेधेन व्यापकानुपलम्भादौ व्यवच्छेदे साध्येऽनुपलम्भस्यैव सर्वदा साधकत्वात्।

अथाहमप्यस्मादेवानुपलम्भाद् व्यवच्छेदं साधयामीति ब्रूषे? तदत्रापि ब्रूम इत्याह—सोऽनुपलम्भो यत्रैवास्ति, स सर्वोऽसद्व्यवहारविषय इति वक्तव्यम्। किमिति?

---

१. ०मुखेण—रा०। २. न त्वित्या०—रा०। ३. नेष्टक—रा०।

सर्वप्रमाणनिवृत्तिरनुपलब्धिः। सा यत्र सोऽसद्विषय इष्ट इति चेत्? सुकुमारप्रज्ञो देवानाम्प्रियो न सहते प्रमाणचिन्ताव्यवहारपरिक्लेशम्, येन नात्रादरं कृतवान्!

न ह्यनुमानादिनिवृत्तिरभावं गमयति; व्यभिचारात्। न सर्वप्रत्यक्षनिवृत्तिः; असिद्धेः।

नात्मप्रत्यक्षाविशेषनिवृत्तिरपि[1] विप्रकृष्टेषु।

तस्मात् स्वभावविशेषो यतः प्रमाणान्नियमेन सद्व्यवहारं प्रतिपद्यते, तन्निवृत्तिस्तस्यासद्व्यवहारं साधयति; तत्स्वभावसत्तायाः तत्प्रमाणसत्तया इष्टेः।

---

विशेषाभावात्। तथा च घटादेरपि[2] क्वचित् प्रदेशविशेषादौ असद्व्यवहारविषयत्वं सिद्धम्; तथाविधस्यानुपलम्भस्यात्रापि भावात्। तत् किं ब्रूषे—नैव क्वचित् कश्चित् दृष्टोऽप्यसद्व्यवहारविषय इत्यभिप्रायः। अन्यथा अत्रापि व्यतिरिक्तावयव्यादौ मा भूदसद्व्यवहार इति यावत्।

सर्वप्रमाणनिवृत्तिरित्यादि परः। तथा चायुक्तमुक्तम्—'न ह्यनुपलम्भादन्यो व्यवच्छेदहेतुरस्ति' इति। एवं च सति न घटस्यापि क्वचिदसद्व्यवहारविषयत्वम्; आगमानुमानभावेन सर्वप्रमाणनिवृत्तेरभावादिति मन्यते।

कुतः पुनरिदमतिप्रज्ञाकौशलमासादितं भवता? इत्याचार्योपहसति—सुकुमारप्रज्ञ इत्यादिना। न प्रसहते प्रमाणचिन्तापरिक्लेशमिति सुकुमारप्रज्ञत्वे कारणम्।

ननु च किमत्रायुक्तमुक्तमस्माभिः, येनोपहससि? इत्याह—न हीत्यादि। आदिशब्देनागमपरिग्रहः। व्यभिचारश्च पूर्वमेव प्रतिपादितः। सर्वप्राणिप्रत्यक्षनिवृत्तिस्तर्हि गमयिष्यति? इत्याह—न सर्वप्रत्यक्षनिवृत्तिरिति। कुतः? असिद्धेः। आत्मपरयोरप्रतिपत्तेरित्यर्थः। न ह्यत्र सर्वेषां प्रत्यक्षं निवृत्तमिति निश्चये प्रमाणमस्ति किञ्चित्।

आत्मप्रत्यक्षनिवृत्तिरेव तर्हि गमयतीति चेद्? आह—नात्मप्रत्यक्षाविशेषनिवृत्तिरपीति। न केवलं पूर्वोक्ता, इत्यपि-शब्दः। अविशेषेण निवृत्तिः अविशेषनिवृत्तिः, आत्मप्रत्यक्षस्याविशेषनिवृत्तिः आत्मप्रत्यक्षाविशेषनिवृत्तिरिति व्युत्पत्तिक्रमः। सन्निहितसकलतदन्यकारणस्य त्वात्मप्रत्यक्षस्य निवृत्तिस्त्रिविधविप्रकर्षाविप्रकृष्टेऽभावं गमयत्येवेति कथनायाविशेषविप्रकृष्टवचनम्[3]।

यस्मात् सर्वप्रमाणनिवृत्तिर्नासद्व्यवहारहेतुः, तस्मात् स स्वभावविशेषस्त्रिविधविप्रकर्षाविप्रकृष्टरूपो भावः; यतः प्रमाणात् सन्निहितसमस्ततदन्यक्रियादिकारणात् प्रत्यक्षात् नियमेन सद्व्यवहारं प्रतिपद्यते समासादयति। तस्यैव यथोक्तस्य प्रमाणस्य निवृत्तिस्तस्य स्वभावविशेषस्यासद्व्यवहारं प्रसाधयति। अवधारणमनुमानादिनिवृत्तेर्व्यवच्छेदाय।

किं कारणं तस्य स्वभावविशेषस्य स्वभावसत्तायास्तस्य यथोक्तस्य प्रमाणस्य येयं सत्ता तया व्याप्तः? कारणात्। तथा हि—यत्र स तादृग्विधः पदार्थः, तत्रावश्यं

---

१. ०क्षविषयनि०—रा०। २. घटादिरपि—पा०। ३. कथनीया०—रा०।

न चोपलब्धिलक्षणप्राप्तस्यार्थस्याप्रत्यक्षादन्योपलब्धिः, येनानुमानादस्योपलब्धिः स्यात् । न च तद्रूपान्यथाभावमन्तरेणाप्रत्यक्षता, अन्यथाभावे च तदेव न स्यात् ।

अपि च—कुत इदममन्त्रौषधमिन्द्रजालं[1] भावेन शिक्षितम्, यदयमजातानष्टरूपातिशयोऽव्यवधानदूरस्थानस्तस्यैव तदवस्थेन्द्रियादेरिव पुरुषस्य कदाचित् प्रत्यक्षः, अप्रत्यक्षश्च; येन कदाचिदस्यानुमानमुपलब्धिः, कदाचित् प्रत्यक्षम्, कदाचिदागमः !

---

तेनापि प्रमाणेन भवितव्यम्; समर्थस्य कारणस्य कार्याव्यभिचारात् । एवं च–एतत् प्रमाणं तद्व्यापकत्वान्निवर्तमानं तामपि वृक्षवच्छिंशपां निवर्तयति । अनेन च 'यथोक्तादुपलम्भाद्' इत्याद्युपसंहरति ।

स्यादेतत्, उपलब्धिलक्षणप्राप्तमपि क्षीरादिषु दध्यादिकं न प्रत्यक्षेणोपलभ्यते, अपि त्वनुमानेनाशक्तादनुत्पत्तिरित्यतो न तन्निवृत्त्याप्यसद्व्यवहारविषयत्वं तस्य ? इत्यत आह–न चेत्यादि । येनान्योपलब्धित्वेनानुमानादस्योपलब्धिः स्यात् । किं पुनरन्योपलब्धिर्न युज्यते ? इत्याह—न चेत्यादि । यस्मादर्थे चकारः । तस्य रूपस्योपलब्धिलक्षणप्राप्तस्यान्यथाभावप्रच्युतिर्न तमन्तरेणाप्रत्यक्षः । स भावो युक्त इति शेषः । तदेतेन प्रत्यक्षमेव तस्योपलब्धिः, अपेक्षणीयस्य कस्यचिद्धेतोरभावादिति प्रसाधयति ।

प्रयोगः पुनः—यद्यदासन्निहितसकलाप्रतिबद्धसामर्थ्यकारणम्, तदा भवत्येव, न चाक्षेपकारि । यथा समग्राप्रतिहतसामर्थ्यकारणसामग्रीकोऽङ्कुरः । तथा च—क्षीराद्यवस्थासु यथोपदिष्टपक्षधर्मवद् दध्यादिविषयं ज्ञानमिति स्वभावहेतुः । द्वितीयसाध्यापेक्षया व्यापकविरुद्धोपलब्धिः । अन्यथा त्वन्तस्य भवत्येव, अतोऽयं हेतुरसिद्धः इति चेद् ? आह—अन्यथा भावे चेष्यमाणे तदेवोपलक्षणप्राप्तं दध्यादि न स्यात्; प्राच्यरूपात् प्रच्युतेः । तथा च–तद्रूपतायां निरन्वयविनाशप्रसङ्ग इति भावः ।

अपि चेत्यादिनोपचयमाह । यदयं भावः—अजातोऽनष्टश्च रूपातिशयो यस्येति विग्रहः । नित्यमेकत्वरूपत्वाद् द्रव्यान्तरेण व्यवधाने दूरदेशस्थितौ च भवेयुरपि प्रत्यक्षत्वाप्रत्यक्षत्वादय इति ? अत आह—अव्यवधानदूरस्थान इति । न विद्येते[2] व्यवाधानदूरस्थाने चास्येति विग्रहः । क्वचिद्–अव्यवधानादूरस्थान इति पठ्यते । तत्र व्यवधान-दूरस्थानशब्दयोः प्रत्येकं नञा समासं कृत्वा पश्चाद् विशेषणसमासः कार्यः । कञ्चित् पुरुषमपेक्ष्य कोऽपि प्रत्यक्षोऽन्यं चापेक्ष्याप्रत्यक्ष[3] इति न विरोध इति ? आह—तस्यैव । तस्याप्युन्मीलितलोचनाद्यवस्थायां प्रत्यक्षः, अन्यदा चाप्रत्यक्ष इति न काचित् क्षतिः ? इत्याह— तदवस्थेन्द्रियादेरेव । तदवस्थमविकृतमिन्द्रियमस्येति विग्रहः । आदि-ग्रहणं मनस्काराद्याक्षेपाय । कदाचिदभिव्यक्तिवेलायां प्रत्यक्षो भवति, कदाचिच्चानभिव्यक्तक्षीरादिवेलायामप्रत्यक्षश्चेति येन प्रत्यक्षाप्रत्यक्षत्वे कदाचिद् अनुमानस्योपलब्धिः, अशक्तादनुत्पत्तेरिति । कदाचित् तु व्यक्तावस्थायां प्रत्यक्षम् ।

---

१. इदमन्त्रौ०–रा० । २. विद्यते–रा० । ३. प्रत्यक्ष–रा० ।

तस्मान्नैवानतिशये अमीषां प्रकाराणां विरोधात् ।

नानतिशयनिवृत्त्या, अपरातिशयोत्पत्त्या च तैर्व्यवहारभेदोपगमात् ।

सोऽतिशयस्तस्यात्मभूताऽनन्वये निवर्तमानः प्रवर्तमानश्च कथं न स्वभावनानात्वमाकर्षयति, सुखदुःखवत् । सान्वयत्वे च का कस्य प्रवृत्तिर्निवृत्तिर्वा इति यत्किञ्चिदेतत् ।

अथवा यदि च कस्यचित् स्वभावस्य प्रवृत्तिर्निवृत्तिर्वेति[1] स्वयमप्यनुभ्यनुज्ञायते[2], तदेतदेव परो ब्रुवाणः किमिति नानुमन्यते ।

---

किं पुनरत्रायुक्तम्, येनैवं ब्रूषे इति चेद् ? आह—एकस्मिन्नेवानतिशये दध्यादावमीषां प्रकाराणां प्रत्यक्षत्वाप्रत्यक्षत्वादीनां विरोधादिति । ये परस्परविरुद्धरूपाः, न तेषामेकत्रानतिशये सम्भवः; तद्यथा—शीतोष्णस्पर्शादीनाम् । परस्परविरुद्धाश्च प्रत्यक्षत्वाप्रत्यक्षत्वादय इति व्यापकविरुद्धोपलब्धिं मन्यते ।

परः प्राह—नानतिशय इति । एकस्य अव्यक्तावस्थालक्षणस्यातिशयस्य निवृत्त्या, अपरस्य व्यक्तावस्थालक्षणस्योत्पत्त्या च क्षीरं दधीति व्यवहारस्योपगमात् । अनेन अजातानष्टरूपातिशय इत्यादेरसिद्धत्वमाह ।

न तावदयमतिशयो भवद्भिरतिशयवद् भावव्यतिरिक्तोऽभ्युपगतः, अभ्युपगमे वा तदवस्थोऽनन्तराभिहितो दोषः स्यात् । तस्मादव्यतिरिक्त एवायम्, तत्र चायं दोष इत्याचार्याह—सोऽतिशयो व्यवस्थालक्षणस्तस्यातिशयवतोऽवस्थातुरात्मभूतोऽनन्वयइत्येकान्तेन निवर्तमानः, व्यापकस्वभावात् प्रवर्तमानोऽसन्नेव कथं न स्वभावनानात्वं सुखदुःखयोरिवाकर्षति । अन्वाकर्षत्येवेत्यर्थः ।

प्रयोगः पुनः—यो यस्यात्मभूतः स तन्निवृत्तावेकान्तेन निवर्तते, प्रवृत्तौ चासन्नेव प्रवर्तते; यथा तस्यैवातिशयस्यात्मा । आत्मभूतश्चातिशयस्यातिशयवानिति स्वभावहेतुः । ततश्च तयोरवस्थयोरवस्थातुर्नानात्वं परस्परविरोधिधर्माध्यासितत्वात् सुखदुःखवदिति स्वभावहेतुरेव । नैवासावतिशयोऽनन्वयः प्रवर्तते, निवर्तते वा; अतः पूर्वस्मिन् प्रमाणे साध्यविकलत्वं दृष्टान्तस्य, उत्तरत्र त्वसिद्धिर्हेतोरिति चेद् ? आह—सान्वयत्वे चातिशयस्य निवृत्तिप्रवृत्त्योरङ्गीक्रियमाणे का कस्य निवृत्तिः प्रवृत्तिर्वेति । नैव काचित् कस्यचित् निवृत्तिः, प्रवृत्तिर्वा; सर्वस्य सर्वदा सत्त्वात् । तथा च 'सर्वं सर्वत्र समुपयुज्येत[3]' इत्यादिना पुरोऽनुक्रान्तो दोषो नोपयुज्यते इत्यभिप्रायः ।

उपचयमाह—यदि च कस्यचित् स्वभावस्यातिशयाख्यस्य प्रवृत्तिर्निवृत्तिर्वेति स्वयमभ्यनुज्ञायते त्वया; एकातिशयनिवृत्त्या, अपरातिशयोत्पत्त्या व्यवहारभेदोपगमादित्यभिधानात् । तदेतदेव परस्तथागतवचोऽभ्यासोपजातावदातमतिर्ब्रुवाणो नानुमन्यते भद्रमुखेन[4] । भवेदेवम्, यदि यथा मया प्रवृत्तिनिवृती अभ्यनुज्ञायेते, तथा तेनापि । यावतास्य निरन्वयोपजननविनाशोपगमः, मम तु आविर्भावतिरोभावमात्रम्,

---

१. प्रवृत्तिनिवृत्ती-रा० । २. ०मप्यनुक्रियते-रा० । ३. समुपयुजेत-पा० । ४. भद्रमुखेण-पा० ।

तस्य निरन्वयोपजननविनाशोपगमादिति चेत् ?

कोऽयमन्वयो नाम ? भावस्य जन्मविनाशयोः शक्तिः, सास्त्येव प्रागपि जन्मनो निरोधादप्यूर्ध्वम् ; तेनायं नापूर्वः सर्वथा जायते, न पूर्वो विनश्यतीति।

यदि सा सर्वदानतिशया, किमिदानीमतिशयवद्, यत्कृतोऽयं व्यवहारविभागः ?

ता अवस्था अतिशयवत्य इति चेत्; ता अवस्थाः सा च शक्तिः किमेको भावः ? आहोस्वित् नाना ?

एकश्चेत्, कथमिदानीमिदमेकत्राविभक्तात्मनि निष्पर्यायं परस्परव्याहतं योक्ष्यते—जन्माजन्म निर्वृत्तिरनिर्वृत्तिः, एकत्वं नानात्वम्, प्रत्यक्षता अप्रत्यक्षता, अर्थक्रियोपयोगः, अनुपयोगश्चेत्यादि।

---

तत् कथमिवानुमन्यते इति कदाचित् ब्रूयात् पर इति तन्मतमाशङ्कते–तस्येत्यादिना।

सदैव भवद्भिः शून्यहृदयैरयमन्वयो घोष्यते, तत्र वक्तव्यम्—कोऽयमन्वयो नाम ? भावस्य जन्मविनाशयोरिति शक्तिरेषा[1]। परः प्राह–किमत्राभिधानीयम्, यावता शक्तिरन्वयो भावस्य जन्मविनाशयोरिति वर्तते। कथं पुनः सान्वयः ? इत्याह—यतोऽस्त्येव प्रागपि जन्मनो निरोधादप्यूर्ध्वं सा शक्तिरवस्थातृलक्षणा। येनैतदेवम्, तेनायं भावो नापूर्वः सन् सर्वथा जायते। अपि तु शक्तिरूपेण पूर्वं व्यवस्थित एव केवलमाविर्भवतीति सर्वथाग्रहणेन ज्ञापयति। तथा न पूर्वो विनश्यति एकान्तेन, अपि तु तिरोभवति। असतो नास्त्युदयः, सतश्च नास्ति विनाश इति यावत्।

आचार्य आह—यदि सा शक्तिः सर्वदा तिरोभावाविर्भावकालेऽनतिशया अतिशयरहिता, एकरूपेति यावत्, तदा किमिदानीमतिशयवद् विद्यते; यत्कृतोऽयं[2] व्यवहारविभागः—क्षीरम्, दधि, तक्रमित्यादि।

साङ्ख्य आह—अवस्था अतिशयवत्य इति।

ता इत्याद्याचार्यः। विकल्पद्वयं च प्रकारान्तरासम्भवात् कृतम्। न वाऽह्लीकवादो युज्यते; तत्त्वान्यत्वयोः परस्परपरिहारस्थितिलक्षणतया तृतीयराशिव्यतिरेचकत्वात्।

एकत्वे को दोष इति चेद् ? आह—एकश्चेत्, तदा कथमिदमेकत्राविभक्तात्मन्यविभक्तरूपे योक्ष्यते। व्यपेक्षया भवेदपि ? इत्याह–निष्पर्यायम्। किं पुनस्तत् परस्परव्याहतम् ? इत्याह–जन्म अवस्थानामजन्मशक्तेः। तथा अर्थक्रियायामुपयोगोऽवस्थानाम्, शक्तेस्त्वनुपयोग[3] इति।

प्रयोगः पुनः—'शक्तेरपि जन्मास्ति; अवस्थाभ्योऽव्यतिरेकात्, अवस्थास्वरूपवत्'। 'अवस्थानां वा न जन्म; शक्तेरव्यतिरेकात्, शक्तिस्वरूपवत्'। स्वभावहेतुविरुद्धव्याप्तोपलब्धिः। एतेनैव प्रकारेणार्थक्रियोपयोगानुपयोगनिवृत्त्यनिवृत्त्यादिषु स्वभावहेतुविरुद्धव्याप्तोपलब्धयो योज्याः। आदिग्रहणेन पतनापतनयोरपि परिग्रहः।

---

१. सत्यं एषा–रा०। २. यतः कुतोऽयं–रा०। ३. शक्तस्त्वनुपयोग–रा०।

अस्ति पर्यायोऽवस्था शक्तिरिति, तेनाविरोध इति चेत्; विस्मरणशीलो देवानाम्प्रियः प्रकरणं न लक्षयति। शक्तिरवस्थेत्येको भावोऽविभाग इति यत् कोऽयं विरोध उक्तः!

अथाप्यनयोर्विभागः; न कश्चिद्विरोधः, केवलं सान्वयौ भावस्य जन्मविनाशौ इति न स्यात्।

तस्माद् यस्यान्वयो न तस्य जन्मविनाशौ, यस्य वा तौ न तस्यान्वयः।

तयोरभेदाददोष इति चेद् ? अनुत्तरं बत दोषसङ्कटमत्रभवान् दृष्टिरागेण प्रवेश्यमानोऽपि नात्मानं चेतयति! अभेदो हि नामैक्यम्, ताविति अयं च भेदाधिष्ठानो भाविको व्यवहारः, निवृत्तिप्रादुर्भावयोः अनिवृत्तिप्रादुर्भावौ, स्थितावास्थितिरित्यादिकं नानात्वलक्षणं च कथं योत्स्यते ?

अथ हि भावानां भेद एतद्विरहश्चाभेदः, यथा—सुखादिषु शक्त्यवस्थयो-

---

पुनरपि साङ्ख्यीयमतमाशङ्कते—अस्तीत्यादिना। केनचित् पर्यायेण अवस्थाशक्त्योरनन्यत्वम्, परमार्थतस्तु भेद एव, तेन जन्मादीनामविरोध इति ? नूनं भवतः स्वपक्षरक्षणाकुलबुद्धेरात्मापि विस्मृत इत्याकूतवानाह—विस्मरणशील इत्यादि। यतोऽनन्यत्वपक्षेऽयं दोषोऽस्माभिरुक्तः, अन्यत्वपक्षे त्वन्य एव भविष्यति।

कः पुनरसावन्यः ? इति तमेव दर्शयितुमुपक्रमते—अथाप्यनयोः शक्त्यवस्थयोर्विभागोऽन्यत्वम्, तदा न कश्चिद् विरोधः। केवलं सान्वयौ[1] भावस्य जन्मविनाशाविति[2] न स्यात्। किं कारणम् ? यस्मात् यस्यान्वयः शक्तित्वेनाभिमतस्य, न तस्य जन्मविनाशौ; नित्यमेकस्मिन्नेव स्वभावे व्यवस्थानात्। यस्य वा तौ उत्पादविनाशावस्थात्वेनाभीष्टस्य, न तस्यान्वयः; अपरापरावस्थोदयास्तमयेनावस्थितरूपाभावात्।

तयोः शक्तिव्यक्त्योरभेदाददोष इति कापिलः। अनुत्तरमित्याद्याचार्यः। किमत्रायुज्यमानकम्, येनैवं वदसि ? इत्याह—अभेदो हि नामैक्यमुच्यते। तौ शक्तिव्यक्तिभेदाविति, अयं च भेदाधिष्ठानोऽन्यत्वनिबन्धनो व्यवहारो भाविक इति कल्पनाविरचितस्याप्रतिक्षेपात्।

किञ्च—निवृत्तिप्रादुर्भावयोः सतोरनिवृत्तिप्रादुर्भावौ। तथा स्थितौ सत्यामस्थितिः। आदिग्रहणात् 'गतावगतिः' इत्यादि योज्यम्।

एतद् भेदलक्षणं कथं योज्यते भवता, तथा हि—अवस्थानिवृत्तिप्रादुर्भावाभ्यामनिवृत्तिप्रादुर्भाववत्याः शक्तेरभेदो नेष्यते त्वया, तथा शक्तेरवस्थानेऽपि नावस्थानामवस्थानम्, न च शक्तेस्तासामन्यत्वमिष्टम्, तस्मादेवं रूपं नानात्वम् ? इत्याह—एष हि निवृत्तिप्रादुर्भावयोरनिवृत्तिप्रादुर्भावौ इत्यादि भेदः। तथा हि—यन्निवृत्त्यादिना न यस्य निवृत्त्यादयः, तत् तस्माद् भिन्नम्, यथा तालतरुः तमालादित्यतिप्रतीतमेतत्। एतद्विरहश्चाभेद इति। यन्निवृत्त्या यस्य निवृत्तिरित्यादि।

---

१. सान्वयो—रा०। २. जन्म विनाशादिति—रा०।

श्चैकात्मनि। अन्यथा भेदाभेदलक्षणाभावाद् भेदाभेदयोरव्यवस्था स्यात्सर्वत्र ?

तदात्मनि प्रादुर्भावोऽभेदः, विपर्यये भेदः, यथा—मृदात्मनि प्रादुर्भवतो घटस्य तस्मादभेदः, भेदश्च विपर्यये सुखदुःखयोरिति इदं भेदाभेदलक्षणम्, तेनाविरोध इति चेत् ?

न वै मृदात्मनि घटस्य प्रादुर्भावः, किं तर्हि ? मृदात्मैव कश्चिद् घटः, न ह्येकस्त्रैलोक्ये मृदात्मा। प्रतिविज्ञप्तिप्रतिभासभेदश्च द्रव्यस्वभावभेदात्। एवं ह्यस्यापि सुखादिषु चैतन्येषु भेदावगमः समर्थो भवति।

यद्येवम्, भेदः स्यात्।

सत्यप्येतस्मिन् कस्यचिदात्मनोऽन्वयादैक्यमिति चेत्? सुखादिष्वप्ययं प्रसङ्गः, चैतन्येषु च।

---

ननु च भूतभौतिकचित्तचैत्तादीनां प्रतिनियतसहोत्पादनिरोधस्थितीनामेतद् विद्यते, न च तेषामभेदः, तत् कथमुक्तम्—एतद्विरहश्चाभेद इति चेत् ? न; तेषां भिन्नोत्पादादिमत्त्वात्। यथाक्रममुदाहरणद्वयमाह—यथेत्यादि। अन्यथेति। यद्यनन्तरोक्तं भेदाभेदलक्षणं नाश्रीयते, तदा भेदाभेदयोर्लक्षणाभावात्[1] कारणात् भेदाभेदयोरव्यवस्था स्यात् सर्वत्रेति। सुखादीनां परस्परम् चैतन्यानां च। सुखादिभ्यश्चैतन्यानामभेदः। सुखादीनां प्रत्येकं भेदो न भवेदिति यावत्।

तदात्मनीत्यादिना परः स्वसमयप्रतीतं भेदाभेदयोर्लक्षणमाह। तेनाविरोध इति। जन्माजन्मादीनाम्, अनन्तरोक्तस्य वा।

न वै मृदात्मनीत्यादिना मृत्पिण्डघटयोराधाराधेयभावं प्रतिक्षिपति। किं तर्हि ? मृदात्मैव कश्चिद् विशिष्टग्रीवादिसन्निवेशावच्छिन्नो घट इत्यभिधीयते। नन्वेकमेव मृद्द्रव्यं सर्वत्र, तत् कथमिदमभिहितम्? इत्याह—न ह्येकस्त्रैलोक्ये मृदात्मेति। कुतः ? प्रतिविज्ञप्तिप्रतिभासभेदं द्रव्यस्वभावभेदादिति सम्बन्धः। अन्योन्यभिन्नानामेव द्रव्याणां विज्ञाने प्रतिभासनादित्यर्थः। तथा प्रत्यवस्थाभेदभिन्नावस्थत्वात्। प्रत्यर्थक्रियाभेदं चाश्रित्य द्रव्यस्वभावभेदात्। परस्परासम्भविकार्यकारणादिति यावत्।

परस्यापि सत्त्वरजस्तमश्चैतन्येषु भेदाभ्युपगम इदमेव कारणं युक्तमिति कथयन्नाह—एवं हीति। यदि प्रतिविज्ञप्तिप्रतिभासभेदादिना प्रत्यय इष्यते। चैतन्येषु चेति। बहुवचनं 'बहवः पुमांसः' इति सिद्धान्तात्।

यद्येवमिति। प्रतिविज्ञप्तिप्रतिभासभेदादिना।

पुनरप्याह—सत्यप्येतस्मिन् प्रतिविज्ञप्तिप्रतिभासभेदादौ कस्यचिदात्मन इति। शक्तेरनुमानादैक्यमवस्थानामिति।

आचार्य आह—यद्येवम्, सुखादिष्वप्ययमेवाभेदप्रसङ्गश्चैतन्येषु च। सुखादिष्वपि हि गुणत्वाद् भोक्तृत्वकर्तृत्वादीनामनुगमात्, चैतन्येषु च भोक्तृत्वाकर्तृत्वागुणत्वादीनाम्, तथा सुखादिचैतन्येषु सत्त्वज्ञेयत्वादीनामन्वयादित्यभिप्रायः।

प्रयोगः पुनः—'अभिन्नाः पुरुषसुखादयः; परस्परमन्वयानन्वयभाक्त्वात्,

---

१. भेदयो०–रा०।

न च घटादिष्वपि सर्वात्मनान्वयः; अवैश्वरूप्यसहोत्पत्त्यादिप्रसङ्गात् ।

न च घटं मृदात्मानं च कश्चिद् विवेकेनोपलक्षयति, येनैवं स्यादिति नेह प्रादुर्भूतमिति ।

न ह्यधिष्ठानाधिष्ठानिनोर्विवेकेनानुपलक्षणे[1] एवं भवति ।

---

शक्तिव्यक्तिवत्' । 'शक्तिव्यक्ती वा भिन्ने; अन्वयानन्वयभाक्त्वादेव' । सुखादिचैतन्यवदिति स्वभावहेतुः ।

अथापि स्यात्—यत्र सर्वात्मनैवान्वयस्तत्राभेदः, न तु यत्र केनचित् रूपेण, घटादिषु च सर्वात्मनान्वयः, ततोऽयमदोषः ? इत्यत आह—न घटादिष्वपि सर्वात्मनान्वयः । अपि तु केनचिद् रूपेणेति । 'न केवलं सुखादिषु' इत्यपि-शब्दः । कुतः ? अवैश्वरूप्यसहोत्पादादिप्रसङ्गात् । तथा हि—सर्वासामवस्थानां सर्वप्रकारेणान्वये सत्यैक्यं प्राप्नोति । ततश्च विशिष्टरूपरसगन्धवीर्यविपाकाभावाद् वैचित्र्यं न भवेत् । एवं च पञ्चभूताभावप्रसङ्गः, अध्यक्षादिबाधाप्रसङ्गश्चेति भावः ।

सहोत्पत्तिश्च सर्वासामवस्थानां प्रसज्यते । आदि-शब्देन हि अनिरोधार्थक्रियाव्यापारविकारादय उपादीयन्ते ।

प्रयोगः पुनः—यद्विशिष्टरूपरसगन्धशब्दादिभिरनेकप्रकारं न भवति, न तस्य वैश्वरूप्यमस्ति, यथा एकस्य सुखाद्यात्मनः । तथा सति सतीनामप्यवस्थानामनन्तरोक्तो[2] धर्मो नास्ति । न चासिद्धो हेतुः, यतो यद् यस्मान्न व्यतिरिच्यते, न तद् विशिष्टरूपादिभिरनेकप्रकारम्; यथा तस्यैवात्मा । न व्यतिरिच्यन्ते चावस्था अभीष्टा इति व्यापकविरुद्धोपलब्धिः[3] । तथा—यद् यस्मात् पृथग्भूतं तत् तदुत्पादादिभिरुत्पादादिमत्, यथा तस्यैव स्वरूपम् । अपृथग्भूताश्चाभिमता अवस्थास्ताभ्योऽन्यस्या इति स्वभावहेतुः । अन्यथा 'घटोऽयम्' इत्यनन्यत्वमेवायुक्तम्, नामान्तरं वा; अर्थभेदमभ्युपगम्य तथाभिधानात् ।

उपचयमाह—न च घटं मृदात्मानं च कश्चिद् अत्यर्थमुन्मीलितलोचनोऽपि 'अयं घटः' 'अयं च मृदात्मा' इति विवेकेनोपलक्षयति । येनैवं स्याद्—इदमिह प्रादुर्भूतमिति । तदनेनाभेदलक्षणमत्यन्तासम्बद्धमेवेत्याह ।

ननु च पिण्डरूपात्ममृदात्मनो घटस्य विवेकेनोपलक्षणमस्त्येव, तत् किमेवमुक्तमिति चेत् ? सत्यमस्ति; न तु घटाद् भिन्नं तं परोऽभिमन्यते इत्यभिप्रायाददोषः । यदि नाम भेदेनानुपलक्षणं तयोः, तथापि कस्मादेवं न स्यादिति चेद् ? आह—न ह्यधिष्ठानाधिष्ठानिनोराधाराधेययोः कुण्डबदरयोर्विवेकेनानुपलक्षणे सत्येवं भवति—'इदमिह प्रादुर्भूतम्' इति । तदनेन घटमृदात्मनोराधाराधेयभावो नास्ति; विवेकेनानुपलक्षणात्, सत्त्वादितत्स्वभावयोरेवेति व्यापकानुपलब्धि मन्यते ।

अधुना 'यद् यस्मिन् प्रादुर्भवति तत् ततोऽभिन्नम्' इत्यस्याभेदलक्षणस्या-

---

१. ०र्विविधानु०—रा० । २. (?) मतानामप्यव०—रा० । ३. ०पलब्धी—रा० ।

न च शक्तेः शक्त्यात्मनि प्रादुर्भाव इति तस्याः स्वात्मनोऽभेदो न स्यात् !

एतेनैव[1] परिणामः प्रत्युक्तः । योऽपि हि कल्पयेद्—'यो यस्य परिणामः स तस्मादभिन्नः' इति; न हि शक्तिरात्मनः परिणाम इति ।

किञ्चेदमुक्तं भवति—परिणाम इति अवस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तिः, धर्मान्तरप्रादुर्भावश्च परिणामः ।

यत्तद्धर्मान्तरं निवर्तते प्रादुर्भवति च, किं तत् तदेवावस्थितं द्रव्यं स्यात्, ततोऽर्थान्तरं वा, अन्यविकल्पाभावात् ?

यदि तत्तदेव, तस्यावस्थानात्[2] न निवृत्तिप्रादुर्भावाविति कस्य ताविति वक्तव्यम् ।

---

व्यापितामाचिख्यासुराह[3]—न च शक्त्यात्मनि प्रादुर्भावः । तस्या नित्यमवस्थानाभ्युपगमात् । अन्यथा अवस्थैव सा स्यात् । तथा च तस्याः स्वात्मनः सकाशादभ्युपेतोऽभेदो न स्यात्; अभेदलक्षणाभावात् । उपलक्षणं चैतद्; व्यक्तौ सुखादिषु पुरुषेषु च तुल्यदोषत्वात् ।

अन्ये तु स्वदर्शनापराधमलीमसधियः केचित् साङ्ख्या एवमाहुः—'यो यस्य परिणामः, स तस्मादभिन्नः; तद्यथा–हेम्नः कुण्डलाद्यवस्थाविशेषः' इति । तेऽप्यनेनैव पूर्वस्याभेदलक्षणस्याव्यापिताप्रदर्शनेनापहस्तिता इति चेतस्यारोप्याह—एतेनैवेत्यादि ।

युष्मद्दर्शनपरिणामोऽपि न युक्त इत्यभिप्रायवानपक्षेपं करोति—किं चेदमित्यादिना ।

परेणापि किमत्र वक्तव्यम्, यावता भगवता कपिलेन स्पष्टमिदमुक्तमित्यभिसन्धायाह–अवस्थितस्य द्रव्यस्य यथा काञ्चनस्य धर्मान्तरस्य केयूरस्य निवृत्तिः, धर्मान्तरस्य च कुण्डलादेः प्रादुर्भावः परिणाम इति ।

आचार्यः—'तस्यैव तावदिदमीदृशं प्रज्ञास्खलितं कथं वृत्तमिति सविस्मयानुकम्पं नश्चेतः, तदपरेऽप्यनुवदन्तीति निर्दयाक्रान्तभुवनं दिग्व्यापकं तमः ! कः प्राणिनो हितेच्छाविपुलत्वस्यापराधः' इति मन्यमानः प्राह—

ननु यदि नाम तेनैवमुक्तम्, भवद्भिस्तु निभालनीयमेतद्—यत् तद्धर्मान्तरं कुण्डादिकं निवर्तते प्रादुर्भवति च, किं तदेवावस्थितं काञ्चनद्रव्यं स्यात्, ततोऽर्थान्तरं वेति । कस्माद् विकल्पद्वयमेव कृतमिति चेद् ? आह—अन्यविकल्पाभावात् । निर्ग्रन्थवादस्यायोगादित्यभिसन्धिः । यदि आद्यो विकल्पः, तदा को दोष इति चेद् ? आह—यदि तद् धर्मान्तरं तदेव अवस्थितं द्रव्यम्, तदा तस्यावस्थानान्न निवृत्तिप्रादुर्भावौ आविर्भावतिरोभावलक्षणाविति, तस्मात् कस्य ताविति वक्तव्यं भवद्भिः ।

प्रयोगः पुनः—यस्यावस्थानम्, न तस्य निवृत्तिप्रादुर्भावौ; यथा अवस्थातुर्द्र-

---

१. एतेन–रा० । २. तस्यावस्थानी(?यां)–रा० ।

३. व्यापितासा(शा?) चिख्या०-रा० ।

अवस्थितस्य धर्मान्तरमिति च न सिद्ध्यति । न हि तदेव तस्यानपाश्रितव्यपेक्षाभेदं धर्मान्तरं भवति ।

अथ द्रव्यादर्थान्तरं धर्मः, तदा तस्य निवृत्तिप्रादुर्भावाभ्यां न द्रव्यस्य परिणतिः । न ह्यर्थान्तरगताभ्यां[1] स्यात् निवृत्तिप्रादुर्भावाभ्यामर्थान्तरस्य परिणतिः; चैतन्येऽपि प्रसङ्गात् ।

द्रव्यस्य धर्म इति च व्यपदेशो न सिद्ध्यति, सम्बन्धाभावात् । न हि कार्यकारणभावादन्यो वस्तुसम्बन्धोऽस्ति ।

---

व्यस्य । तथा चावस्थानं तस्य धर्मान्तरस्येति व्यापकविरुद्धोपलब्धिः । न चासिद्धो हेतुः; यतो यदवस्थातुरनन्यत् तस्यावस्थानम्, यथा तत्स्वरूपस्यैव । अनन्यच्चैतद् धर्मान्तरं तस्मादिति स्वभावहेतुः ।

किञ्च—यद्यवस्थितमेव द्रव्यं तद्धर्मान्तरम्, तदावस्थितस्य द्रव्यस्य धर्मान्तरमिति च[2] न[2] सिद्धचति । किं कारणम् ? इत्याह—न हि तदेव तस्य धर्मान्तरं भवतीति । भवत्येव तदेव तस्य धर्मान्तरम्; यथा कृतकत्वं शब्दस्य, अव्यतिरिक्तमपि तस्मादिति चेद् ? आह—अनपाश्रितव्यपेक्षाभेदम् । एतदुक्तं भवति—तत्र[3] हि स एव शब्दोऽकृतकादिभ्यो व्यावृत्तत्वात् तद्व्यावृत्त्यपेक्षया तन्मात्रजिज्ञासायां प्रतिक्षिप्तभेदान्तरेण शब्देन धर्मत्वेन व्यपदिश्यते, इह तु पुनर्व्यपेक्षाभेदोऽपि नास्ति, तत् कथं तदेव तस्य धर्मान्तरं भविष्यतीति ।

धर्मस्य द्रव्यादर्थान्तरापेक्षे तर्हि को दोषः ? इत्याह—अथेत्यादि । कस्माद् धर्मनिवृत्तिप्रादुर्भावाभ्यां न द्रव्यस्य परिणामः ? यस्मात्[4] न ह्यर्थान्तरगताभ्यां निवृत्तिप्रादुर्भावाभ्यामर्थान्तरस्य परिणतिर्भवति । तदेव कुतः ? चैतन्येऽपि परिणतेः प्रसङ्गात् । न च चैतन्यस्य परिणतिरिष्यते; प्रधानपुरुषयोरैक्यापत्तेः । "अकर्तृता च" इति वचनात् ।

प्रयोगः पुनः—यद् यतोऽर्थान्तरम्, न तद्गताभ्यां निवृत्तिप्रादुर्भावाभ्यां तस्य परिणतिः । तद्यथा चैतन्यभिन्नस्वभावस्याङ्कुरस्य निवृत्तिप्रादुर्भावाभ्यां चैतन्यस्य धर्मान्तरं च द्रव्यादिति व्यापकविरुद्धोपलब्धिः ।

भवेदेतत्, न यस्य कस्यचिदर्थान्तरस्यासम्बद्धस्यापि निवृत्तिप्रादुर्भावाभ्यामन्यस्य परिणतिरपि, कुतश्चासम्बद्धस्यैव ! यथा तस्यैवाङ्कुरस्य बीजसम्बद्धस्य निवृत्तिप्रादुर्भावाभ्यां बीजस्य तेन सामान्येन साधने सिद्धसाधनम् । धर्मस्य द्रव्यसम्बन्धाद् विशेषेण[4] तु साधनविकलता निदर्शनस्य ।

अङ्कुरस्य चैतन्येन सह सम्बन्धाभावादिति चेत् ? आह—द्रव्यस्य धर्म इति व्यपदेशो न सिद्धचति । कुतः ? सम्बन्धाभावात् । एवं मन्यते—द्रव्यसम्बन्धोऽयं धर्म इत्येतदेव न विद्यते, तत् कुतो व्यावृत्तिप्रसङ्गोऽस्येति !

अस्त्येव तर्हि द्रव्यधर्मयोराधाराधेयभावलक्षणः सम्बन्धः, ततश्च सविशेषणेऽपि हेतौ असिद्धिरिति ? अत आह—न हि कार्यकारणभावादन्यो वस्तुभूतः सम्बन्धोऽस्तीति । आधाराधेयभावोऽपि कार्यकारणभावविशेषादेव व्यवस्थाप्यते

---

१. ०गतस्य—रा० । २-२. वचनं—रा० । ३. यस्मा—पा० । ४. तद्विशेषेण—रा०

न चानयोः कार्यकारणभावः; स्वयमतदात्मनोऽतत्कारणत्वात्, धर्मस्य द्रव्यादर्थान्तरभूतत्वात् ।

अर्थान्तरत्वेऽपि धर्मकारणत्वे, अर्थान्तरस्य[1] कार्यस्योत्पादनात् द्रव्यस्य परिणामः—इतीष्टं स्यात् ? तद्विरुद्धस्यापि[2] हेतुफलसन्ताने मृद्द्रव्याख्ये 'पूर्वकान्मृत्पिण्डद्रव्यात् कारणादुत्तरस्य घटद्रव्यस्य कार्यस्योत्पत्तौ मृद् द्रव्यं परिणतम्' इति व्यवहारस्योपगमात् ।

न च धर्मस्य द्रव्यात् तत्त्वान्यत्वाभ्यामन्यो विकल्पः सम्भवति, उभयथा येन परिणामः ।

न निर्विवेकद्रव्यमेव धर्मः, नापि द्रव्यादर्थान्तरम्; किं तर्हि ? द्रव्यस्य सन्निवेशोऽवस्थान्तरम्; यथा—अङ्गुलीनां मुष्टिः । न ह्यङ्गुल्य एव निर्विवेका मुष्टिः; प्रसारितानाममुष्टित्वात् ।

---

यथा निर्णीतम्—"आधारतोऽभिनिवृत्तेरात्मनस्तादृशोऽनु.......यः[3] कार्यं तस्य" इत्यत्र प्रकरणे प्रमाणविनिश्चये इत्यभिप्रायः ।

अस्तु तर्हि कार्यकारणभावस्तयोरिति चेद् ? आह—न चानयोर्द्रव्यधर्मयोः कार्यकारणभाव इति । कुतः ? स्वयमतदात्मनोऽतत्कारणत्वात् । यद्धि यत्स्वभावं न भवति, न तत् तत्कारणतया भवद्भिरभ्युपेयम्; यथा—रजस्तमसः । तथा च इदमपि द्रव्यधर्मस्स्वभावो भवति, तत् कथमिव तस्य कारणत्वमुपेयादिति व्यापकानुपलब्धिप्रसङ्गं मन्यते । न चायमसिद्धो हेतुरिति मन्तव्यम्; अर्थाभावपक्षं समाश्रित्य दोषाभिधानस्य प्रकृतत्वात् । यदाह—धर्मस्य द्रव्यादर्थान्तरत्वं स्यादिति ।

अथाप्यस्मद्वैफल्ये स्यात् पूर्वकान् कापिलानतिपत्य साङ्ख्यानां शकमाधववद् द्रव्यस्य व्यतिरेकेऽपि धर्मकारणत्वमिष्यते ? तदापि ब्रूम इत्याह—अर्थान्तरत्वेऽपि द्रव्यस्य धर्मकारणत्वेऽङ्गीक्रियमाणे अर्थान्तरस्य कार्यस्योत्पादनात् कारणात् द्रव्यस्य परिणाम इतीष्टं स्यात् भवता । ततः किं स्यात् ? इत्याह—तद्विरुद्धस्यापि । तथागतानुसारिणः । किं कारणम् ? तेनापि हेतुफलसन्ताने मृद्द्रव्याख्ये पूर्वकात् मृत्पिण्डात् कारणभूतादुत्तरस्य घटद्रव्यस्य कार्यस्योत्पत्तौ सत्यां मृद्द्रव्यं परिणतमिति व्यवहारभेदस्योपगमात् कारणात् ।

स्यान्मतम्, यदि नाम प्रकारद्वयेनापि परिणामो न युज्यते, प्रकारान्तरेण तु भविष्यतीति ? एतदाह—न चेत्यादि । तस्मादुभयथापि न परिणाम इत्युपसंहारः।

न निर्विवेकं निर्विशेषं द्रव्यमेव धर्मो[4] नापि द्रव्यादर्थान्तरमेकान्तेनैव । किं तर्हि ? द्रव्यसन्निवेशोऽवस्थान्तरम्, नान्यः । यथाङ्गुलीनां सन्निवेशोऽवस्थान्तरं मुष्टिः । यथा अङ्गुलीनां सन्निवेशोऽवस्थान्तरं तत्त्वान्यत्वाभ्यामनिर्वचनीयं मुष्टिः, कस्माद्धेतोर्न

---

१. धर्मा०–रा० । २. तद[च्च]विरुद्धमन्यस्यापि–रा० । ३. श्रीराहुलैरधिगते हस्तलेखेऽत्रत्यः पाठो भ्रष्टः । प्रमाणविनिश्चयग्रन्थश्चाद्यापि मूलतो नोपलभ्यत इति साधनाभावात् पाठस्यापूरणं चेतःखेदकरमेव । ४. परो–रा० ।

नाप्यर्थान्तरम्, पृथक्स्वभावानोपलब्धिरिति चेत् ? न; मुष्टेरङ्गुलिविशेषत्वात्। अङ्गुल्य एव हि काश्चन मुष्टिः, न तु[1] सर्वाः। न हि प्रसारिता अङ्गुल्यो निर्विवेकस्वभावा मुष्ट्यङ्गुल्यः; अवस्थाद्वयेऽपि उभयप्रतिपत्तिप्रसङ्गात्।

य[2] एव[2] खलु विवेकः स्वभावभूतः, स एव वस्तुभेदलक्षणं सुखदुःखवत्। परभूते च विवेकोत्पादेऽङ्गुल्यः प्रसारिता एवोपलभ्येरन्। न हि स्वयं स्वभावादप्रच्युतस्यार्थान्तरोत्पादेऽन्यथोपलब्धिरिति प्रसङ्गात्।

---

ह्यङ्गुल्य एव निर्विवेका मुष्टिः! कुतः? प्रसारितानाममुष्टित्वात्। अन्यथा प्रसारितानामपि विशेषाभावात् मुष्ट्यवस्थायामिव मुष्टित्वप्रसङ्ग इति।

नाप्यर्थान्तरं मुष्टिः, अङ्गुलिव्यतिरेकेणाप्रतिहतकारणेन प्रयत्नवतापि मुष्टेरनुपलब्धेरिति कदाचित् कापिला एवं ब्रूयुरिति तन्मतं शङ्कते—न निर्विवेकमित्यादिना। गतार्थमेतत्। न हि मुष्टेरङ्गुलिविशेषत्वादिति परिहरति। असक्ताङ्गुल्य एव च निर्विवेका मुष्टिरिति कथयन् दृष्टान्तायोगमाह—अतोऽपि, यदुत 'प्रसारितानाममुष्टित्वाद्' इति, तदप्ययुक्तमेव। किं कारणम्? यतोऽङ्गुल्य एव हि विशिष्टहेतुप्रत्ययबलेन तथोत्पन्नाः काश्चन मुष्टिः, न तु सर्वाः। तदेव कुतः? इत्याह—न प्रसारिता अङ्गुल्यो निर्विवेकस्वभावा मुष्ट्यङ्गुल्यश्चेति। चशब्दोऽत्र लुप्तनिर्दिष्टो ज्ञेयः। अथ वा—मुष्ट्यात्मिका अङ्गुल्यः प्रसारिताः सत्यो नहि निर्विशिष्टरूपा इति व्याख्येयम्। कस्मात्? अवस्थाद्वयेऽपि प्रसारितरूपे उभयोः अप्रसारितप्रसारितावस्थयोर्यथाक्रमं प्रतिपत्तिप्रसङ्गात्।

प्रयोगः पुनः—प्रसारितावस्थायामप्रसारितावस्थायाः प्रतिपत्तिर्भवेत्; अङ्गुलीनां विवेकाभावात्, अप्रसारितावस्थायामिव स्वभावहेतुः। एवमप्रसारितावस्थायां प्रसारितावस्थायास्तत्प्रतिपत्तिः[3] स्यादित्यपरो योज्यः। यत्तूभयस्येति व्यापकानुपलब्धिर्योज्या।

अथापि कथञ्चित् कश्चिद् विवेकः स्थितयोरवस्थयोः, तदा स विवेकश्चासामङ्गुलीनां स्वभावभूतो वा भवेत्, न वा?—इति विकल्पद्वयम्।

प्रथमे तावद् दोषमाह—य एव खलु विवेकः स्वभावभूतः, स एव स्वभेदलक्षणं सुखदुःखवदिति। द्वितीयेऽप्याह—परभूते च विवेकोत्पादेऽङ्गुल्यः प्रसारिता एवोपलभ्येरन्। मुष्ट्यवस्थायामपीति शेषः। किमिति? यतो नहि स्वभावादप्रच्युतस्यार्थान्तरोत्पादे सत्यन्यथोपलब्धिर्भवति; अतिप्रसङ्गात्। उष्ट्रस्याप्यर्थान्तरस्य कलभस्योत्पादेऽन्यथोपलब्धिः स्यादित्यतिप्रसङ्गो वक्तव्यः।

प्रयोगः पुनः—यत्र स्वस्यात्मभावादप्रच्युतं न तस्यार्थान्तरोत्पादेऽपि अन्यथोपलब्धिः, यथा उष्ट्रस्य कलभप्रादुर्भावे। अप्रच्युताश्च स्वस्मात् स्वभावादङ्गुल्यो विवेकोत्पादेऽपीति विधिप्रतिषेधाभ्यां हेत्ववकल्पनायां कारणविरुद्धकारणानुपलब्धिः।

---

१. रा० पुस्तके नास्ति। २-२. यत्र च हि—रा०। ३. ०स्थायां तत्प्रति०—रा०।

ननूक्तम्—'द्रव्यमेव निर्विवेकम् अवस्था, नापि द्रव्यादर्थान्तरम्' इति ?

उक्तमिदम्, न पुनर्युक्तम्; न हि सतो वस्तुनस्तत्त्वान्यत्वे मुक्त्वा अन्यः प्रकारः सम्भवति, तयोर्वस्तुनि परस्परपरिहारस्थितिलक्षणत्वेनैकत्यागस्यापरोपादाननान्तरीयकत्वात् ।

अङ्गुलीषु पुनः प्रतिक्षणविनाशिनीष्वन्या एव प्रसारिताः, अन्या मुष्टिः ।

तत्र मुष्ट्यादिशब्दा विशेषविषयाः, अङ्गुलीशब्दः सामान्यविषयः, बीजादङ्कुरादिशब्दवत्, व्रीह्यादिशब्दवच्च । तेनाङ्गुल्यः प्रसारिता न मुष्टिः ।

तद्यदि प्रागसदेव कारणे कार्यं भवेत्, किं न सर्वः सर्वस्माद् भवति, न ह्यसत्त्वे कश्चिद् विशेष इति ?

---

नन्वित्यादि परः । तत्त्वान्यत्वाभ्यामनिर्वचनीयं तदुक्तमिति वाक्यार्थः । उक्तमेतत् न पुनर्युक्तमित्याचार्यः । कथमयुक्तम् ? इत्याह—न हि सतो वस्तुनस्तत्त्वान्यत्वे मुक्त्वान्यः प्रकारः सम्भवतीति । सद्वस्तुग्रहणं कल्पनाशिल्पोपरचितस्यान्यापोहादेः सम्भवतीति प्रतिपादनाय । कुतः ? इत्याह—तयोरित्यादि ।

प्रयोगः पुनः—यौ परस्परपरिहारस्थितिलक्षणौ, तयोरेकत्यागोऽपरोपादाननान्तरीयकः । एकोपादानं चापरत्यागनान्तरीयकम् । तद्यथा—भावाभावौ । यथोक्तधर्मवन्तौ च तत्त्वान्यत्वप्रकाराविति स्वभावहेतुः ।

नन्वङ्गुलीभ्योऽपि मुष्टेस्तत्त्वान्यत्वप्रकारौ मुक्त्वाप्यन्यः प्रकारः सम्भवत्येव—न ह्यङ्गुल्य एव मुष्टिः, प्रसारितानाममुष्टित्वात्; नाप्यर्थान्तरम्, पृथक् स्वभावानुपलब्धेरिति चेद् ? आह—अङ्गुलीषु पुनरित्यादि । प्रतिक्षणं विनाशो विद्यते यासामिति विग्रहः । ता एव क्षणिकत्वात् तथाविधा जायन्ते, येन मुष्ट्यादिवाच्या भवन्तीत्यर्थः ।

तदेतच्च वस्तुतो न मुष्टेरङ्गुलिविशेषादित्यत्रोक्तमपि प्रसङ्गाद् युक्तमुक्तमित्यवसेयम् । अन्यथा किमनेन !

यद्येवम्, कथं तर्हि मुष्टिः, अङ्गुलीति च व्यपदेशभेदः ? इत्यत आह—तत्र मुष्ट्यादिशब्दा विशिष्टविषयाः; विशिष्टावस्थानामङ्गुलीनां वाचकत्वात् । अङ्गुलीशब्दस्तु सामान्यशब्दः; सर्वावस्थानां तासामभिधायकत्वात् । यथाक्रममुदाहरणद्वयमाह—बीजाङ्कुरादिशब्दवत्, व्रीह्यादिशब्दवच्चेति ।

एवं शकलीकृतसकलपरपक्षः कुचोद्यशेषं परोपन्यस्तं परिजिहीर्षुः परमुखेन चोद्यमुपस्थापयति—तद्यदीत्यादिना । इदमस्याकूतम्—यथा हि तिलेष्वविद्यमानं घृतम्, तथा तैलमपि । तद्यदि प्रागसदेव कारणे कार्यमुत्पद्यते, तथा घृतस्यापि तिलेभ्य उत्पत्तिः स्यात्; असत्त्वात्, तैलवत् । न वा तैलस्यापि तत एव, घृतवत् । नहि असत्त्वे कश्चिद् विशेष इति । स्वभावहेतुव्यापकानुपलब्धित्वेनाभिमतयोर्व्याप्यव्यापकभावप्रसाधनप्रकार एषः ।

ननु सर्वत्र सत्त्वेऽप्ययं तुल्यो दोषः—न हि सत्त्वे कश्चिद् विशेषः, विशेषे वा सद्विशेषस्त्रैगुण्याद्[1] भिन्नः स्यात्, तदभावे विशेषस्यानन्वयात्।

सतश्च सर्वात्मना निःस्वभावावस्थायामिव किं जायते! साधनवैफल्यं च; साध्यस्य कस्यचिदभावात्?

यस्य कस्यचिदतिशयस्य तत्र कथञ्चिदसत उत्पत्तौ सोऽतिशयस्तत्र असन् कथं जायेत! जातो वा सर्वः सर्वस्माज्जायेत—इति तुल्यः पर्यनुयोगः।

नातिशयस्तत्र सर्वथा नास्ति, कथञ्चित् सत एव भावादिति चेत्? यथा नास्ति स प्रकारः, तत्र असन् कथं जायेत!

---

तदेतत् सर्वमभ्यवधाय कृत्योत्थापनं भवत इति मन्यमान आह—ननु सर्वत्र सर्वस्यासत्त्वेऽप्ययं तुल्यो दोषः। नहि सत्त्वे कश्चिद् विशेष इति।

प्रयोगौ पुनस्तावेव सत्त्वादिति हेतुविपर्ययं कृत्वा कार्यौ।

अथापि कश्चिद् विशेषोऽस्ति, येन सत्त्वेऽपि न सर्वं सर्वस्मात् जायते, तेन सन्दिग्धविपक्षव्यावृत्तिकत्वं प्रमाणयोरिति चेत्? आह—विशेषे वाऽभ्युपगम्यमाने सविशेषस्त्रैगुण्यात् सत्त्वरजस्तमोरूपाद् भिन्नः स्यात्। कस्मात्? तस्य त्रैगुण्यस्य भावेऽपि विशेषस्याननुवृत्तेः कारणात्।

प्रयोगः पुनः—यद्भावेऽपि यन्नानुवर्तते, तत् तस्मादत्यन्तं भिन्नम्; यथा शब्दस्पर्शरूपरसगन्धेभ्यश्चैतन्यम्। नानुवर्तते च विशेषस्त्रैगुण्यभावेऽपीति स्वभावहेतुः। एतच्चाभ्युपगम्योद्ग्राहितम्।

अधुना सत्कार्यवादे जन्मार्थ एव न युक्त इत्याह—सतश्चेत्यादि। नैव तस्य चासत्त्वेनाभिमतस्य जन्मास्ति; सत्त्वात्, निष्पन्नावस्थायामिवेति विरुद्धव्याप्तोपलब्धिरस्य मनसि वर्तते। अन्यथा पुनर्जातस्यापि पुनर्जातिः प्रसज्यत इति अनवस्था स्यात्। यदाह—

"सतो यदि भवेज्जन्म जातस्यापि भवेद् भवः।" (  ) इति।

किञ्च—साधनानां कारणानां बीजतेजोजलादीनां वैफल्यं च प्रसज्येत; साध्यस्य कर्तव्यस्य कस्यचिद् रूपस्याभावादिति।

प्रयोगः—यत्र साध्यं न किञ्चिदप्यस्ति, तत्र साधनसाफल्यं विद्यते; यथा नभस्यनाधेयातिशये। न च साध्यं किञ्चिदप्यस्ति, कारणे व्यवस्थिते सति कार्यमिति व्यापकानुपलब्धिः। न चायमसिद्धो हेतुरिति मन्तव्यम्, यस्माद् यस्य कस्यचिदतिशयस्य तत्र कारणे स्थिते कार्ये कथञ्चिदुत्पत्ताविष्यमाणायां सोऽतिशयस्तत्रासन् कथं जायेत? नैव जायेत; असत्त्वात्। व्योमोत्पलमिव दुग्ध इति व्यापकानुपलब्धिरस्य चेतसि स्थिता। अथासन्नप्यतिशयो जायते, तदा जातो वा तस्यासतोऽपि सर्वोऽतिशयः सर्वस्माज्जायेतेति तुल्यः पर्यनुयोग इति। भवतोऽपि घृतातिशयोऽपि तिलेभ्य उत्पद्येत; असत्त्वात्। तेनातिशयवदित्यर्थः। स्वभावहेतुप्रसङ्गः।

परमतमाशङ्कते—नातिशयस्तत्रेत्यादिना। यथा नास्ति सः, कथं तत्रासन् प्रकारो जायेतेति प्रतिक्षिपति[2]। जातो वा 'सर्वः सर्वस्माज्जायेतेति तुल्यः पर्यनुयोगः' इति पूर्वोक्तो दोषो न युज्यत इत्यभिप्रायः।

---

१. ०षस्तैस्तुल्याभिन्नः—रा०। २. प्रक्षिपति—रा०।

न च सर्वथा सतः कश्चिज्जन्मार्थ इत्युक्तम्; असतोऽपि कार्यस्य कारणादुत्पादे यो यज्जननस्वभावस्तत[1] एव[1] तस्य जन्म, नान्यस्मादिति नियमः।

तस्यापि स स्वभावनियमः स्वहेतोरित्यनादिस्वभावनियमः।

---

सर्वप्रकारेणैव तर्हि निष्पन्नरूपातिशयोऽस्तीति चेद् ? आह—न चेत्यादि। एवं तावत् सदसत्कार्यवादिनोः सर्वस्मात् सर्वस्योत्पत्तिदोषस्तुल्य इति प्रतिपादितम्।

न च तयोरपि तुल्यं चोद्यम्, न तदेको वक्तुमर्हति। सत्कार्यवादे च न कश्चिज्जन्मार्थ इति प्रसाधितम्, तेनायमस्तीत्यधिको दोषः।

तदेवं कदाचित् परोऽभिदध्यात्—ननु भो यदि नाम मयैतन्न परिहृतम्, भवता त्ववश्यं स्थितेः किञ्चित् स्वपक्षस्य रक्षणाय वाच्यम्, न हि परस्य पक्षं दूषयता स्वपक्षस्थितिरनवद्या लभ्यते, न भवति नित्यः शब्दः, मूर्तत्वाद्, सुखादिभिर्व्यभिचारेणेत्यादावनित्यत्वासिद्धवद् ? इत्यत आह—असतोऽपि कार्यस्य कारणादुत्पादे यो यज्जननस्वभावस्तत एव तस्य जन्म, नान्यस्मादिति नियम इति। अपि-शब्दः सम्भावनायाम्।

इदमत्रार्थतत्त्वम्—अविद्यमानमपि तैलं तिलेभ्य एवोत्पद्यते, तदुत्पादनशक्तियुक्तत्वात् तिलानाम्, नान्यस्मात्; तज्जननशक्तिविकलत्वात् तस्य। शक्तिनियम एव च कथम् ?—इति च पर्यनुयोगे वस्तुस्वभावैरुत्तरं वाच्यम्। य एवं भवन्ति, यथा वा, तथैव प्रधानात् महान् एव जायते, नाहङ्कारः; महतोऽहङ्कारः, न पञ्चतन्मात्राणीत्यादि प्रक्रिया। तत्र च भवतः शक्तिप्रतिनियमावलम्बनमेव शरणम्; अन्यस्य परिहारोपायस्याभावात्। तदेतच्च न ममापि काकेन भक्षितम्। तेन यदुक्तम्–'न ह्यसत्त्वे कश्चिद् विशेषः' इति, तदयुक्तिमत्; कारणसामर्थ्यासामर्थ्यकृतत्वात् कार्योत्पत्त्यनुत्पत्त्योः। तस्मात् पुरोऽनुक्रान्तयोः प्रमाणयोः सन्दिग्धविपक्षव्यावृत्तिकत्वसाधनकलङ्काङ्कितो हेतुरिति।

भवेदेतत्, तस्यापि हेतोः तज्जननस्वभावनियमः कुतो जातः ? इत्यत आह—तस्यापि स स्वभावनियमः स्वहेतोरिति। तस्यापि स कुत इति चेद् ? आह—इत्येवमनादिस्वभावनियम इति। न विद्यते आदिरस्येति विग्रहः। अनादित्वाभ्युपगमाद् हेतुफलप्रकृतिपरम्पराया नानवस्थादोषो लघीयसीमपि क्षतिमावहति। अन्यथा आदौ कल्प्यमाने तस्याहेतुकत्वप्रसङ्गः, तेनास्थान एवेयमाशङ्का भवत इति भावः।

अथवा अन्यथायं ग्रन्थो व्याख्यायते—

निष्पर्यायेण असन्नेव तर्ह्यतिशयो जायते। न च 'सर्वं सर्वस्माज्जायेत' इति पर्यनुयोज्यम्; 'यो यज्जननस्वभावः, तत एव तस्यातिशयोत्पत्तिः' इति शक्तिनियमसमाश्रयादिति कदाचित् स्वसिद्धान्तमनादृत्यापि परोऽभिदधात्याशङ्कायाम्, न ममाप्येतच्छक्तिप्रतिनियमावलम्बनं केनचिद् दण्डेन निवारितमित्यागूर्याह—असतोऽपीत्यादि। पदविभागस्तु पूर्ववत्।

प्रयोगः पुनः—यस्य यज्जननाय समर्थं कारणमस्ति, सोऽसन्नपि जायत

---

१. स्तत्र च–रा०।

अपि च—यदि मृत्पिण्डे घटोऽस्ति, कथं तदवस्थायां न पश्चाद्वदुपलब्धिः ? तदर्थक्रिया वा ?

---

एव; यथा—अतिशयविशेषः । तज्जननाय समर्थं कारणमस्ति च कार्यविशेषस्येति स्वभावहेतुः । तथा यो यत्राविद्यमानतज्जननसमर्थकारणः, स तत्रासत्त्वेऽपि नोदेति । यथा—तिलेषु घृतातिशयः । तथा चाविद्यमानतज्जननसमर्थकारणः कार्यविशेषः कारणविशेष इति व्यापकानुपलब्धिः ।

अपरः पर्यायः साधनस्य लिङ्गस्य—

''असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।

शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्'' ॥ ( सा० का० ९ )

इत्येवमादेर्वैफल्यम्; साध्यस्य कर्तव्यस्य कस्यचित् संशयविपर्यासव्यवच्छेदस्य निश्चयप्रत्ययजन्मनश्चाभावात् । सर्वं हि साधनं विवादपदे वस्तुनि संशयविपर्यासावपनयत् तद्विषयं निश्चयप्रत्ययमुत्पादयद् बिभर्ति नामानुरूपम्, न द्वयमप्येतत् कापिलमते सम्भवति; सदावस्थितस्य कार्यस्य हान्युपजननायोगात् ।

अथ सन्नप्ययं निश्चयः साधनवचनादनभिव्यक्तं पूर्वमभिव्यक्तिमुपयाति, अतो न वैफल्यमिति मतम् ? अत आह—यस्य कस्यचिदतिशयस्याभिव्यक्तिलक्षणस्य तत्र साध्ये निश्चयरूपे कथञ्चिदसत उत्पत्तौ प्राप्तात् साधनात् सोऽतिशयस्तत्रासन् कथं जायेत, जातो वा सर्वोतिशयः समस्तसाध्यनिश्चयाभिव्यक्तलक्षणः सर्वस्मादन्यसाधनात् साधनाभासाद् वोत्पद्येतेति तुल्यः प्रसङ्गः । पावकादिप्रतिपत्तिहेतवो धूमादयः सत्कार्यनिश्चयाद्यभिव्यक्तिं कुर्यु रित्यर्थः । उत्पतय चाभिव्यक्तिमेतदुच्यते । न त्वियमविकृतरूपेषु कृतास्पदा । सा हि तत्स्वरूपलक्षणा, तद्विषयज्ञानलक्षणा, रूपान्तरज्ञानलक्षणा वा भवेत् । स्वरूपं तावदविकार्यमिति न साधनैरन्यैर्वा कर्तुं शक्यते । विकारे वा पूर्वस्वभाववानिव पूर्वरूपप्रादुर्भावश्चेत्यसत्कार्यवाद एव समर्थितः; पूर्वापररूपत्यागावाप्तिलक्षणत्वाद् विकारस्य । चैतन्यस्यैकत्वादपरस्तद्विषयः प्रत्ययो न भवति परस्येति तद्रूपाभिव्यक्तिरनुपपन्ना । रूपान्तरप्रादुर्भावे च नान्यस्य किञ्चिदप्युपजायते; विलक्षणत्वादिति तृतीयाभिव्यक्तिरसम्भविनी । द्वितीयायामप्ययमनिवारितो दोषः; तद्विषयप्रत्ययोदयेऽप्यर्थान्तरभूतभाववैपरीत्यस्य व्यक्तेरयोगात् । न चानुपकारकः प्रत्ययस्य विषयः सम्भवी । तदुपकारके वा तस्मादेवास्योत्पत्तिरिति लिङ्गानपेक्षा । स्वत एव साध्यनिश्चयोऽस्याभिव्यक्तेरिति प्राप्तम् । साधनापेक्षादेव साध्यनिश्चयात् स्वविषयज्ञानोत्पादेनैवापेक्षातिशयोत्पत्तिलक्षणास्थिरेषु लब्धास्पदेति प्रतिपादितम् । सर्वदा वा भवेत्; लिङ्गस्यापि सदा सन्निहितरूपत्वात् । लिङ्गज्ञानापेक्षायामपि तुल्यः; तस्यापि सत्त्वे वादिनः सर्वकालास्तित्वादिति ।

अपि चेत्यादिना सत्कार्यवादनिराकरणे कारणान्तरमाह । तदवस्थायामिति । मृत्पिण्डावस्थायाम् । पश्चाद्वत् अभिव्यक्तावस्थायामिव । तदर्थक्रियेति । घटसाध्योद-

व्यक्तेरप्रादुर्भावादिति चेत् ? तस्या एव तदर्थक्रियादिभावे घटत्वात् तद्रूपस्य च प्रागसत्त्वात् कथं घटोऽस्ति ! न हि रूपान्तरस्य सत्त्वे रूपान्तरमस्ति ।

न च रूपप्रतिभासभेदे वस्त्वभेदो युक्तः; अतिप्रसङ्गात् ।

तस्माद् यः उपलब्धिलक्षणप्राप्तस्वभावानुपलब्धिः स नास्त्येव । न हि तस्य तत्स्वभावस्थितावनुपलब्धितः, अस्थितिश्चासत्त्वम्, परस्परं तथास्थितयोरेव दुःखसुखयोरिति व्याप्तिरसद्व्यवहारनिश्चयेनानुपलब्धिविशेषस्य तेनानुपलब्ध्या कस्यचिद् व्यवच्छेदं प्रसाधयता तस्य यथोक्तोपलब्धिलक्षणप्राप्तिरूपता दर्शनीया ॥

उपदर्श्यानुपलब्धिनिर्देशासमर्थनं स्वभावानुपलब्धौ, व्यापकानुपलब्धावपि धर्मयोर्व्याप्यव्यापकभावं प्रसाध्य व्यापकस्य निवृत्तिप्रसाधनं समर्थनम् ।

---

कधारणविशेषाद्यर्थक्रिया । व्यक्तेरविशिष्टसंस्थानाया अप्रादुर्भावादिति चेत् परमताशङ्का । तस्या एवेत्यादि प्रतिविधानम् । एतदुक्तं भवति—ग्रीवादिसन्निवेशविशेषावच्छिन्न एषोऽर्थक्रियाविशेषकारी कश्चित् मृद्विकारः 'घटः' इत्युच्यते, नान्यः । स चेत् प्रागपि मृत्पिण्डावस्थायामपि तदा व्यक्तावस्थायामिव तदर्थक्रियोपलब्धौ स्यात् । न च भवतस्तस्मात् 'नास्त्येवासौ' इति निश्चयः समाधीयताम्, किमलीकनिर्बन्धनेनेति ।

अवस्थातुर्भावादसावप्यस्तीति चेद् ? आह—नहि रूपान्तरस्य भावे रूपान्तरमस्ति । पीत इव नीलमिति विरुद्धव्याप्तोपलब्धिराकूता ।

न चावस्थावस्थात्रोरभेदादसिद्धो हेतुरिति गर्जितव्यम्; यस्मात् न च रूपप्रतिभासभेदेऽपि वस्त्वभेदो युक्तः; अतिप्रसङ्गात् । रूपप्रतिभासभेदग्रहणमुपलक्षणार्थम् । तेनार्थक्रियाभेदोऽप्यभ्युपगन्तव्यः ।

एवं मन्यते—यदि भिन्नप्रतिभासि ज्ञानं भेदं साधयति, तदा सुखदुःखमोहानामसङ्कीर्णा भेदव्यवस्था भवेत्, नान्यथा । तथा च मृत्पिण्ड-घटयोरपि परस्परमत्यन्तं भेद इति प्रतिजानीमहे; भिन्नाकारज्ञानपरिच्छेद्यत्वात् । परस्परासम्भविकार्यकारित्वाच्च सुखादिवदिति स्वभावहेतुः । अन्यथा सुखादीनामपि परस्परमभेदप्रसङ्गः । शक्तिव्यक्तिभेदवद् विशेषो वा वाच्य इति ।

तस्मादित्युपसंहारः । न हि तस्य घटादेस्तस्मिन्नुपलब्धिलक्षणप्राप्ते स्वभावे स्थितौ सत्यामनुलब्धिर्युज्यते । अथापि भवति, तदा अस्थितिश्च, तस्मिन् स्वभावेऽतत्त्वम्, अतत्स्वभावत्वम्; उपलब्धिलक्षणप्राप्तात् स्वभावादेकान्तेन भेद इति यावत् ॥

एवं स्वभावानुपलब्धौ साधनाङ्गसमर्थनं प्रपञ्चेनाभिधाय परिशिष्टास्वनुपलब्धिष्वाचिख्यासुराह—व्यापकानुपलब्धावित्यादि । धर्मयोर्यथा शिंशपात्ववृक्षत्वयोः व्याप्यव्यापकभावं केनचित् प्रमाणेन प्रसाध्य व्यापकस्य वृक्षत्वादेर्निवृत्तिप्रसाधनं समर्थनम् । साधनाङ्गस्येत्यध्याहारः । यथा–'नास्त्यत्र शिंशपा, वृक्षाभावात्' इति ।

कारणानुपलब्धावपि कार्यकारणभावं प्रसाध्य कारणस्य निवृत्तिप्रसाधनं समर्थनम् ।

तद्विरुद्धोपलब्धिष्वपि द्वयोर्विरुद्धयोरेकस्य विरुद्धस्योपदर्शनं समर्थनम् ।

---

ननु तत्र स्वभावानुपलब्ध्यैव तदभावः सिद्धयति, तत्किमनया; न हि निष्पादितक्रिये कर्मणां विशेषाधायि साधु साधनं भवति, "साधकतमं करणम्" (पा० सू० १.४.४२) इति वचनात्; अनधिगतार्थाधिगमरूपं च प्रमाणमुक्तम्, अज्ञातार्थप्रकाशो वेति ? सत्यमेतत्, तथा हि नेयं सर्वत्र प्रयुज्यते; किं तर्हि ? व्योमगतत्रपादिमात्रे यत्र साल-सरल-पलाश-शिंशपादिपादपभेदावधारणं नास्ति, तत्र । सर्वथा यत्रैव व्याप्याभावो न निश्चीयते क्वचित् कुतश्चिद् भ्रान्तिनिमित्तात्, तत्रैवेयं प्रयुज्यते ।

कारणानुपलब्धिरपि यत्र कार्याभावो न निश्चीयते तत्रैव प्रयोक्तव्या, नान्यत्र; वैयर्थ्यात् । यथा सन्तमसे धूमाभावनिश्चये 'नास्त्यत्र धूमः; अग्न्यभावात्' इति । कार्याभावे संशयात्, कारणाभावे च निश्चयात् ।

स्वभावविरुद्धोपलब्धिरपि सङ्गविषयाभावावस्थितगात्रस्पर्शज्वालाकलापाकुलानलालीढ[1] इव व्योमादिमात्रवर्तिनिर्देशे प्रयोक्तव्या ।

कारणविरुद्धोपलब्धिश्चाप्यदृश्यमानकमारोमोद्गमदन्तवीणादिभेदाभावाभावाक्यशक्यगानुसमीपावस्थितपुरुषसमाक्रान्तभूतल एव; प्रकृतेनान्यत्र वैफल्यात् ।

अनया दिशा अन्यासामप्युपलब्धीनां प्रयोगविषयोऽनुसर्तव्य इति ।

तेषां स्वभावव्यापककारणानां विरुद्धास्तेषामुपलब्धयस्तास्विति विग्रहः । द्वयोर्विरोधयोर्मध्ये एकस्योपदर्शनम् । द्वौ पुनर्विरोधौ अविकलकारणस्य भवतः—अन्यभावे भावः, परस्परपरिहारस्थितिलक्षणश्च ।

अनया दिशा स्वभावविरुद्धकार्योपलब्ध्यादिष्वपि साधनाङ्गसमर्थनं सुज्ञानमेवेति नोक्तम् । तथापि किञ्चिन्मात्रप्रयोगभेदादेकादशानुपलब्धिव्यतिरिक्तास्वपि कारणविरुद्धव्याप्तोपलब्धि-कार्यविरुद्धव्याप्तोपलब्धि-व्यापकविरुद्धकार्योपलब्धि-कार्यविरुद्धकार्योपलब्ध्यादिषु साधनाङ्गसमर्थनमुक्तं वेदितव्यम् ।

तासां पुनरुदाहरणानि यथाक्रमम्—'नात्र धूमः; तुषारस्पर्शात्' । 'नेहाप्रतिबद्धसामर्थ्यान्यग्निकारणानि सन्ति, तुषारस्पर्शात्' । 'न तुषारस्पर्शोऽत्र; धूमात्' 'नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति, धूमात्' ।

हेतुकार्यविरुद्धाप्तभावो व्यापककार्ययोः ।
विरुद्धकार्ययोरन्यः प्रतिषेधस्य साधकः ॥
नेह धूमो हिमस्पर्शात् समर्थान्नाग्निकारणम् ।
नेह धूमाद्धिमस्पर्शो न शक्यं शीतकारणम् ॥

इति संग्रहश्लोकौ

---

१. स्पर्शबालाकलापा०–रा० ।

एवमनुपलब्धौ साधनाङ्गस्यासमर्थनं साधनाङ्गावचनम्; तद्वादिनो निग्रहस्थानसमर्थने तस्मिन् व्याप्त्यासिद्धेः।

अथ वा—साध्यते येन परेषामप्रतीतोऽर्थ इति साधनम्, त्रिरूपहेतुवचनसमुदायः, तस्याङ्गं पक्षधर्मादिवचनम्, तस्यैकस्याप्यवचनमसाधनाङ्गावचनम्[1], तदपि वादिनो निग्रहस्थानम्। तदवचने हेतुरूपस्यैवावचनम्, अवचने सिद्धेरभावात्॥

प्रतिज्ञादीनामसाधनाङ्गत्वम्

अथवा—तस्यैव साधनस्य यन्नाङ्गं प्रतिज्ञोपनयनिगमनादि तस्यासाधनाङ्गस्य साधनवाक्ये उपादानं वादिनो निग्रहस्थानम्; व्यर्थाभिधानात्॥

---

एवं तावदेकेन प्रकारेणासाधनाङ्गवचनवादिनो निग्रहस्थानमिति प्रतिपादितम्। प्रकारान्तेरणापि तदेवोपपादयति—अथ वेत्यादि। न चेति समुदायश्चायमत्रावृत्त्या पूर्वोदितार्थपरित्यागेनार्थान्तरसमुच्चये वर्तते, न तु धवस्थित्या अथवा खदिरमित्यादाविव पूर्वार्थपरित्यागेन विकल्पादिविधस्याप्यर्थस्य विवक्षितत्वात्। इह च पर्याये साधनशब्दः करणसाधनः। इहाङ्गशब्दोऽवयववचनः, पूर्वस्मिन् कारणवचन इति विशेषः। त्रिरूपहेतुवचनसमुदायग्रहणेन तेषु लक्षणादिवचनानां साधनत्वं निरस्यति[2]।

स्याद् बुद्धिः—साधर्म्यवति प्रयोगे नासपक्षे हेतोरसत्त्वमुच्यते। वैधर्म्यवति च न सपक्षसत्त्वम्; अनन्तरमेव निषेध्यमानत्वात्। तत् कथं तस्यैकस्याप्यवचनमसाधनाङ्गवचनमित्येतद् न वक्ष्यमाणे व्याहतमिति? एतच्च नैवम्[3]। एवं[3] हि व्याख्यायते—

त्रिरूपो हेतुरर्थात्मकः परमार्थतोऽवस्थितः। तस्य वचने ये प्रकाशके पक्षधर्मवचनम्। सपक्षसत्त्ववचने पक्षधर्मवचनम्। विपक्षसत्त्ववचने वा तयोः समुदायः। तस्य वचनद्वयसमुदायस्याङ्गं पक्षधर्मादिवचनमिति। पक्षधर्मवचनं तावदविचलम्, इतरयोस्त्वन्यतरान्यतरत् कादाचित्कम्। तेन वचनद्वयसमुदायरूपस्याङ्गिनोऽङ्गं द्विविधमेव सदा। तस्येदानीमङ्गस्य एकस्याप्यवचनमसाधनाङ्गवचनम्। न केवलं द्वयोः प्रथमव्याख्यानुसारेणेत्यपि-शब्दात्। द्वयोर्ह्यवचनं तूष्णीम्भावः। स चोक्तः, अप्रतिभया तूष्णीम्भावादिति॥

पर्यायान्तरमप्याह—अथ वेत्यादि। तस्यैवेति। त्रिरूपवचनसमुदायस्य यन्नाङ्गं नावयवः। कथं पुनः प्रतिज्ञादीनामसाधनाङ्गत्वमिति चेत्? उच्यते; प्रतिज्ञावचनं साधनम्; साक्षात् पारम्पर्येण वा तस्याः सिद्धेरनुत्पत्तेः। तथा हि—अर्थ एव प्रतिबन्धार्थं गमयति; नाभिधानम्; अर्थप्रतिबन्धविकलत्वात्। तस्मात् प्रतिज्ञावचनं हेतुवचनं वा न साक्षात् साधनमर्थसिद्धौ। संशयश्च पक्षवचनादर्थे दृष्टः, न निश्चयः। तदतोऽपि न साक्षात् साधनम्।

---

१. तस्यैकसाध्यव०—रा०। २. तिरयति—रा०। ३—३. नैवमेव—रा०।

स्यान्मतम्, संशय एवासिद्धः, पक्षवचनाद् वादि-प्रतिवादिनोर्निश्चितत्वाद्; अथान्येषां भवति ? एवं सति कृतकत्वादिवचनेऽप्यव्युत्पन्नानां संशयो भवतीत्यनेकान्तः ?

तदेतदसम्बद्धम्; वादिप्रतिवादिनोर्हि निश्चितत्वमेकस्मिन् वा धर्मेऽनित्यत्वादिके प्रत्याययितुमारब्धे भवेत्, प्रत्यनीकधर्मद्वये वा । न तावदेकस्मिन्; विवादाभावतः साधनप्रयोगानर्थक्यप्रसङ्गात् । नापि प्रत्यनीकधर्मद्वये; वस्तुनो विरुद्धधर्मद्वयाध्यासप्रसङ्गात् । यदा हि एकस्मिन् वस्तुनि प्रमाणबलेन विरुद्धौ धर्मौ वादिप्रतिवादिभ्यां निश्चितौ भवतः, तदा तद्वस्तु द्व्यात्मकं प्राप्तम् । अथ न, प्रमाणसामर्थ्यात् तौ निश्चितौ, अपि तु स्वस्मात् स्वस्मादागमात्; एवमपि तु धर्मयोः प्रमाणेन निश्चयात् कथं न पक्षवचनात् संशयो भवतीति वाच्यम् । तस्मात् पक्षवचनं न साक्षात् साधनम् । नापि पारम्पर्येण; साध्याभिधायकत्वेनासिद्धे हेतुदृष्टान्ताभासोक्तिवदशक्यसूचकत्वात् । हेतुवचनं तु शक्यसूचकत्वात् । शक्तितः साधननिष्ठं सदोच्यते साधनाङ्गम्; प्रतिज्ञावचनत्वे सति साधनोपकारकत्वाद्, हेतुवचनवत् ।

साधनविषयप्रकाशद्वारेण च प्रतिज्ञासाधनमनुगृह्णाति । अन्यथा हि अविषयं तत्साधनं प्रवर्तते ।

ज्ञानात्ममनःसन्निकर्षादीनामपि साधनोपकारकत्वम्, अतः 'वचनत्वे सति' इति विशेषणम् ।

इतश्च—साधनाङ्गसाध्यसाधनविषयप्रकाशनाद् दृष्टान्तवचनवदिति । इदमप्यत्यर्थमसारम् । यस्माद् 'अनित्यं शब्दं साधय' इत्यभ्यर्थनाबाह्यं वचनत्वे सति साधनोपकारकम्, साध्यसाधकविपर्ययप्रकाशकं च । न च तदन्तरङ्गं साध्यसिद्धावङ्गम् । को वा विषयदर्शनस्योपयोगः, यदि ह्यनेन विना न साध्यसिद्धिः स्यात् । सर्वं शोभेत, यावता विनाप्यनेन यावत् । यः कश्चित् कृतकः, स सर्वोऽनित्यः, यथा कुम्भादिः, शब्दश्च कृतक इत्यनुक्तेऽपि पक्षशब्दोऽनित्य इत्यर्थाङ्गमात्र एव । तस्मादस्य निर्देशो निरर्थक एव ।

स्यादयं विपर्यासः, यदि हेतुव्यापारविषयोपदर्शनाय पक्षवद्वचनं नैव प्रयुज्यते, तदा कथं पक्षसमाश्रयलब्धव्यपदेशाः पक्षधर्मत्वादयः सम्पद्यन्ते । तेषु वा निश्रितात्मसु सम्भूतसामर्थ्यात् पक्षगतिरसम्भाव्यैव ? सामर्थ्यलभ्यपक्षबलेन पक्षधर्मत्वादयः सम्पद्यन्त इत्यप्ययुक्तम्; तेष्वसत्सु सामर्थ्यलभ्यस्यैव पक्षस्यासम्भवात् । अन्योन्याश्रयं चेदम्—पक्षधर्मत्वादिसामर्थ्यायातपक्षवशेन पक्षधर्मत्वादयः सम्पद्यन्ते, पक्षधर्मत्वादिबलेन च पक्ष इति ?

तदत्रोच्यते—न खलु साधनकाले पक्षधर्मत्वादिविकल्पोऽस्ति, केवलं यत्रैव जिज्ञासितविशेषे धर्मिणि शब्दादौ तु च, करीशादिस्थगिततेजसि वा कुण्डादौ यो

धर्मः कृतकत्व-धूमत्वादिलक्षणोऽनुमानतः प्रत्यक्षतो वा प्रतीयते, प्रत्याय्यते वा। तद्विशेषयोगितया वा निश्चितेऽपरस्मिन् घटमहानसादाववस्थितत्वेन स्मर्यते, तद्विशेषविरहिणि वा गगनसागरादौ नास्तित्वेनैव स्मर्यते। स वस्तुधर्मतयैव विनापि पक्षधर्मत्वादिव्यपदेशेन तद् धर्मिणं जिज्ञासितधर्मविशिष्टं सामर्थ्यादेव प्रतिपादयति। स चास्य सामर्थ्यविषयः पक्ष इति इति गीयते। ततः पश्चात् तत्समाश्रयभाविन्यो यथेष्टपक्षधर्मत्वादिसंज्ञाः शास्त्रेषु संव्यवहारार्थं प्रतन्यन्ते।

यदि वा प्रत्यालोचनप्रकरणबलात् साधनकालेऽपि भवन्तु पक्षधर्मत्वादिविकल्पाः, कथं यो हि वस्तुनो धर्मो वादिना विवादास्पदीभूतधर्मिविशिष्टतया साधयितुमिष्टः स पक्षः, तस्य योऽन्यो धर्मः स पक्षधर्मः। प्रकृतसाध्यधर्मसामान्येन च समानोऽर्थः सपक्षः, तद्विरही वा सपक्ष इति। यस्यापि हि साधनकाले पक्षप्रयोगोऽस्ति, तस्यापि न बाधकाण्डमेव[1] पक्षे जातेऽनित्यः शब्द इति। अस्तु[2], प्रस्तावान्तरेणापि प्रकरणबलेनैव पक्षधर्मत्वादयोऽपि वक्तव्याः। तच्च पक्षप्रयोगदूषकस्यापि समानम्। तस्मात् प्रतिज्ञावचनं न साधनाङ्गम्।

उपनय-निगमनवचनं तु यथा न साधनाङ्गम्, तथोच्यते—तत्र तावद् "उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साधनस्योपनयः" (न्या० सू० १. २. ३८)। 'यथा' 'तथा' इति प्रतिबिम्बनार्थम्। किं पुनरत्र प्रतिबिम्बम्, दृष्टान्तगतस्य धर्मस्याव्यभिचारित्वे सिद्धे! तेन साध्यगतस्य तुल्यधर्मता। एवं च 'अयं कृतकः' इति साध्येन सह सम्भव उपनयार्थः। ननु च 'कृतकत्वाद्' इत्यनेन सम्भव उक्तः? नोक्तः; साध्यसाधनधर्ममात्रनिर्देशात्। साध्यसाधनधर्ममात्रनिर्देशः कृतकत्वादनित्यः शब्दो भवति। तत् पुनः शब्दे कृतकत्वमिति। 'नास्ति' इत्युपनयेन सम्भवो गम्यते। अस्ति च शब्दे कृतकत्वमिति। तथा च हेतुवचनाद् भिन्नार्थप्रतिपादकत्वमुपनयस्याभिन्नरूपत्वे, प्रसिद्धपर्यायव्यतिरिक्तत्वे च सति हेतुवचनोत्तरकालमुपादीयमानत्वात् दृष्टान्तवचनवदिति शक्यतेऽनुमातुम्।

"हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" (न्या० सू० १. १. ३९)। प्रतिज्ञायाः पुनर्वचनमिति प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणोपपत्तौ विपरीतप्रसङ्गप्रतिषेधार्थं यत् पुनरभिधानं तन्निगमनम्। न पुनः प्रतिज्ञाया एव पुनर्वचनम्। किं कारणम्? यस्मात् प्रतिज्ञा साध्यनिर्देशः, सिद्धनिर्देशो निगमनमिति। पुनः-शब्दश्च नानात्वे दृष्टः—'पुनरियमचिरप्रभा निश्चरति', 'पुनरिदं गन्धर्वनगरं दृश्यते' इति। अत्र च सामर्थ्यादुपनयानन्तरभावी हेत्वपदेशो गृह्यते, न प्रतिज्ञानन्तरभावी; असम्भवात्। न हि कश्चित् प्रतिज्ञानन्तरं हेत्वपदेशान्निगमनं प्रयुङ्क्ते; 'अनित्यः शब्दः, कृतकत्वात्; तस्मादनित्यः' इति।

अतश्च प्रतिज्ञार्थवाक्याद् भिन्नार्थं निगमनवचनम्; प्रतिज्ञावाक्याद्; भिन्नरूपत्वे सति हेतुवचनोत्तरकालमभिधीयमानत्वात्, दृष्टान्तवचनवत्। न च

१. बाधकाण्डमेव—रा०। २. कस्तु—रा०।

साध्यार्थप्रतिपादकं निगमनम्; शब्दान्तरोपात्तस्यावधारणरूपेण प्रवृत्तत्वात्। 'योऽयममागच्छति, अयं विषाणी' इति केनचिदुक्ते 'तस्मादनश्वः' इत्यादिवचनवत्। तस्मात्—शब्दसहितं वाक्यं विचारविषयाय प्रसाध्यार्थप्रतिपादकं न भवति; कारणोपदेशोत्तरकालमुपात्तत्वात्। दृष्टान्तः पूर्ववत्।

तदेतत् प्रतिषिध्यते, न खल्वेवं प्रयोगः क्रियते—'अनित्यः शब्दः कृतकत्वाद्'। प्रतिज्ञाप्रयोगस्यानन्तरं निराकृतत्वात्। अपि तु 'कृतकः शब्दः, यश्चैवं स सर्वोऽनित्यः, यथा कलशादिः', 'यो वा कृतकः स सर्वोऽनित्यः, यथा घटादिः'। तथा च 'कृतकः शब्दः' इत्येवमुभयथा यथेष्टं प्रयोगः क्रियते; साध्यसिद्धेरुभयथापि भावात्। तत्र यदि 'कृतकः शब्दो यश्चैवं स सर्वोऽनित्यः, यथा घटादिः' इत्यभिधाय 'तथा कृतकः शब्दः' इति प्रतिबिम्बनार्थमुपनयवचनमुच्यते, तदिदमनर्थकम्; विनाप्यनेन प्रतिबिम्बनेनानन्तरोक्तप्रयोगमात्रात् प्रतीतिभावात्। साधनं च यदनर्थकं न तत् साधनवाक्ये विद्वद्भिरुपादेयम्। तद्यथा—दशदाडिमादिवाक्यम्। तथा चानर्थकं प्रतिबिम्बनार्थमुपनयवचनमिति व्यापकविरुद्धोपलब्धेः।

स्वार्थानुमितावप्ययमेव न्यायो दृष्टः। न हि कश्चित् सचेतनः कृतकत्वस्य भावं शब्दे गृहीत्वा तस्य चाविनाभावित्वमनुस्मृत्य 'तथा च कृतकः शब्दः' इति प्रतिबिम्बनार्थं करोति। अथापि 'यः कृतकः स सर्वोऽनित्यः, यथा घटः; तथा च कृतकः शब्दः' इति सम्भवप्रदर्शनार्थमुपनयवचनमुच्यते। तदेतद् द्वयमप्यङ्गीकुर्मः। प्रतिज्ञानन्तरभाविनं तु साधनमात्रनिर्देशम् 'अनित्यः शब्दः, कृतकत्वाद्' इत्येव न प्रतिपद्यामहे; प्रतिज्ञायाः प्रयोगाभावात्। ततश्चोपनयस्यावयवान्तरत्वप्रतिपादनायोक्तो हेतुरसिद्धतोरगदष्टत्वाद् गतावशक्त एव।

यत् पुनरिदं सिद्धार्थनिर्देशलक्षणं निगमनं पौनरुक्त्यपरिहाराय वर्ण्यते, तन्नैवोपपद्यते; विना निगमनेनार्थसिद्धेरेव पञ्चावयवसाधनवादिनोऽनुपपत्तेः। अन्यथा निगमनात् प्रागेवार्थस्य सिद्धत्वाद् व्यर्थतया न साधनाङ्गं निगमनं प्राप्नोति। ततश्च नेदमुपादेयं साधनवाक्ये सिद्धमित्यप्रतिज्ञा।

भवेद् व्यामोहः—विप्रतिपन्नस्य प्रमाणान्तरव्यपेक्षा नास्तीति सिद्धमनित्यत्वमुच्यते, निगमनं तु प्रतिविषयस्यार्थस्याशेषप्रमाणोपपत्तावशेषावयवपरामर्शेनावधारणार्थमनित्य एवेति प्रवर्तत इति ?

यदि तर्हि प्रमाणान्तरव्यपेक्षा नास्ति, तर्त्तार्हि साध्यं सामर्थ्यादवधार्यत एव। तथा हि—यदकृतकं तदनित्यमेव, यथा कुण्डादि, शब्दश्च कृतक इति। एवमनित्यत्वाविनाभाविनः कृतकत्वस्य शब्दे भावख्यातौ, तत्सामर्थ्यादेव 'अनित्यः शब्दः' इति निश्चयो भवति। तदस्य वचनं सामर्थ्यं प्रतीतार्थप्रत्यायकत्वात् पुनरुक्तम्, अनुपादानार्हं च। न चात्र विपर्ययप्रसङ्गस्य लेशोऽप्याशङ्क्यते; येन तद्व्यवच्छेदाय सफलमेतस्योपादानं स्यात्; अनित्यत्वेनैव कृतकत्वस्य व्याप्तिप्रसाधनात्।

अन्वयव्यतिरेकवचनयोर्वा साधर्म्यवति वैधर्म्यवति च साधनप्रयोग एकस्यैवाभिधानेन सिद्धेर्भावाद् द्वितीयस्यासामर्थ्यमिति तस्याप्यसाधनाङ्गस्याभिधानं निग्रहस्थानम्; व्यर्थाभिधानादेव।

ननु च विषयोपदर्शनाय प्रतिज्ञावचनमसाधनाङ्गमप्युपादेयमेव? न; वैयर्थ्यात्, असत्यपि प्रतिज्ञावचने यथोक्तात् साधनवाक्याद् भवत्येवेष्टार्थसिद्धिरित्यपार्थकं तस्योपादानम्।

यदि च विषयोपदर्शनमन्तरेण प्रतीतेरुत्पत्तिः, कथं न प्रतिज्ञासाधनादयः? न हि पक्षधर्मवचनस्यापि[1] प्रतीतिहेतुभावादन्यः साधनार्थः, स प्रतिज्ञावचनेऽपि तुल्य इति कथं न साधनम्।

केवलस्यासामर्थ्यादसाधनत्वमिति चेत्? तत्तुल्यं पक्षधर्मवचनस्यापीति तदपि न साधनावयवः स्यात्।

न हि पक्षधर्मवचनात् केवला प्रतिपत्तेरुत्पत्तिः।

---

प्रयोगस्तु—यत् सामर्थ्यात् प्रतीयते, न तस्य वचनं प्रेक्षावता कर्तव्यम्। तद्वचनं पुनरुक्तं वा, तद्यथा—'गेहे नास्ति कुमारो जीवति च' इत्येतत्सामर्थ्यात् प्रतीयमानस्य तद्बहिर्भावस्य वचनम्। पक्षधर्मान्वयव्यतिरेकतद्वचनसामर्थ्याच्च प्रतीयते। 'तस्मादनित्य एव' इत्येवमादिना पुनः सिसाधयिषितोऽर्थः प्रथमसाध्यापेक्षया व्यापकविरुद्धोपलब्धिः, द्वितीयसाध्यापेक्षया च स्वभावहेतुः। अत एव निगमनस्यावयवान्तरत्वप्रतिपादनायोक्ता हेतवोऽसिद्धाः। यदाह—

> प्रत्ययेऽत्र प्रतिज्ञादीन् वाक्यार्थप्रतिपत्तये।
> प्रोच्यमानं निगमनं पुनरुक्तं न जायते॥
> विप्रकीर्णैश्च वचनैर्नैकोऽर्थः प्रतिपाद्यते।
> तेन सम्बन्धसिद्ध्यर्थं वाच्यं निगमनं पृथक्॥ (　　) इति।

अलमतिप्रसारिण्या कथया॥

अन्वयव्यतिरेकयोर्वेति। "पर्यायान्तरकथनमुपादानम्." (न्या. सू. २.१.१२) इति वर्तते। द्वितीयस्यासामर्थ्यं जातायाः सिद्धेः पुनरजन्यत्वात्।

प्रमाणसमुच्चयटीकाकारास्त्वाहुः—नन्वित्यादि। नेत्याद्युत्तरम्[2]। यदि चेत्युपचयहेतुः। साधनावयवः प्रतिज्ञां प्राप्नोति; नियमेन साध्यप्रतीतिनिमित्तत्वात्, पक्षधर्मादिवचनवत्।

सन्दिग्धव्यतिरेको हेतुरिति चेद्? न हि पक्षधर्मवचनस्यापीति।

तत्तुल्यमिति। विरुद्धानैकान्तिकयोः पक्षधर्मसद्भावेऽप्यगमकत्वात्।

तत एव संशयोत्पत्तेः पक्षधर्मवचनं न साधनम्, साधारणादिवचनवदिति

---

१. पक्षधर्मादि—रा०। २. ०त्याद्युत्तरः—रा०।

एतेन संशयोत्पत्तिः प्रत्युक्ता; पक्षधर्मवचनादपि केवलादप्रदर्शिते सम्बन्धे संशयोत्पत्तेः ।

तस्माद् व्यर्थमेव साधनवाक्ये प्रतिज्ञावचनोपादानं वादिनो निग्रहस्थानम् ॥

अथवा—साधनस्य सिद्धेर्यन्नाङ्गम्—असिद्धः, विरुद्धः, अनैकान्तिको वा हेत्वाभासः, तस्यापि वचनं वादिनो निग्रहस्थानम्; असमर्थोपादानात् ॥

तथा साध्यादिविकलस्यान्वयाप्रदर्शितान्वया (?) तैरपि दृष्टान्ताभासस्य साधनाङ्गस्य वचनमपि वादिनो निग्रहस्थानम्, असमर्थोपादानादेव । न हि तैर्हेतोः सम्बन्धः शक्यते प्रदर्शयितुम् । अप्रदर्शनादसामर्थ्यम् ॥

---

चेद् ? आह—एतेन तत्तुल्यमित्यादिना संशयोत्पत्तिः प्रत्युक्तेति । एतदेव व्यनक्ति—पक्षधर्मवचनादपीति । तदनेनानन्तरस्य व्यभिचारं कथयति ।

ननु च पक्षधर्मस्य श्रावणत्वादेरप्रदर्शिते सम्बन्धेनैव साधनावयत्वम्, अतो विपक्षत्वाभावान्न व्यभिचारः; प्रदर्शिते तु सम्बन्धे साधनावयत्वम्, तदा च तस्मात् संशयो नास्तीति सुतरां नानेकान्त इति ? एवं मन्यते—पक्षवचनेऽपि तुल्यमेतदिति तदपि साधनं स्यात् । अथ प्रतिपद्येथाः—सत्यं स्याद् यदि साध्यं स्यात्. न चास्त्यन्यतः साध्यसिद्धः । न च निष्पादितक्रिये दारुणि दात्रादयः कञ्चनार्थं पुष्यन्ति । अप्रदर्शिते तु सम्बन्धे संशयोत्पत्तिहेतुत्वादिदमुक्तम्, तत एव संशयोत्पत्तेरिति !

यद्येवम्, न तर्हि तत्प्रयोगमन्तरेण साध्यसिद्धेरभाव इति व्यर्थ एव तत्प्रयोगः स्यात्, अन्यथा कः पक्षवचनं साधनादपाकर्तुं समर्थः ! ततश्च "त्रिरूपलिङ्गाख्यानं परार्थमनुमानम्" इत्याद्याचार्यवचो व्याहन्येत ।

कथं तर्ह्युक्तम्—'पक्षधर्मत्वसबन्धसाध्योक्तेरन्यवर्जनम्' (     ) इति ? नास्ति विरोधः; पक्षधर्मत्वसम्बन्धाभ्यां साध्यस्योक्तिप्रकाशनमाक्षेपः, तस्मादन्येषां पक्षोपनयवचनादीनामुपादेयत्वेन साधनवाक्यवर्जनमिति व्याख्यानात् ।

विवरणेऽप्ययमर्थः; यस्मात् पक्षधर्मत्वसम्बन्धवचनमेवान्वयव्यतिरेकाभ्यां विवक्षितार्थसिद्धिकारणं युक्तम्, नान्यत् । तस्मादनुमेयस्योपदर्शनार्थसिद्ध्यर्थं पक्षवचनमुपादेयम्, नान्यदित्युपस्कारः । पक्ष उच्यते = आक्षिप्यते, प्रकाश्यतेऽनेनेति पक्षवचनं त्रिरूपं लिङ्गम् । आक्षेपो ह्यभिधानतुल्य इति 'वचनम्' इत्युक्तम् । वचेरनेकार्थत्वाद् वा ।

अस्माकं तु—"तत्रानुमेयनिर्देशो हेत्वर्थविषयो मतः" (     ) इत्यपि वचनं विरुद्ध्येत; यस्मात्—

> तत्रेति तर्कशास्त्रस्य सम्बन्धोऽत्राभिधीयते ।
> प्रयोगस्य तु सम्बन्धे बहु स्यादसमञ्जसम् ॥
> तस्यैव प्रकृतेरुक्तमेतच्चास्यैव लक्षणे ।
> परविप्रतिपत्तीनां निषेधाय विशेषतः ॥ (     ) इति ।

अलं प्रसङ्गेन ॥

अथवा–सिद्धिः साधनम्, तदङ्गं धर्मो यस्यार्थस्य विवादाश्रयस्य वादप्रस्ताव-हेतोः स साधनाङ्गः। तद्व्यतिरेकेणापरस्याप्यजिज्ञासितस्य विशेषस्याशास्त्राश्रय-व्याजादिभिः प्रक्षेपो मोषणं च परव्यामोहनानुभाषणशक्तिविघातादिहेतोः, तदप्यसाधनाङ्गवचनं वादिनो निग्रहस्थानम्; अप्रस्तुताभिधानात्।

एभिः कथाविच्छेद एव। तथा विशेषसहितस्यार्थस्य प्रतिवादिनोऽजिज्ञासित-त्वात् जिज्ञासायामदोषः। जिज्ञासितं पुनरर्थस्यान्यस्य प्रसङ्गपरम्परया ये ष पन्नादिना (?) बहिः प्रतिवादिनः। प्राश्निकानां च न्यायदर्शिनामिति।

एभिः कथाविच्छेद एव करणीयः, न हि कश्चिदर्थः क्वचित् क्रियमाणप्रसङ्गे न प्रयुज्यते; नैरात्म्यवादिनस्तु तत्साधने नृत्यगीत्यादेरपि तत्र प्रसङ्गात्।

यथा—प्रतिज्ञाभिधानपूर्वकं कश्चित् कुर्यात्—'नास्त्यात्मा' इति वयं बौद्धा ब्रूमः। के बौद्धाः? ये बुद्धस्य भगवतः शासनमभ्युपगताः। को बुद्धो भगवान्?

---

तद् भावरूपं साधनमङ्गं धर्मो विषयित्वेन यस्यार्थस्य प्रस्तुतस्य स साधनाङ्गः। तस्यैवाभिव्यक्तिरुत्तरेण पदद्वयेन।

अजिज्ञासितं प्रतिवादिनाऽशास्त्राश्रयव्याजादिभिरिति। आदिपदेनासम्बद्धप्रसङ्ग-परिग्रहः। प्रक्षेपः=नाममात्रेण घोषणम्।

विस्तरेण यथा—बुद्धीन्द्रियदेहकलापव्यतिरेक आत्मास्ति, नास्तीत्येतावन्मात्रे बुभुत्सिते नैयायिकाः प्रमाणयन्ति–"सदाद्यविशेषविषया विषयज्ञेयविषया मदीयाः प्रत्यक्षादयः प्रत्ययाः मदीयशरीरादिव्यतिरिक्तसंवेदकसंवेद्याः, स्वकारणायत्तजन्म-वत्त्वादिभ्यः पुरुषान्तरप्रत्ययवद्" इति। ततः "सदनित्यं द्रव्यवत् कार्यकारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः" इति महता व्यासेन सदाद्यविशेषान् व्याचक्षते। न ह्यत्र सदाद्यविशेषविषयाविषयज्ञेयविषयत्वं धर्मविशेषणं कथञ्चिदपि प्रकृतसाध्यसिद्ध्युपकारि।

परव्यामोहनानुभाषणशक्तिविघातादिहेतोरिति। अत्र आदि-शब्देनोत्तरप्रतिपत्ति-शक्तिविघातहेतोः परिग्रहः। क्रियमाणः प्रसङ्गो यस्येति विग्रहः। नैरात्म्यवाद्यु-दाहरणेन किं ज्ञापयति? यत्र नाम विहितप्रतिषिद्धो वादिदोषगुणसौगतधर्म-विनयस्याप्यहङ्कारनिमित्तसकलौद्धत्यादिमलक्षालनायोद्यतमत्रैव नात्मवादिनस्त-त्साधने नृत्यगीतादेः प्रसङ्गः। तत्रान्येषामन्यस्य च का गणना!

ननु च वयं बौद्धा ब्रूम इति कथम्, यावता सविशेषणस्य प्रतिषेधाभिधानात्, 'अहं बौद्धो ब्रवीमि' इति भवितव्यम्, यथा 'अहं गार्ग्यो ब्रवीमि', 'अहं बटुः ब्रवीमि' इति; न च बहुषु एतत्तद् बहुवचनं[1] शक्यमभिधातुं कश्चित् इति वचनात्? नैव; यस्मादसावात्मनि परान् स्वयूथ्यानप्यन्यान् बहूनपेक्ष्य तथा प्रयुक्तवान्। ईदृश्यामेव च वादिनो विवक्षायामिदमुक्तमुदाहरणम्, नान्यस्यामिति प्रतिपत्तव्यम्।

अथ वा—जडशाब्दिकाभिनिवेशनिवारणायेदमेवमुक्तम्। तथा च व्यर्थतां शब्दानुशासनस्य प्रतिपादयिष्यति। अत एवान्येनापि महारथेनापीदं प्रयुक्तम्—

यस्य शासने भदन्ताश्वघोषः प्रव्रजितः। कः पुनर्भदन्ताश्वघोषः? यस्य राष्ट्रपालं नाम नाटकम्। कीदृशं राष्ट्रपालं नाम नाटकमिति? प्रसङ्गं कृत्वा 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति पठेत्, नृत्येद्, गायेच्च। प्रतिवादी तं च सर्वप्रसङ्गं नानुकर्तुं समर्थ इति पराजितः स्यात्। इति सभ्यः[1] साधुसम्मतानां विदुषां तत्त्वचिन्ताप्रकारः!

न चैवं प्रस्तुतस्य पर्यवसानं स भवति; निश्चयफलत्वादनारम्भ एव वादस्य।

कथं चैवं जयपराजयौ? प्रतिवादिनोऽप्यननुभाषणस्यैवम्प्रकारस्य प्रसङ्गस्य विस्तरेणानुभाषणव्याजेन सम्भवाद्, अनिश्चितत्वाच्च।

तस्मात् प्रतिज्ञावचनमेव तावन्न न्याय्यम्, कुतः पुनस्तत्राजिज्ञासितविशेष-प्रसङ्गोपन्यासः! तद्व्याख्याप्रसङ्गवितथप्रलापश्च!

सर्वश्चायं प्रकारो दुर्मतिभिः शठैर्न्यायसामर्थ्येनार्थप्रतिपादनेऽसमर्थैः प्रवर्तितः।

यथा—'पुरुषातिशयपूर्वकाणि तनुभुवनकरणादीनि' इति प्रतिज्ञाय तनुकरण-भुवनव्याख्याव्याजेन सकलवैशेषिकशास्त्रार्थघोषणम्।

'नित्यः शब्दोऽनित्यो वा' इति वादे द्वादशलक्षणप्रपञ्चप्रकाशनशास्त्रप्रणेतुः[2] 'जैमिनिप्रतिज्ञाततत्त्वनित्यताधिकरणशब्दघटान्यतरसद्वितीयो घटः' इति प्रतिज्ञा-मुपरचय्य द्वादशलक्षणादिव्याख्यानम्[3]।

सर्वोऽयं दुर्मतीनामसामर्थ्यप्रच्छादनोपायः, न तु सत्यैरप्युपेतः; तत्त्व-परीक्षायां फलादिप्रतिसरणदण्डप्रयोगादीनामयुक्तत्वात्।

भवत्येव नाटकादिघोषणेऽर्थान्तरगमनात् पराजय इति चेत्; अन्यस्याप्य-जिज्ञासितस्य किं न भवति! न हि तस्यापि काचिद्विवक्षितसाध्यधर्मसिद्धौ नान्तरीयकता। यथा हेतुप्रत्ययपारतन्त्र्यलक्षणसंस्कारदुःखतादिसिद्धिमन्तरेण नानित्यतासिद्धिः।

---

"त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः" (नी० श० ५२) इति। सभ्यः साधुसम्मतानामिति उपहसति। अहो-शब्दश्चात्राध्याह्रियते।

द्वादशानां प्रमाणादिलक्षणानां यः प्रपञ्चो विस्तरस्तस्य प्रकाशनाय यच्छास्त्रं मीमांसाख्यं तस्य प्रणेता स चासौ जैमिनिश्च, तेन प्रतिज्ञातं यत् तत्त्वं नित्यता-[भि]धानम्, तस्याधिकरणं यः शब्दः स च घटश्च तयोरन्यतरस्तेन सद्वितीयो घट इतीत्थं प्रतिज्ञामुपरचय्य द्वादशलक्षणादिव्याख्यानं करोति।

प्रमाणलक्षणमेव तावदेकं महता कालेन व्याचष्टे—"चोदनालक्षणो धर्मः" (मी. सू. १.१.२), चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः—"चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमर्थं शक्नोत्यवगमयितुम्, नान्यत् किञ्चनेन्द्रियम्" (मी० शा० भा० १. १. २)। तथा हि—"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्, अनिमित्तं विद्यमानोपलम्भनत्वाद्"

---

१. सत्यः–रा०। २. वादलक्षण०–रा०। ३. ०लक्षणार्थ०–रा०।

तथाविधस्तु धर्मः पृथगनुक्तोऽपि साध्यधर्मेऽन्तर्भावात् पक्षीकृत एवेति न पृथगस्योपन्यासः, व्याख्यानं वा। तस्मादेवंविधस्यापि तदानीं प्रतिवादिनो जिज्ञासितस्यार्थस्य प्रतिज्ञायामन्यत्रैवोपन्यासो व्याख्यानं वा अर्थान्तरगमनान्निग्रहस्थानमेव।

तेन जिज्ञासितधर्ममात्रमेव साधनाङ्गं वाच्यम्, न प्रसङ्ग उपक्षेप्तव्यः; तदुपक्षेपेऽतिप्रसङ्गात्।

एवमसाधनाङ्गवचनं वादिनो निग्रहस्थानं प्रतिवादिना तथाभावे प्रतिपादिते; अन्यथा द्वयोरेकस्यापि न जयपराजयाविति ॥

अदोषोद्भावनं निग्रहस्थानम्

अदोषोद्भावनं प्रतिवादिनो निग्रहस्थानम्। वादिना साधने प्रयुक्तेऽभ्युपगतोत्तरपक्षो यत्र विषये प्रतिवादी यदा न दोषमुद्भावयति, तदा पराजितो वक्तव्यः।

साधनदोषाः पुनः—न्यूनत्वम्, असिद्धिः, अनैकान्तिकता, वादिनः साधयितुमिष्टस्यार्थस्य विपर्ययसाधनम्, अष्टादश दृष्टान्ताभासाश्च[1]। तेषामनुद्भावनमप्रतिपादनम् प्रतिवादिनः पराजयाधिकरणम्।

---

(मी० सू० १. १. ४) इत्यादिना। संस्कारदुःखतासिद्धिमन्तरेण नानित्यतासिद्धिः; अप्रतीत्यसमुत्पन्नस्य क्षणिकत्वायोगात्।

स तर्हि तादृशो धर्मः पृथग् वाच्यः? नेत्याह—तथाविधस्त्वित्यादि।

एवंविधस्यापि प्रस्तुतसाध्यधर्मनान्तरीयकस्य प्रतिवादिना जिज्ञासितस्य तद्व्यतिरेकेण प्रतिज्ञायामन्यत्र चाहेतुदृष्टान्तयोः।

कदा पुनरेतदसाधनाङ्गवचनं यथोक्तं निग्रहस्थानमिति? आह—प्रतिवादिना तथाभावेऽसाधनाङ्गत्वे प्रतिपादिते सति। यदा तु न प्रतिपादयति, तदा द्वयोरेकस्यापि न जयपराजयौ भवतः। कुतः? साधनानभिधानान्न वादिनो जयः। प्रतिवादिना तथाभावस्याप्रतिपादितत्वाच्च पराजयोऽपि नास्त्येव; तस्य प्रतिपन्नापेक्षत्वात्। अत एव प्रतिवादिन्यपि तयोरभावः॥

सम्प्रति प्रतिवादिनो निग्रहस्थानमधिकृत्याह—अदोषोद्भावनमित्यादि। यत्र विषये जिज्ञासिते अजिज्ञासिते पुनर्दोषस्यानुद्भावनेऽपि नापराध इत्यभिप्रायः।

के पुनस्ते साधनस्य दोषाः? इत्याह—न्यूनत्वं षट्प्रकारम्। एकैकद्विद्विरूपानुक्तौ। स्यान्मतिः—सपक्षविपक्षयोः सदसत्त्वयोर्यौगपद्येनाप्रयोगे कथं च प्रकारात् न्यूनतोच्यते? यदा सर्वोपसंहारेण व्याप्तिव्यतिरेकाभ्यां तदाक्षेपोऽपि नास्ति, तदेयं व्यवस्थाप्यते। अथोच्यते—तदाप्यप्रदर्शितान्वयव्यतिरेकादिदृष्टान्तदोषो भवति? भवतु, अयमपरोऽस्यापराधः। न ह्येकदोषालीढान्येव साधनानि भवन्ति, त्रयो हेत्वाभासाः, दृष्टान्ताभासाश्चाष्टादश न्यायबिन्दौ[2] सोदाहरणाः प्रपञ्चेन

---

१. दृष्टान्तदोषाश्च—रा०। २. तृतीयपरिच्छेदे।

ततः[1] पुनः साधनस्य निर्दोषत्वात्, सदोषत्वेऽपि प्रतिवादिनोऽज्ञानात्, प्रतिपादनासामर्थ्याद् वा।

न हि दुष्टसाधनाभिधानेऽपि वादिनः प्रतिवादिनोऽप्रतिपादिते दोषे पराजयव्यवस्थापना युक्ता; तयोरेव परस्परसामर्थ्योपघातापेक्षया जयपराजयव्यवस्थापनात्।

केवलं हेत्वाभासात् भूतप्रतिपत्तेरभावादप्रतिपादकस्य जयोऽपि नास्त्येव। न हि तत्त्वचिन्तायां कश्चिच्छलव्यवहारः।

यद्येवम्, किन्तु पराजयः, तत्त्वसिद्धिभ्रंशात्? न; अनिराकरणात्। निराकरणं हि तस्यान्येन पराजयः, न सिद्ध्यभावः; प्रतियोग्यपेक्षणात् सिद्ध्यभावस्य। साधनाभावेऽसत्यपि प्रतियोगिनि भावात्। प्रतियोगिनश्च तन्निराकरणेऽसामर्थ्यात् पराजयस्यानुत्पत्तेरपराजयः।

तस्माद्यमसमर्थसाधनाभिधाय्यपि परेण तथाभावेऽप्रतिपादितेऽपराजितो वक्तव्यः।

वादे छलव्यवहारनिषेधः

छलव्यवहारोऽपि विजिगीषूणां वाद इति चेत्, न; दुर्जनविप्रतिपत्त्यधिकारे सतां शास्त्रप्रवृत्तेः। न हि परानुग्रहप्रवृत्ता मिथ्याप्रलापारम्भात् सोत्कर्षपरविपंसनादीन् असद्व्यवहारानुपदिशन्ति। न च परविपंसनेन लाभसत्कारश्लोकोपार्जनं सतामाचारः।

नापि तथाप्रवृत्तेभ्यः स्वहस्तदानेन प्राणिनामुपतापनं सत्सम्मतानां शास्त्रकारसभासदां युक्तम्। न च न्यायशास्त्राणि सद्भिर्लाभाद्युपार्जनाय प्रणीयन्ते।

तस्मान्न योगविहितः कश्चिद् विजिगीषुवादो नाम। परानुग्रहप्रवृत्तास्तु सन्तो विप्रतिपन्नं प्रतिपादयन्तो न्यायमनुसरेयुः सत्साधनाभिधानेन, भूतदोषोद्भावनेन वा।

---

दृष्टव्याः। तेषामनुद्भावनं पर्यायशब्दद्वयेन व्याचष्टे।

तच्चानुद्भावनं त्रिभिः कारणैरित्याह—ततः पुनः साधनस्य निर्दोषत्वादित्यादि।

ननु च युक्तो निर्दोषे साधने प्रतिवादिनो दोषानुद्भावनात् निग्रहः, सदोषत्वज्ञानासामर्थ्याभ्यामनुद्भावनेऽपि दोषस्य दुष्टसाधनप्रयोगाद् वादिन एव पराजयो युक्तः, न प्रतिवादिन इति? अत्राह—न हि दुष्टसाधनाभिधानेऽपीति। यद्येवम्, दुष्टेनापि साधनेन वादिना प्रतिवादिनस्तिरस्कृतत्वात् कस्माज्जयो न भवति तस्य? इत्याह—केवलमित्यादि।

यद्येवम्, किं न पराजयः? तत्त्वसिद्धिभ्रंशादिति चोद्यम्। नानिराकरणादित्याद्युत्तरम्।

दुर्जनानां विप्रतिपत्तिरशोभनो व्यवहारः। तस्मान्न योगविहितो न्याय्यः कश्चिद् विजिगीषुवादो नाम। यश्छलादिभिः[2] क्रियते इत्यध्याहारः। उक्ते सति न्याये

---

१. तत्—रा०। २. यच्छलादिभिः—रा०।

साक्षिप्रत्यक्षं तस्यैवानुप्रबोधाय, तदेव न्यायानुसरणं सतां वादः। उक्त-न्याये तत्त्वार्थी चेत् प्रतिपद्येतेति। तदप्रतिपत्तावप्यन्यो न विप्रतिपद्येतेति।

तत्त्वरक्षणार्थं सद्भिरुपहर्तव्यमेव छलादिविजिगीषुभिरिति चेत्; नखचपेट-शस्त्रप्रहारादीपनादिभिरपीति वक्तव्यम्! तस्मान्न ज्यायानयं तत्त्वरक्षणोपायः।

साधनप्रख्यापनं सतां तत्त्वरक्षणोपायः, साधनाभासदूषणं च। तदभावे मिथ्याप्रलापादत्र परोपतापविधानेऽपि तत्त्वाप्रतिष्ठापनात्। अन्यथापि न्यायोप-वर्णने विद्वत्प्रतिष्ठानात्।

तस्मात् परानुग्रहाय तत्त्वख्यापनं वादिनो विजयः, भूतदोषदर्शनेन मिथ्या-प्रतिपत्तिनिवर्तनं प्रतिवादिनः॥

अथवा—यो न दोषः साधनस्य, तदभावेऽपि वादिना तदसाधयितुमिष्ट-स्यार्थस्य सिद्धेर्विघाताभावात्, तस्योद्भावनं प्रतिवादिनो निग्रहाधिकरणम्; मिथ्योत्तराभिधानात्। यथा साध्यतयानिष्टोऽपि[1] वादिनो धर्मः शास्त्रोपगमात् साध्य इति तद्विपर्यासेन न विरोधोद्भावनम्।

नास्त्यात्मेति तत्र प्रतिज्ञापदयोर्विरोध इति प्रतिज्ञादोषोद्भावनं प्रयत्नान्तरीयकः शब्दोऽनित्यः प्रयत्नान्तरीयकत्वात् इति हेतोर्धर्मविशेषत्वात् प्रतिज्ञार्थैकदेश

---

तत्त्वार्थी चेत् प्रतिवादी, प्रतिपद्येत तमर्थं न्यायोपेतम्। अथ स्वपक्षरागस्य बलीयस्त्वा-दुक्तेऽपि न्याये न प्रतिपद्येत, तदा तेन प्रतिवादिना तस्य न्यायस्यार्थस्याप्रतिपत्तौ अन्यसमीपवर्त्यात्मज्ञो जनकायो न विप्रतिपद्येतेति कृत्वा न्यायानुसरणमेव सतां वाद इति वर्तते।

तत्त्वरक्षणार्थमिति परः। यथोक्तम्—"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे, बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" ( न्या. सू. ४. २. ५० )।

नेत्याद्याचार्यः। एवं तत्त्वं सुरक्षितं भवति; एकान्तेन प्रतिद्वन्द्व्युन्मू-लनादिति भावः।

तदभावे इति। साधनप्रख्यापन-साधनाभासदूषणयोरभावे। अन्यथापीति। मिथ्याप्रलापाद्यभावेऽपि॥

कथमसौ न दोषः साधनस्य? इत्याह—तस्य दोषत्वेनाभिमतस्य भावेऽपि सिद्धेर्विघाताभावात्। साधयितुमनिष्टोऽपि आकाशगुणत्वादिकार्यत्वेनानित्यत्व-मात्रसाधने ध्वनौ विवक्षितत्वे सति काणादाः केचिच्चोदयन्ति न्यायानभिज्ञाः—शास्त्रोपगमात् सर्वस्तदिष्टः साध्यः, तत्प्रधाने च हेतुप्रतिज्ञयोर्दोष इति, तच्चा-युज्यमानम्; शास्त्राश्रयेऽप्यस्त्यपगतमात्रस्यैव साध्यत्वात्। अन्यथा गन्धे भूगुण-ताविपर्ययसाधनादयमेव हेतुरस्यामेव प्रतिज्ञायां विरुद्धः प्राप्नोति।

तथेदमपरमदोषोद्भावनम्। यथाह भारद्वाजः—"नास्त्यात्मेति प्रतिज्ञापदयोः परस्परविरोधः" इति ( न्या० वा० ); यस्मादात्मेति वस्त्वभिधीयते, नास्तीति तस्य प्रतिषेधः। इदमप्ययुक्तम्; अनादिवासनोद्भूतात्मविकल्पपरिनिष्ठितप्रति-भासभेदस्य शब्दार्थस्य परेष्टानित्यचित्तत्वादिविशेषणात्मलक्षणभावोपादानस्य

---

१. सापि (?) भ्रमनिष्टोऽपि—रा०।

इत्यसिद्धोद्भावनम् ; सर्वाणि "साधर्म्यवैधर्म्यसमादीनि जात्युत्तराणि" (न्या० सू० ४. ४. १) इत्येवमादेर्दोषस्योद्भावनमदोषोद्भवनम् । तस्य वादिना दोषाभासत्वे प्रख्यापिते प्रतिवादी पराजितो वक्तव्यः; पूर्वपक्षे साधनस्य निर्दोषत्वात् ।

---

निराचिकीर्षतत्वात् । अत्रैव हि धर्मिणि व्यवस्थिताः सदसत्तत्त्वं चिन्तयन्ति सन्तः--किमयमात्मविकल्पप्रतिभास्यर्थो यथाभिमतभावोपादानः, न वेति । न तु पुनरत्रायमेव विकल्पप्रतिभास्येवार्थोऽपह्नूयते; तस्यैव बुद्धौ उपस्थापनाय शब्दप्रयोगात्, प्रत्यात्मवेद्यत्वाच्च । विकल्पप्रतिबिम्बव्यतिरिक्तं तु बाह्यं स्वलक्षण नैव शब्दार्थ इति न तस्य विधिः, नापि प्रतिषेधनम् ! अन्यथा—

परमा चैकतानत्वे शब्दानामनिबन्धना ।
न स्यात् प्रवृत्तिरर्थेषु दर्शनान्तरभेदिषु ॥
अतीताजातयोर्वापि न च स्यादनृतार्थता ।
वाचः कस्याश्चिदित्येषा बौद्धार्थविषया मता ॥

स चायं विकल्पो भावोपादानत्वेन निराचिकीर्षितो[1] देशकालप्रतिनियतिमनपेक्ष्य विकल्पप्रतिबिम्बविषयत्वादेव चात्मशब्दस्य न निर्विषयत्वमस्ति । ततश्च यदुक्तं यच्च यत्र प्रतिषिध्यते तत् तस्मादन्यत्रास्ति । यथा नास्ति नासमानाधिकरणो घटशब्दो न घटाभावं प्रतिपादयितुं शक्नोति । अपि तु देशकालविशेषात् प्रतिषेधागतिः ।

'नास्ति घटः' इति देशविशेषे प्रतिषेधः–गेहे नास्तीति । कालविशेषे वा प्रतिषेधः–इदानीं नास्ति, प्राग्नास्ति, ऊर्ध्वं नास्ति । सर्वस्यायं प्रतिषेध नाननुभूतघटसत्त्वस्य युक्तः ।

तथा 'नास्त्यात्मा' इति किमयं देशविशेषः प्रतिषिध्यते, उत[2] कालविशेष[2] इति ?

यदि तावद् देशविशेषप्रतिषेधः ? स आत्मनि न युक्तः; अदेशत्वादात्मनः । न च देशविशेषप्रतिषेधादात्मा प्रतिषिद्धो भवति न चायं भवतामभिप्रायः । शरीरमात्मा न भवतीति चेत् ? कस्य वा शरीरमात्मा यं प्रति प्रतिषेधः । शरीरे नास्त्यात्मेत्येवं प्रतिषेध इति चेत् ? कस्य शरीरे आत्मा, यं प्रति प्रतिषेधः । क्व तर्ह्यात्मा ? न क्वचिदात्मा । किमयं नास्त्येव ? न नास्ति, विशेषप्रतिषेधात् । केयं वाचोयुक्तिः—न शरीरे, नान्यत्र ? न च नास्ति—एषैवैषा वाचोयुक्तिः । यद् यथाभूतं तत् तथा निर्दिश्यत इति न चायमात्मा क्वचिदपीति तस्मात् तथैव निर्देशः ।

न च कालविशेषप्रतिषेधो युक्तः, आत्मनि त्रैकाल्यस्यानभिव्यक्तेरात्मप्रतिषेधं च कुर्वाणेनात्मशब्दस्य विषयो वक्तव्यः । न ह्येकं पदं निरर्थकं पश्यामः ।

---

१. निराचीकीर्षतो–रा० ।

२–२. उत्तरकालविशेष–रा० ।

दोषवति पुनः साधने न द्वयोरेकस्यापि जयपराजयौ; तत्त्वाप्रख्यापनात्, अदोषोद्भावनं च। अप्रतिपक्षायां च पक्षसिद्धौ कृतायां जेता भवति।

तस्माज्जिगीषता स्वपक्षश्च स्थापनीयः, परपक्षश्च निराकर्तव्यः।

निर्दोषे साधनाभिधानेऽपि वादिनः प्रतिवादिना दोषाभास उद्भाविते दूषणाभावत्वख्यापने एव जयपराजयौ, नान्यथा; भावतस्तत्त्वाभिधानेऽपि प्रतिपक्षनिराकरणेन तत्त्वस्य प्रख्यापनासामर्थ्यात्, न प्रतिवादिनोऽप्यत्र भावतो मिथ्याप्रतिपत्तेरिति।

इदं न्याय्यं निग्रहस्थानलक्षणमुक्तमस्माभिः॥



---

अथापि शरीरादिषु आत्मशब्दं प्रतिपद्येथाः? एवमप्य निवृत्तौ व्याघातः। कथमिति? 'नास्त्यात्मा' इत्यस्य वाक्यस्य तदानीमयमर्थो भवति—शरीरादयो न सन्तीति। एवमादि बह्वसम्बद्धं तदपहस्तितं भवति।

प्रतिज्ञार्थैकदेश इत्येतदप्यसत्, सामान्यविशेषस्याभावात्। यद्वा—न प्रयत्ननान्तरीयकत्वस्य प्रतिज्ञार्थैकदेशता; धर्मिणमुपलक्ष्य निवृत्तत्वात्। यस्य हि यदुपलक्षकं न तस्य तदेकदेशत्वम्, यथा–न काकस्य गृध्रैकदेशत्वमिति[1]।



---

१. गृद्धैकदेश०–रा०।

## २. न्यायमतखण्डनम्

अन्यत्तु न युक्तमिति नेष्यते। यत्रेदं यथोक्तं निग्रहस्थानलक्षणं नास्ति, तस्य निग्रहस्थानत्वमयुक्तमिति नोक्तमस्माभिः।

१. "प्रतिदृष्टान्तधर्माऽभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः निग्रहस्थानम्" (न्या० सू० ५. २. २) इत्यत्र भाष्यकारमतं दूषयित्वा वार्तिककारो यं स्थितपक्षमाह, तत्रैवं ब्रूमः—प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वदृष्टान्तेऽभ्यनुजानाति निगृहीतो वेदितव्यः।

---

अन्यत् तु न युक्तमिति। यदुक्तमक्षपादेन द्वाविंशतिविधं निग्रहस्थानम्—"प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि" (न्या० सू० ५.२.१) "तानीमानि द्वाविंशतिविधानि विभज्य वक्ष्यन्ते" (न्या० वा० ५.२.१)। "प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" (न्या० सू० ५.२.२)।

तत्र भाष्यकारमतं दूषयित्वा वार्त्तिककारो यं[1] स्थितपक्षमाह, तत्रैवं[2] ब्रूम इति। भाष्यकारमतस्य भारद्वाजेनैव दूषितत्वादस्माकमर्धं तावदवसितं भारस्येति भावः।

तत्रेदं भाष्यकारस्य मतम्—'साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। निदर्शनम्—'अनित्यः शब्दः, ऐन्द्रियकत्वाद्, घटवद्' इति कृते पर आह—'दृष्टमैन्द्रियकं सामान्यं नित्यम्, कस्मान्न तथा शब्दः' ? इति प्रत्यवस्थिते, इदमाह—'यद्यैन्द्रियकं सामान्यं कामं घटोऽपि नित्योऽस्तु' इति। स खल्वयं साधनस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन् निगमनानन्तरमेव पक्षं जहाति, पक्षं च जहतः प्रतिज्ञाहानिरित्युच्यते; प्रतिज्ञाश्रयत्वात् पक्षस्य" (न्या० भा० ५. २. २) इति।

वार्तिककारेण चैवमेतद् दूषितम्—"एतत्तु न बुध्यामहे कथमत्र प्रतिज्ञा हीयते इति हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते। तस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते। नित्यताप्रतिपत्तेश्चासिद्धतादृष्टान्तदोषो भवतीति सोऽयं दृष्टान्तदोषेण वा हेतुदोषेण वा निग्रहो न प्रतिज्ञाहानिरिति। दृष्टान्तं च जहत् प्रतिज्ञां जहातीति उपचारेण निग्रहस्थानम्। न च प्रधानासम्भवे उपचारो लभ्यत इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्यः" (न्या० वा० ५. २. २.) इति।

इदानीं वार्तिककारमतं स्वयमेवोपन्यस्यति—प्रतिदृष्टान्तस्येत्यादिना। कः पुनरत्र दृष्टान्तोऽभिमतः ? यदि तावद् "यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्तः" इति पारिभाषिकः, तदा भाष्यकारमतादविशेषः, तत्र च प्रतिविहितम्।

---

१. कारोऽयं—रा०। २. तमेवं—रा०।

तत्र दृष्टश्चासावन्ते च व्यवस्थित इति दृष्टान्तः। स्वदृष्टान्तः स्वपक्षः। प्रतिदृष्टान्तः प्रतिपक्षः। प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानन् पराजितः। यथा–'अनित्यः शब्द ऐन्द्रियकत्वाद्' इति ब्रुवन् प्रतिपक्षवादिनि सामान्येन प्रत्यवस्थिते आह–'यदि सामान्यमैन्द्रियकं नित्यं शब्दोऽप्येवमस्तु' इति एषा प्रतिज्ञाहानिः; प्राक्प्रतिज्ञातस्य शब्दानित्यत्वस्य त्यागादिति[1]।

अत्रोपगतप्रतिज्ञात्यागात् प्रतिज्ञाहानौ विशेषप्रतिनियमः किङ्कृतोऽनेन प्रकारेण प्रतिज्ञां त्यजतः प्रतिज्ञाहानिरिति।

सम्भवति[2] ह्यनेनाऽपि प्रकारेण हेतुदोषोद्भावनादिना प्रतिपक्षसाधनाभिधानेन च स्वपक्षपरित्यागः, परपक्षोपगमश्च।

इदमेव च प्रतिज्ञाहानेः प्रधानं निमित्तम्। एवं प्रतिपादितेन प्रतिज्ञा हातव्या, हानौ च पराजय इति।

इदं पुनरसम्बद्धमेव–'सामान्यं नित्यमैन्द्रियकमित्युक्ते शब्दोऽप्येवमस्तु' इति कः स्वस्थात्मा स्वयमैन्द्रियकत्वादनित्यः शब्दो घटवदिति ब्रुवन् सामान्येनोपदर्शनमात्रेण नित्यं शब्दं प्रतिपद्येत!

---

अथान्यः? स न गम्यते इत्याह—तत्र दृष्टश्चासौ पञ्चावयवेन साधनेन अन्ते च निगमनस्य व्यवस्थित इति दृष्टान्तः पक्षः। ततः स्वशब्देन सह विशेषणसमासः। तद्विपरीतः प्रतिदृष्टान्तः।

यथा—'अनित्यः शब्दः ऐन्द्रियकत्वाद्' इति ब्रुवन् वादी प्रतिपक्षवादिनि सामान्यादिकमैन्द्रियकं नित्यं च। ततो विपक्षेऽपि व्यभिचार्ययं हेतुरित्येवं सामान्येन प्रत्यवस्थिते सत्याह—यद्येवम्, शब्दोऽप्येवमस्त्वित्येषा प्रतिज्ञाहानिर्नाम निग्रहस्थानम्। कस्मात्? प्राक्प्रतिज्ञातस्य शब्दानित्यत्वस्य त्यागात्।

प्रतिज्ञाशब्देन धर्मिविशेषणभूतो धर्म उच्यते; समुदायावयवत्वात्। एतत् प्रतिक्षिपति—अत्र भारद्वाजमते उपगतायाः प्रतिज्ञायास्त्यागात् कारणात् येन प्रतिज्ञाहानिर्व्यवस्थापिता, तस्यां विशेषनियमः किंकृतः? कोऽसावनेन प्रकारेण स्वपक्षे प्रतिपक्षधर्मानुज्ञास्वरूपेण प्रतिज्ञाहानिरिति।

स्यान्मतम्—अयमेव प्रतिज्ञाहानिप्रकारः, नान्योऽस्ति, ततो नियमार्थमुच्यते इति? सम्भवति ह्यन्येनापीति।

अथ मतिः—प्रधानमेतन्निमित्तं तस्याः, ततोऽस्मिन् प्रदर्शितेऽन्योऽपि प्रकाशित एव भवतीति? तदत्राप्याह—इदमेव च हेतुदोषोद्भावनादिकं कारणम्। यस्मादेवं हेतुदोषोद्भावनादिना प्रतिपादितेन प्रतिवादिना प्रतिज्ञा हातव्या; सम्यग्दूषणाभिधानात्।

यच्चेदमभ्यधायि—सामान्यं नित्यमैन्द्रियकमित्युक्ते शब्दोऽप्येवमस्त्विति। अत्र प्रतिविधत्ते—इदं पुनरसम्बद्धमेव। यस्मात् कः स्वस्थात्मा सामान्योपदर्शनमात्रेण 'सामान्यमस्ति, न चैन्द्रियकं नित्यं च' इत्येतदविचार्य शब्दं नित्यं प्रतिपद्येत।

---

१. योगादिति–रा०। २. सम्भवन्ति–रा०।

सामान्यस्यापि नित्यस्यैन्द्रियकत्वेतस्यानित्ये घटे दर्शनात् संशयितः स्यात्। जात्या प्रतिपद्येतापीति चेत्; तथापि किं सामान्योपदर्शनेन !

एवमेव नित्यः शब्द इति वक्तव्यम् ; जडस्य प्रतिपत्तौ विचाराभावात्।

न च नित्यसामान्योपदर्शनेन तद्धर्मं शब्दे प्रतिपद्यमाने न प्रतिपक्षधर्मोऽभ्यनुज्ञातो भवति। 'अनित्यः शब्दः' इति च वदतो नित्यशब्द इत्याभासः प्रतिपक्षः स्यात्, न नित्यं सामान्यमिति।

तस्मादैन्द्रियकत्वस्य नित्यानित्यपक्षवृत्तेर्व्यभिचारादसाधनाङ्गस्योपादानान्निग्रहार्हः; न प्रतिपक्षधर्मानुज्ञयाऽनेन प्रकारेण प्रतिज्ञाहानेः ॥ १ ॥

२. ''प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्'' (न्या० ५.२.३) प्रतिज्ञातोऽर्थोऽनित्यः शब्द ऐन्द्रियकत्वादित्येव, तस्य हेतुव्यभिचारोपदर्शनेन प्रतिषेधे कृते धर्मभेदविकल्पात् सामान्यघटयोः सर्वगतत्वासर्वगतत्वधर्मविकल्पेन प्रतिज्ञान्तरं करोति—यथा घटोऽसर्वगतोऽनित्यः, एवं शब्दोऽप्यसर्वगतोऽनित्यः' इति, एतत्प्रतिज्ञान्तरं नाम निग्रहस्थानं साधनसामर्थ्येऽप्यपरिज्ञानात्। स हि पूर्वस्याः 'अनित्य शब्दः' इति प्रतिज्ञायाः साधनात्तदा याम् 'असर्वगतः शब्दः' इति प्रतिज्ञामाह, तद्दर्शनाय तदर्थनिर्देश इत्याह। तदर्थः पूर्वोक्तसाध्यसिद्ध्यर्थम्, उत्तरप्रतिज्ञानिर्देशस्तदर्थनिर्देशः। न च प्रतिज्ञा प्रतिज्ञान्तरसाधने समर्था, इति निग्रहस्थानम्।

---

एतावत्तु भवेत्—सामान्यस्यापि नित्यस्यैन्द्रियकत्वे तस्य ऐन्द्रियकत्वस्यानित्येऽपि घटे दर्शनात् संशयितः स्यात्।

अपि च प्रतिदृष्टान्तधर्मानुज्ञैवात्र न युक्ता इत्याह—न च तद्धर्मं तस्य सामान्यस्य धर्मं नित्यत्वम्; यतः 'अनित्यः शब्दः' इति वदतः[1] कस्यचित् 'नित्यः शब्दः' इत्ययमञ्जसेति[2]प्रत्यासन्नः प्रतिपक्षः स्यात्, न सामान्यम्; तस्य धर्म्यन्तरत्वात्। तथा हि—एकाधिकरणयोरेव नित्यत्वानित्यत्वयोर्विरोधः, न नानाधिकरणयोः।

आञ्जसग्रहणम् 'अयमपि विरुद्धधर्माधिकरणत्वात् प्रतिपक्षः न त्वतिनिकटः, यथा नित्यः शब्द इत्ययम्' इति परिदीपनार्थम्।

नानेन प्रकारेण प्रतिज्ञाहानेः। 'निग्रहार्हः' इति वर्तते। केनानेन ? इत्याह—प्रतिपक्षधर्मानुज्ञया। अथवा—अनेनेति असाधनाङ्गवचनेन। यथोक्तम्—'इदमेव प्रधानं निमित्तम्' इति ॥ १ ॥

२. प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरमिति। द्वितीयलक्षणसूत्रम्। 'निग्रहस्थानम्' इति सर्वत्रानुवर्तते। अस्यार्थः—प्रतिषेधो विपक्षे हेतुसद्भावकथनम्, तस्मिन् सति सपक्षविपक्षयोर्धर्मभेदेन करणभूतेन पूर्वप्रतिज्ञार्थप्रतिपत्त्यर्थं प्रतिज्ञान्तरं करोति—यथा घटोऽसर्वगतः, एवं शब्दोऽप्यसर्वगतः, घटवदेव अनित्यः शब्दः' इति। शेषः सुज्ञानः।

---

१. वदता–रा०।　　　२. ०मञ्जशो–पा०।

अत्रापि नैवं ब्रुवता प्रतिज्ञान्तरं पूर्वप्रतिज्ञासाधनायोक्तं भवति, किं तर्हि ? विशेषणम्। ऐन्द्रियकत्वस्य हेतोः सामान्ये वृत्त्या व्यभिचार उद्भाविते ऽसर्वगतत्वे सत्यैन्द्रियकत्वस्य हेतोर्विशेषणोपादाने व्यभिचारं परिहरति, न पुनः प्रतिज्ञान्तरमाह; असर्वगतत्वस्य शब्दे सिद्धत्वात्, प्रतिज्ञायाश्च साध्यनिर्देशलक्षणत्वात्।

यदप्युक्तम्—'पूर्वप्रतिज्ञासाधनायोत्तरां प्रतिज्ञामाह' इति, तदप्ययुक्तम्; न हि प्रतिज्ञा प्रतिज्ञासाधनायोच्यमाना प्रतिज्ञान्तरं भवति, किं तर्हि ? हेत्वादेरन्यतमः, साध्यसाधनायोपादानात्। साधननिर्देशः स स्यात्, न साध्यनिर्देशः।

उदाहरणसाधर्म्यादेश्च हेतुलक्षणस्यासर्वगतत्वे भावात्, प्रतिज्ञालक्षणस्य चाऽभावात्। हेतुत्वमसर्वगतत्वे प्रयुक्तं न प्रतिज्ञान्तरम्।

अत्यन्तासम्बद्धं चेदम्–प्रतिज्ञां प्रतिज्ञासाधनायाहेति। यो हि प्राक् प्रतिज्ञामुक्त्वा हेतूदाहरणादिकं वक्तुं जानाति, स किञ्चिदनुक्रमं साधनस्य जानात्येव हि। जानन् कथमविकलान्तःकरणः प्रतिज्ञामेव प्रतिज्ञासाधनायोपाददीत !

उपाददता चाऽनेन प्रतिज्ञामात्रेण सिद्धिरिष्टा भवति। ततश्च न प्रागपि हेतुं ब्रूयात्।

एवम्प्रकाराणामसम्बद्धानां परिसंख्यातुमशक्यत्वात् लक्षणनियमोऽप्यसम्बद्ध एव—प्रतिज्ञान्तराऽभिधाने प्रतिज्ञान्तरं नाम निग्रहस्थानमिति। एवम्प्रकाराणामेकमेव लक्षणं वाच्यं स्यात्।

न चैवंविधः कश्चिद् विवादेषु दृष्टपूर्वो व्यवहारो येन तदर्थं यत्नः क्रियते। न च बालप्रलापानुद्दिश्य शास्त्रं प्रवर्तते, प्रवृत्तौ च का निष्ठा ! तेषामनिष्ठानात्।

---

इदं निराकरोति—अत्रापीत्यादिना। अविद्धकर्णस्तु भाष्यटीकायामिदमाशङ्क्य परिजिहीर्षति—"ननु चासर्वगतत्वे सतीति हेतुविशेषणमुक्तम्, सविशेषणश्च हेतुर्विपक्षे नास्तीति न प्रतिज्ञान्तरं निग्रहस्थानम्। नहि तदेवमसर्वगतः शब्द इति प्रतिज्ञान्तरोपादानात्। हेतुविशेषणोपादाने हेत्वन्तरं निग्रहस्थानम्" इति। एतच्चातिस्थूलम्; स ह्येवं पक्षधर्ममेव विदग्धबुद्धिर्विशिनष्टि, न तु प्रतिज्ञान्तरमुपादत्ते; सिद्धत्वात्। यदपि 'हेतुविशेषणोपादाने हेत्वन्तरं निग्रहस्थानम्' इत्यभिधायि, तदप्यतिपेलवम्; यस्मादेवं तदेव नामास्तु प्रतिज्ञान्तरत्वसम्बद्धम्।

उदाहरणसाधर्म्यादेश्चेति। "उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः" (न्या० सू० १. १. ३४) इत्येतस्य। प्रतिज्ञालक्षणस्य 'साध्यनिर्देशः प्रतिज्ञा' (न्या० सू० १. १. ३४) इत्येतस्याभावात्।

उपाददता चानेन प्रतिज्ञां प्रतिज्ञासाधनाय प्रतिज्ञामात्रेण युक्तिरहितेन सिद्धिरिष्टा भवति। ततश्च प्रागपि प्रथमप्रतिज्ञानन्तरमपि हेतुमैन्द्रियकत्वं न ब्रूयात्।

तस्माद् एवम्प्रकाराणां बालप्रलापानां 'प्रतिज्ञासाधनाय प्रतिज्ञान्तरमुच्यते' इत्येवंरूपाणां परिसङ्ख्यातुमशक्यत्वात्। लक्षणनियमोऽप्यसम्बद्ध एव। कोऽसौ ? प्रतिज्ञान्तराभिधाने प्रतिज्ञान्तरं नाम निग्रहस्थानमिति।

दृश्यते च विदुषामपि नातिनिरूपणादसिद्धाभिधानमिति। व्यवहार-दर्शनात् तादृशं पराजयाधिकरणं व्यवस्थाप्यते। तस्मादिहापि यदि निवृताकांक्षे वादिनि परो नैकान्तिकतामुद्भावयेद्, असाधनाङ्गस्यानैकान्तिकस्याभिधानान्निग्रहस्थानं वादिनः।

एवं यदि प्रतिवादी सत्सामान्यमैन्द्रियकं नित्यं च प्रमाणेन प्रतिपादयितुं शक्नुयात्। अनुद्दिश्याप्रमाणकं शास्त्रोपगमं प्रमाणेनैषामर्थानामप्रतिपादनेन भूतदोषोद्भावनमेतत् न कश्चित् पराजयः, अभ्युपगममात्रेण वस्तुसिद्धेरभावात्। प्रतिवादिना दोषस्याप्रतिपादितत्वात्।

प्रमाणैरसमर्थितसाधनभिधानात् तु जेतापि न भवतीति।

अनित्याकांक्षे पुनर्वादिनि न कश्चिद् दोषः, विशेषणाभिधानेन हेतोः समर्थनोपक्रमात्॥ २॥

३. "प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः (न्या० सू० ५. २. ४)। यथा—'गुणव्यतिरिक्तं द्रव्यम्' इति प्रतिज्ञा, 'रूपादिभ्योऽर्थान्तरस्यानुपलब्धेः' इति हेतुः, सोऽयं प्रतिज्ञाहेत्वोर्विरोधः।" एतेनैव प्रतिज्ञाविरोधोऽप्युक्तः। यत्र प्रतिज्ञा वचनेन विरुध्यते। यथा—श्रमणा गर्भिणी, नास्त्यात्मेति वा।

हेतुविरोधोऽपि, यत्र प्रतिज्ञया हेतुर्विरुध्यते। यथा—'सर्वं पृथक्, समूहे भावशब्दप्रयोगाद्' इति।

---

ननु नायमीदृशो लक्षणनियमः; 'प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः' इत्येवं कृतत्वात्? नास्ति दोषः; तस्यैव पर्यायान्तरेण कथनात्।

अथोच्यते—यथा विद्वांसो न प्रतिज्ञां प्रतिज्ञासाधनायाहुः, तथा साध्यसिद्ध्यर्थमसिद्धविरुद्धानैकान्तिकादीनपि प्रयुञ्जते, ततश्च 'असाधनाङ्गवचनम्' इत्यादि त्वयापि न वाच्यं भवेद्? अत आह—विदुषामपीति।

अनुद्दिश्याप्रमाणकं शास्त्रोपगममिति। मामकीने तन्त्रे सामान्यं यथाभूतं सिद्धमित्येव न प्रदर्श्यत इत्यर्थः। तथा हि—व्युत्थितचेतसो न परसमयव्यवस्थोपरोधमाद्रियन्ते तत्त्वदर्शनाध्यवसायशूराः सूरयः; अप्रमाणकं वचनं प्रमाणोपेतस्याभ्युपगमस्य विद्वद्भिरलंघनीयत्वात्।

एतच्च स्यात्—प्रमाणैरसमर्थितसाधनाभिधानाद् वाद्यपि जेता न भवति; प्रतिपक्षस्य निराकरणात्॥ २॥

३. प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो नाम निग्रहस्थानम्। "गुणव्यतिरिक्तं द्रव्यम्' इति प्रतिज्ञा, 'रूपादिभ्योऽर्थान्तरस्यानुपलब्धेः' इति हेतुः, सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। यदि गुणव्यतिरिक्तं द्रव्यम्, रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते" (न्या० भा० ५. २. ४.)—एतेनैव प्रतिज्ञाहेत्वोर्विरोधेन प्रतिज्ञाविरोधः स्ववचनेनैव व्याख्यातः। सूत्रकारेणास्योपलक्षणार्थमुक्तमेतत्। श्रमणा प्रतिविरतपुरुषसम्भोगा, गर्भश्च नान्तरेण पुरुषसम्भोगमिति स्ववचनव्याहतिः।

हेतुविरोधः। एतेन चोक्त इति वर्तते। सर्वं पृथक् नाना, नास्त्येको भाव इति यावत्। समूहे भावशब्दप्रयोगात्। समूहवाचकघटादिभावशब्दवाच्यत्वादित्यर्थः।

एतेन प्रतिज्ञया दृष्टान्तविरोधो व्याख्यातः ।

हेतोश्च दृष्टान्तादिभिर्विरोधः प्रमाणविरोधश्च प्रतिज्ञाहेतोर्वक्तव्यः । यः परपक्षं

---

यस्मात् समूह इति ब्रुवाणेन एकोऽभ्युपगतो भवति । एकसमुच्चयो हि समूह इति । तथा हि गवादिद्रव्याणि समुदितानि प्रतिपद्यमानेन समूहोऽभ्युपेयः । स चायं 'समूहयन्ति द्रव्याण्येतानि गवादिभावेन व्यवस्थितानि' इति न व्यवतिष्ठते । भेदोऽप्यल्पतरतमत्वेन यत् तत्र परमाल्पं यदभेद्यं ततो निवर्तते, यतश्चायं भेदो निर्वतते तदेकम् ।

अथ मन्यसे—यं तमभेद्यं परमाणुं मन्यसे, सोऽपि रूपादीनां समुदाय इति ? एतस्मिन् वै दर्शने ये रूपादयः समुदितास्ते परमाणुरिति, परमाणौ रूपं स कस्य समुदाय इति वक्तव्यम् ! एवं शेषेषु गुणेषु । अथ न तं समुदायं प्रतिपद्यसे ? 'अष्टौ द्रव्याणि समुदितानि परमाणुः' इति शास्त्रं व्याहतम्—''कामेऽष्टद्रव्यकोऽशब्दः परमाणुः'' ( अभि० को० २.२२ ) इति । तस्मादनुपपत्तावनेकोपपत्तिरित्यतिमौढ्यम् । असिद्धश्चायं हेतुः; यस्मादनेकविधलक्षणैर्गन्धादिभिर्गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भाव उपपद्यते । अतः शब्दादेकार्थाधिगतौ शेषीऽनुषक्तोऽर्थो गम्यत इति ।

ननु चायमपि प्रतिज्ञाहेत्वोर्विरोध इति प्रथमादस्याविशेषः ? मैवम्; उभयाश्रितत्वाद् विशेषस्य । 'विवक्षातोऽन्यतरनिर्देशः'' इति भारद्वाजेनैवोक्तत्वात् ।

प्रतिज्ञया[1] दृष्टान्तविरोधो यथा—'व्यक्तमेकप्रकृतिकम्; परिमितत्वात्, शरावादिवद्'—इति शरावादिदृष्टान्त एकप्रकृतिकत्वं बाधते; दृष्टान्तभूतायाः प्रकृतेः प्रकृत्यन्तरत्वात् । एकप्रकृतत्वे वा शरावादिर्दृष्टान्तोऽयुक्तः ।

हेतोश्च दृष्टान्तादिभिर्विरोधो यथा—'गुणव्यतिरिक्तं द्रव्यम्, अर्थान्तरत्वेनानुपलभ्यमानत्वात्, घटादिवद्' इति घटादीनां भेदेन ग्रहणाद्धेतुं बाधते दृष्टान्तः ।

आदि-ग्रहणेन हेतोरुपनय-निगमनाभ्यां विरोधो गृह्यते । अनयोरुदाहरणम्—'अनित्यः शब्दः; कृतकत्वात् । यत् कृतकं तदनित्यम्, यथा आकाशम्, तथा च कृतकः शब्दः' इति उपनयेन हेतोर्विरोधः । तथा हि—उदाहरणापेक्षः 'तथा' इत्युपसंहारः 'न तथा' इति च साध्यस्योपनयः ( न्या० सू० १. १. ३८. ) कृतः । इह च विपरीतमुदाहरणमित्येतदपेक्ष्योपनयेन हेतोर्विरोधः । ईदृशे च प्रयोगे 'तस्मादनित्यः' इत्युपसंहारे निगमनेन ।

प्रमाणविरोधश्च प्रतिज्ञाहेतोर्यथा—अनुष्णोऽग्निः. द्रव्यत्वाज्जलवत्'' इति प्रत्यक्षं बाधते । परपक्ष इत्यादि । एतच्च यच्च स्वपक्षानपेक्षं चेत्यादि । एतदप्युभयं प्रतिज्ञाहेतोर्विरोध इत्यनेनैव संगृहीतत्वात् पृथग् निग्रहस्थानत्वेन नैव वक्तव्यमिति दर्शयति । परपक्ष इत्यत्र परेण प्रमाणे कृते कणादोऽनैकान्तिकमुद्भावयति । स्वपक्षानपेक्षं चेत्यत्र तु वैशेषिक एव प्रमाणं करोति परस्तं व्यभिचारयतीति भेदः ।

---

१. प्रतिज्ञाया–रा० ।

स्वसिद्धेन गोत्वादिना व्यभिचारयति, तद् विरुद्धमुत्तरं वेदितव्यम्। स्वपक्षानपेक्षं च।

यं च स्वपक्षानपेक्षं हेतुं प्रयुङ्क्ते—'अनित्यः शब्दः ऐन्द्रियकत्वाद्' इति, तस्य स्वसिद्धस्य गोत्वादेरनित्यविरोधाद् विरुद्धः। इति परपक्षेष्वसिद्धेन गोत्वादिनाऽनैकान्तिकचोदनाविरुद्धः।

उभयपक्षसम्प्रतिपन्नस्त्वनैकान्तिकः। यदुभयपक्षं प्रतिपन्नं वस्तु तेनानैकान्तिकचोदना इति।

अत्रापि प्रतिज्ञार्थः, साधनवाक्ये प्रयोगप्रतिषेधात्। तदाश्रयस्तत्कृतो वा हेतुदृष्टान्तयोर्न विरोध इति न प्रतिज्ञाविरोधो नाम किञ्चिन्निग्रहस्थानम्।

स्यादेतत्। असत्यपि प्रतिज्ञाप्रयोगे गम्यमानोऽपि प्रतिज्ञाहेत्वोर्विरोधो भवति। यथा—रूपादिभ्योऽर्थान्तरस्यानुपलब्धिस्तद्गुणव्यतिरिक्तम्, नोपलभ्यते च रूपादिभ्योऽर्थान्तरं द्रव्यमित्युक्तेऽपि गम्यत एव साध्यसाधनयोर्विरोधः, कथं ततोऽर्थान्तरस्यानुपलब्धिः, तद्व्यतिरेकश्चेति? सत्यं स्यादयं विरोधः यदि हेतुः साध्यधर्मविपर्ययं साधयेत्।

यदि ह्यनुपलब्धिलक्षणव्याप्तत्वेनोपगतस्य सतो द्रव्यरूपादिप्रतिभासविवेकेन स्वप्रतिभासानुपलब्धिस्तस्य तद्व्यतिरेके\ नास्तीतीष्टव्यतिरेकविपर्ययसाधनाद् विरुद्धो हेतुरस्माभिरुक्त एवेति। भवत्यवेदं निग्रहाधिकरणम्, यद्येवंविधः प्रतिज्ञाहेतोर्विरोध इष्टः। अथ पुनरस्योपलब्धिलक्षणप्राप्तिर्लुप्यते, तदा न कश्चित् प्रतिज्ञाहेतोर्विरोधः; व्यतिरिक्तानामपि भावानां कुतश्चिद् विप्रकर्षाणां तद्व्यतिरेकेणानुपलब्धावपि व्यतिरेकस्य भावात्।

यदुक्तम्—'स्ववचनप्रतिज्ञायाः स्ववचनविरोधे प्रतिज्ञाविरोधः' इति, तत्रेदमेव निग्रहाधिकरणमसाधनाङ्गभूतायाः प्रतिज्ञायाः साधनवाक्ये प्रयोगः, न विरोधः; तदधिकरणत्वात्।

यदि प्रतिज्ञानपेक्षो विरोधः स्यात्, स्यात् पराजयाश्रयः। प्रतिज्ञाधिकरणत्वे पुनस्तत्प्रयोगकृत एव पराजयः; अस्य प्रस्तावोपसंहारावसानत्वात्[1] व्यर्थं

---

यदि तर्हि गोत्वादिना व्यभिचारे कृते विरुद्धमुत्तरम्, तथा सत्यनैकान्तिको निर्विषयः? इत्याह—उभयेत्यादि। वादिप्रतिवादिप्रसिद्ध उभयपक्षसम्प्रतिपन्नः सोऽनैकान्तिकः, तद्विषयत्वादुपचारेण। तथा च वृत्तिः—तेनानैकान्तिकचोदनेति।

अत्रापीत्यादिनैतदपि प्रतिक्षिपति। तदाश्रयः। सा प्रतिज्ञा आश्रयो यस्य विरोधस्य स तथा। तत्कृतो वेति। तया प्रतिज्ञाया कृतः। परिशिष्टमतिस्फुटम्।

व्यतिरिक्तानामपि कुतश्चित् पर्वतादेः सकाशाद् विप्रकर्षिणां पिशाचादीनाम्

तत्रेदमेव निग्रहाधिकरणम्, यदुत प्रतिज्ञायाः प्रयोगः। न विरोधः प्रतिज्ञायाः। निग्रहाधिकरणमिति वर्तते। किमिति? तदधिकरणत्वात्। प्रतिज्ञाश्रयत्वादित्यर्थः।

यदि पुनस्तदधिकरणो न भवेत्, भवेन्निग्रहाधिकरणमित्याह—यदीत्यादि। प्रस्तावस्य वादस्य उपसंहारः परिसमाप्तिः, तस्य अवसानं निमित्तं प्रतिज्ञाप्रयोगः;

---

१. ०वज्ञानत्वात्—रा०।

विरोधोद्भावनम्; पराजितपराजयाभावाद् भस्मीकृतानलवत्।

ये तु केचिद्विचारप्रसङ्गेषु एकत्र साध्ये बहवो हेतव उच्यन्ते, तेषां विकल्पेन तत्साध्यसाधनाय वृत्तेः सामर्थ्यम्, अन्यथा द्वितीयस्य वैयर्थ्यात्।

यदि हि तत्राप्येकप्रयोगमन्तरेणापरस्य प्रयोगो न सम्भवेत्, न तदा द्वितीयस्य कश्चित् साधनार्थः; प्रतीतप्रतिपादनाभावात्।

तस्मान्न प्रतिज्ञायाः स्ववचनविरोधो नाम किञ्चिन्निग्रहस्थानम्।

न च 'नास्त्यात्मा' इत्यत्र कश्चित् प्रतिज्ञाविरोधः; नास्त्यात्मशब्दार्थस्य भावोपादानत्वनिषेधात्। शब्दार्थनिषेधे हि विरोधः स्यात्। न च स्वलक्षणं शब्दार्थ इति।

यः पुनः प्रतिज्ञाबाधनाद्धेतुविरोध उक्तः, यथा-'सर्वं पृथक् समूहे भावशब्दप्रयोगात्' इति। नात्र प्रतिज्ञाप्रयोगः, नापि हेतोः, येन विरोधः स्यात्, किं तर्हि? प्रतिपादितार्थोपदर्शनेनोपसंहारवचनमेतस्मात्।

---

तन्मात्रेणैवासाधनाङ्गाभिधानात् वादिनो भङ्गात्। क्वचित् प्रस्तावोपसंहारावसरत्वादिति पठ्यते। तत्रापि वादपरिसमाप्तेः प्रतिज्ञापदप्रयोगे सत्यवसरोऽधिकार इत्यर्थः।

अथ बुद्धिः—यथा भवद्भिः कस्यचिदर्थस्य क्षणिकत्वादिकमेकमेव साध्यं बहुभिः सत्त्वोत्पत्तिमत्त्वप्रत्ययभेदभेदित्वादिभिर्हेतुभिः प्रतिपाद्यते, तथैकमपि दूष्यं परोपन्यस्तं साधनवाक्यं प्रतिज्ञोपादानद्वारेण तद्विरोधद्वारेणान्यथा वा दूष्यते। तथा च नायं दोषः, पराजितपराजयाभावादिति? तदत्राह—ये तु हेतव उच्यन्ते तेषां विकल्पेन। पूर्वहेत्वनपेक्षया। एवं वैतत्। अथवा अन्यथा साधयामीत्येतत् साध्यसाधनाय वृत्तेः कारणात् सामर्थ्यमस्ति। किं पुनः कारणं न समुच्चयेनैव प्रयोगः? इत्याह—अन्यथा। यदि समुच्चयेनैवापरहेत्वन्तरप्रयोगोऽभीष्टः, तदा द्वितीयस्य वैयर्थ्यात्। विकल्पेन सामान्यमिति वर्तते।

वैयर्थ्यमेव प्रतिपादयति—यदि हि तत्राप्येकप्रयोगमन्तरेणापरस्य प्रयोगो न सम्भवेत्; उभयप्रतिषेधेन विध्यवसायात्। यद्येकस्य प्रयोगे अपरस्य समुच्चयेन प्रयोगः सम्भवेदित्यर्थः, तदा न द्वितीयस्य कश्चित् साधनार्थः; प्रतीतप्रतिपादनाभावात्। प्रथमहेतुप्रतिपादित एवार्थे व्यापृतत्वान्निष्पादितक्रिये दारुणि प्रवृत्तस्यैव दात्रादेर्न कश्चित् साधकतमत्वार्थ इति यावत्।

ननु च साधनवद् विकल्पेनैव दूषणमपि भविष्यति? एवं मन्यते—नैव परोऽभ्युपगन्तुमर्हति। एवं हि तेन स्वयमेव प्रतिज्ञाया असाधनाङ्गत्वं भवेत्। ततश्चैतद् व्याहन्यते—"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" (न्या० सू० १.१. ३२) इति।

अन्यैरेव हेतुभिः शब्दस्यैकविशेषानभिधानम्, अनेकार्थसामान्याभिधानं च प्रतिपाद्य सर्वस्य शब्दार्थस्य नानार्थरूपतयैकवस्तुविशेषस्वभावताऽभावमुपदर्शयन् शब्दार्थमधिकृत्य सर्वं पृथगिति ब्रूयात् ।

---

अन्यैरेव हेतुभिरिति । अवयविद्रव्यनिषेधकैः पूर्वोक्तप्रकारैः कुम्भादिशब्दस्यैकघटाद्यवयविद्रव्यलक्षणविशेषानभिधानम्, अनेकस्य चार्थस्य रूपादेर्यत् सामान्यमेकार्थक्रियासामर्थ्यात्मकं तदभिधानं च प्रतिपाद्य सर्वस्य शब्दार्थस्य रूपादेरेकार्थक्रियासमर्थस्य नानार्थरूपतया करणभूतया, एकश्चासौ वस्तुविशेषस्वभावश्चावयविद्रव्यरूपस्तस्य भावः एकवस्तुविशेषस्वभावता, तस्या अभावमुपदर्शयन् 'नास्त्येको भावः' इत्यभिदध्याद् बौद्धः, न तु रूपाणीन्द्रियार्थान् प्रतिक्षिपन् ।

स्यान्मतिः—रूपाद्यव्यतिरेकात् सामर्थ्यमप्यनेकम्, तत् कथं तदेकमित्युच्यते ? कथं वा तस्य शब्दार्थत्वम् ? न हि 'स्वलक्षणं शब्दार्थः' इत्युच्यते, नानाभूतमपि सामर्थ्यभिन्नवत् स्वव्यतिरेकादेकार्थक्रियाकारितयैकप्रत्यवमर्शहेतुत्वात् परम्परया एकमित्याख्यायते । यथोक्तम्—

"एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधा हेतुभावेन व्यक्तीनामप्यभिन्नता" ।। इति ।

पुरुषाध्यवसायानिरोधेन शब्दार्थत्वं तस्य व्यवस्थाप्यते । पुरुषो ह्यनादिमिथ्याभ्यासवासनापरिपाकप्रभावादन्तर्मात्राविपरिवर्तिनमाकारं बाह्येऽन्त्रेवारोप्य दृश्य-विकल्पयोरेकत्वं प्रतिपन्नः । परमार्थतस्तु निर्विषया एव ध्वनयः; व्यक्तीनां विज्ञानाकारस्य चार्थान्तरानुगमाभावेनाभिलापागोचरत्वात्, यथाध्यवसायं चाकारस्य सत्त्वात् । यथोक्तं सूत्रे—

"येन येन हि नाम्ना वै यो यो धर्मोऽभिलप्यते ।
न स संविदयते तत्र धर्माणां सा हि धर्मता" ।। इति ।

तदयमत्र समुदायार्थः[1]—रूपादीनां घटस्य च यथाक्रममनेकत्वमेकत्वं च; बहुवचनैकवचनाभिधेयत्वात्[2]। तद्यथा—नक्षत्राणि शशीत्येवमादिभिरनुमानाभासैः परेण घटादिशब्दस्य विषयो योऽयमेकार्थोऽवयव्यभिधानोऽभ्युपगतः, स एव प्रतिक्षिप्यते, न तु रूपरसादयः परमाणुस्वभावाः । तथा हि—तेषां प्रत्येकमेकैकात्मकत्वमिष्टमेव । केवलास्तदातिसफलबीजवन्न समुदायमासादयन्तीति नियतसहोत्पादत्वपरिदीपनायोक्तम्—

"कामेऽष्टद्रव्यकोऽशब्दः परमाणुरतीन्द्रियः ।
कायेन्द्रियी नवद्रव्यो दशद्रव्योऽपरेन्द्रियः" ।। (अभि० को० २. २२) इति ।

यथा तु परमाणूनामैन्द्रियकत्वम् अनित्यत्वं च, तद्विस्तरेणोक्तमन्यत्रास्माभिः ।

यत् पुनरेतद्—'बहुवचनैकवचनाभिधेयत्वाद्' इति, तद् व्यभिचारि । तथा हि—यदैकस्यामपि योषिति, जले, सिकताद्रव्ये वा दाराः, आपः, सिकता इति

१. समदायार्थो—रा० । २. वचनाभिधयत्वात्—रा० ।

**एतेन तद्विरोधः प्रत्युक्तः ।**

**दृष्टान्तोपदर्शनं[1] चैतद्–'अनित्यः शब्दः कृतकानित्यत्वाद्' ।**

**यथा क्वचिद्[2] अर्थे विप्रतिपत्तौ प्रसिद्धमनेकार्थसामान्ये शब्दप्रयोगमुपदर्श्य प्रतिपादितविप्रतिपत्तिस्थानः सामान्येनोपसंहरति—सर्वं पृथगिति ।**

---

व्यवहारः, तदा किं तत्र बाहुल्यं येनैवं भवति ? शक्तिभेद इति चेत् ? सर्वत्रोच्छिन्नमिदानीमेकवचनम्; एकशक्तेरभावात् । वस्त्वभेदादन्यत्रैकवचनमिति चेद् ? इहाप्यस्तु ! तदयं निर्वस्तुको नियमः क्रियमाणः स्वातन्त्र्यमिच्छायाः शब्दप्रयोगे ख्यापयति ।

एतेन तदपि प्रत्युक्तम्, यदाह कुमारिलः—

"तत्र व्यक्तौ च जातौ च दारादिश्चेत् प्रयुज्यते ।
व्यक्तेरवयवानां वा संख्यामादाय वर्तते ॥" (श्लो० वा० व०वा० ९१) इति ।

'षण्णगरी' इति च कथं बहुष्वेकवचनम्, न हि नगराण्येव किञ्चित्, कुतस्तेषां समाहारः ! प्रासादपुरुषादीनां विजातीयानामनारम्भात् कुतस्तत्समुदायो द्रव्यम् ! असंयोगाच्च नापि संयोगः; प्रासादादीनां परस्परसंयोगात्, प्रासादस्य स्वयं संयोगात्मकस्य निर्गुणतया परेणासंयोगाच्च । तत एव संख्याभावः ।

तत्संयोगपुरुषविशिष्टा सत्ता नगरमिति चेत् ? किमस्या निरतिशयाया विशेषणम्; सत्तायाश्चैकत्वात्, नगरबहुत्वेऽपि 'नगराणि' इति बहुवचनं स्यात् । द्वयस्य परस्परसहिततेति चेत् ? अनुपकारकयोः कः सहायीभावः ! पुरुषसंयोगसत्तानां च बहुत्वान्नगरमिति कथमेकवचनम् ! तथाभूतानां क्वचिदभिन्ना शक्तिः सा निमित्तमिति चेत् ? न; शक्तेर्वस्तुरूपाव्यतिरेकात् । व्यतिरेके चानुपकार्यस्य पारतन्त्र्यायोगात् । उपकारे वा शक्त्युपकारिण्या अपि शक्तेर्व्यतिरेक इत्यवस्थितेरप्रतिपत्तिः । तदव्यतिरेके अन्यासामपि प्रसङ्ग इति यत्किञ्चिदेतत् ।

प्रकारान्तरमप्याह—दृष्टान्तोपदर्शनं[3] चैतदिति । किं पुनः पञ्चम्यन्तनिर्देशेऽपि दृष्टान्तो भवति ? इत्याह—कृतकानित्यत्वादिति । यथा येनोक्तम्—

"हेतोः साध्यान्वयो यत्राभावेऽभावश्च कथ्यते ।
पञ्चम्या तत्र दृष्टान्तो हेतुस्तूपनयात्मकः" ॥ इति ।

क्वचिदर्थे घटादिद्रव्ये विप्रतिपत्तौ सत्यां रूपादिव्यतिरिक्तम् 'अस्ति' 'नास्ति' इत्यनेकस्यार्थस्य परस्परव्यावृत्तस्य नगरादेः सामान्यं षण्णगरीत्यादि यद् बुद्ध्यारोपितं तत्र प्रसिद्धं शब्दप्रयोगमादर्श्य परस्परव्यावृत्तानामेकार्थाननुगतान् बुद्धिसमाकृते समूहे भावशब्दप्रयोगादित्यनेन पश्चादुपनयेन पक्षधर्मोपसंहारमागूर्य प्रतिपादितविप्रतिपत्तिस्थानः सन् सामान्येनोपसंहरति–सर्वं पृथगिति । प्रतिपादि[illegible] विप्रतिपत्तिस्थानमनेनेति विग्रहः ।

एतदुक्तं भवति—कपालादिव्यतिरेकेणावयवी अस्ति नास्तीति विवादे सत[illegible] त्रिलक्षणहेतुसूचनपरो दृष्टान्त उपन्यस्तः, न हेतुः । प्रयोगस्त्वत्रैवं क्रियते-

---

१. ०पदूषणम्–रा० । २. कश्चिद्–रा० । ३. दृष्टोपदर्शनश्चै०–रा० ।

यदि दृष्टान्तप्रयोगः; किमृजुनैव तत्प्रयोगक्रमेण न प्रयुक्तः, विप्रतिपत्तिविषयश्च किं न दर्शित इति चेत् ?

न; समासनिर्देशात् । एवमपि प्रयोगदर्शनाद्, असाधनवाक्यत्वाच्च ।

अत एव न प्रतिज्ञायां हेतोर्बाधनम् । न चैकमेव किञ्चिन्नास्तीति ब्रुवाणः कश्चित् तत्समुच्चयरूपमेकं च समूहमिच्छति, येन विरोधः स्यात् ।

योऽपि 'युगपत् पङ्क्ते न योगात्' इत्यादिना परमाणोर्भेदमाह; न तस्याप्येकः

---

"ये परस्परव्यावृत्ताः, न ते व्यतिरिक्तावयविद्रव्यानुगतमूर्तयः, तद्यथा—षण्ण-गर्यादयः । तथा च परस्परव्यावृत्ताः कपालादयः" इति ।

ननु च यद्ययं दृष्टान्तप्रयोगः, तत् किमृजुनैव तत्प्रयोगक्रमेण न प्रयुक्तः, यथा—'यत् सत् तत् क्षणिकम्, यथा घटः' इत्यादौ; किं पञ्चम्यन्तनिर्देशेन ? विप्रतिपत्तिविषयश्च किं न दर्शितः कपालादेरवयविप्रतिषेधविशिष्टः, यथान्यत्र 'अनित्यः शब्दः, कृतकानित्यत्वाद्' इति ? चकारात् स्पष्टश्च कस्मात् हेतुः साध्यानुगतो न प्रदर्शितः । तथा हि—अत्र परस्परव्यावृत्तानामेकार्थाननुगतानां बुद्धया समाहिते समूहभावशब्दप्रयोगादित्यभ्यूह्य वाक्यपरिसमाप्तिः क्रियते ?

अत्रोत्तरम्—न; समासनिर्देशात् । संक्षेपाभिधानादित्यर्थः । एवमपि प्रयोगदर्शनात् । कृतकानित्यत्वादित्यादौ । असाधनवाक्यत्वाच्च[1] । साधनप्रयोगोत्प्रेक्षासूचकं वाक्यमेतत्, न त्विदं साधनवाक्यमित्यर्थः ।

अत एवेति । दृष्टान्तवाक्यत्वादेवेति । यश्चायं हेतुस्तन्तुपटरूपे भिन्नकारणे विशेषवत्त्वाद्, रूपस्पर्शवदिति । अयमपि तन्तुपटयोर्भेदासिद्धौ तदाश्रितस्यापि गुणस्य विभागासिद्धेरसिद्धाश्रय इति नालमिष्टसिद्धये । तथा हि—सूक्ष्मस्थूलद्रव्य-समवायो विशेषवत्त्वम्, भिन्नकालोत्पन्नद्रव्यसमवायो[2] वेति व्याचक्षते परे ।

ननु विचित्राभिसन्धयो योक्तारः, तत्र ये केचिद्धेत्वभिप्रायेणैव वाचः प्रयुञ्जते, तान् प्रत्यस्माभिः प्रतिज्ञया हेतोर्बाधनमुच्यते, न तु ये दृष्टान्ताभिमानिन इति ? अत्राह—न चेत्यादि । भगवत्तथागतमतावलम्बिनामुपर्ययमुपक्षिप्तो विरोधो भवद्भिराक्षपादैः, न च नः स्वप्नेऽप्येतादृशोऽस्तीति[3] पिण्डार्थः ।

स्यान्मतम्, अस्त्येव योगाचारो यः—

पङ्क्तेन युगपद् योगात् परमाणोः पतङ्गताम् ।
षण्णां समानदेशत्वात् पिण्डः स्यादणुमात्रकः ॥

इत्यादिना परमाणोरेकत्वमभ्युपगच्छन्नपि पिण्डं समूहापरपर्यायमिच्छतीत्येत-दुच्यते—योऽपीत्यादि । किं तर्ह्यभाव एवाणोरनेन प्रकारेण साधयितुमिष्टः । कथम् ? एकानेकप्रतिषेधात् । पङ्क्तायोगादिना तावदेकत्वं प्रतिषिद्धम् । तत्समुदायरूपम-नेकत्वमपि तदभावादेव न विद्यते । यथोक्तं ननु—

तस्य तस्यैकता नास्ति यो यो भावः परीक्ष्यते ।
न सन्ति तेनानेकेऽपि येनैकोऽपि न विद्यते ॥

---

१. असाधनं वाक्य०–रा० । २. ०द्रव्यसंवाया वेति–रा० । ३. स्वप्नव्येता०–का० ।

समुच्चयरूपः साधयितुमिष्टः। किं तर्हि ? अभाव एव; एकानेकप्रतिषेधात्। अतः सोऽपि न समूहस्तस्येष्टो न तत्र शब्द इति न विरोधः; न विरुद्धोऽयं पूर्वकात् प्रतिज्ञाहेतुविरोधात् भिद्यते, येन पृथगुच्येत।

तत्र हेतुप्रतिज्ञयोर्बाधनम्, इह प्रतिज्ञया हेतोरित्यस्ति भेद इति चेत्; अर्थविरोधे हि हेतुप्रतिज्ञयोर्बाध्यबाधकभावः स्यात्। 'सर्वार्थविरोधी द्विषु' इति यमपि परस्परं बाधकमेकार्थसन्निधावपरार्थासम्भवात्, तत्र हेतुप्रतिज्ञयोः पृथग्बाधोदाहरणयोर्न कश्चिदर्थभेदः।

अपि चायं विरुद्धो वा सति हेतुप्रयोगे व्यधिकरणत्वादसिद्ध इत्य-

---

ननु पङ्क्योगादिना कथमेकत्वमपोदितम्, यावता तत्र तस्य सावयवत्वमापादितम् ? त एव चावयवास्तस्याल्पीयांसः परमाणवः, विभागपर्यवसानलक्षणत्वात् परमाणूनाम्। अथ तेषामप्यङ्गानामनेनैव विधानेन सावयवत्वमापाद्यते ? तथा सति तत्राप्येतदेवोत्तरमित्यनेनैव प्रकारेण न शक्यते परमाणोरेकत्वनिषेधं कर्तुम्; विभागस्य विभज्यमानतन्त्रत्वात्। कथं चानभ्युपगताणुस्तस्य पङ्क्योगादिकमभ्युपगच्छतीति तदसत्त्वप्रतिपादने सर्वे हेतवः स्वत एवाश्रयासिद्धा इति ? एतच्च नैवम्; यस्मात् समर्था वादिनोऽपगतावयवविभागमासादितापकर्षवन्तं[1] भावम् 'अणुः' इत्याचक्षते। तस्य तेन पङ्क्योगादिनैकत्वमपाक्रियते। ते च यद्येवं निराकृताः सन्तो यथोपगतस्य सावयवत्वं प्रतिपद्यन्ते, तदा स्वप्रतिज्ञायाश्च्यवेरन्। न हि अनङ्गीकृतसावयवत्वात्[2] तथा[2] प्रत्यवस्थानमर्हन्ति। त एवावयवाः सन्तु परमाणव इति। तैरेव च तल्लक्षणं व्यवस्थापनीयम् योगाचारेण च निषेध्यमिति निगृह्यन्ते। अतएव नानवस्था। प्रसङ्गसाधनत्वाच्चासिद्धतादोषोऽपि नास्तीत्यलमेतेन।

अथोच्यते—न वयं भवन्तं प्रतीदं ब्रूमः, यस्तु कश्चिदधौतपादो वाद्येवं प्राह तं प्रतीति ? तच्चासत्; "सर्वं पृथग्, भावलक्षणपृथक्त्वात्, नानेकलक्षणेनैकभावनिष्पत्तेः" इत्यत्र प्रस्तावे भारद्वाजेन अस्मान् प्रत्येव "कामेऽष्टद्रव्यकः" (अभि को० २. २२) इत्यादिना सिद्धान्तमस्माकीनमुपक्षिप्याप्यभिधानात्।

तथाप्यभ्युपगम्य दोषान्तरमाह—न चायं पूर्वकाद् गुणव्यतिरिक्तमित्यादिपदसूचितात् परस्परार्थमाधाय भिद्यते। हेतुप्रतिज्ञयोः सम्बन्धिन्योः बाधयोरुदाहरणापेतयोः पृथग् बाधोदाहरणयोर्न कश्चिदर्थभेदः, शब्दभेदस्तु केवलः। तथाविधस्य च पृथगुदाहरणेऽतिप्रसङ्गः 'अकृतकः शब्दः, कृतकत्वाद्' इत्याद्यपि उदाहर्तव्यं भवेत।

सह पृथग्वा इति क्वचित् पाठः। तत्रायमर्थः—सह यौगपद्येन, यथा प्रथमे पृथक् प्रत्येकम्, तथेह।

अथवा विरोधचिन्ताप्यत्रायुक्ता, इत्याह—अपि चेत्यादि। सर्वं पृथक्, सर्व भावशब्दप्रयोगाद् इत्ययं हेतुः। सर्वस्य धर्मिणो धर्म एव न भवति, शब्दध

---

1. ०तापकर्षयन्तं–रा०। 2–2. ०वयवत्वास्तथा–रा०।

सिद्धताहेतोर्निग्रहस्थानम्, स खलूच्यमान एवातद्धर्मतया प्रतीतो वक्तुः पराजयमानयति। पराजिते तस्मिंस्तदर्थविरोधचिन्तया न किञ्चिद्।

अपि च—सर्वत्रायं प्रतिज्ञाहेत्वोर्विरोधः सम्भवन् द्वयीं[1] दोषजातिमभिपतति विरुद्धतामसिद्धतां चेति।

विरुद्धतासिद्धे हेतोर्धर्मिणि भावे साध्यधर्मविपर्यय एव; भावेन प्रतिज्ञाविरोधात्।

असिद्धता पुनर्धर्मिणि प्रतिज्ञातार्थसिद्धौ; विरुद्धयोः स्वभावयोरेकत्रासम्भवात्, न चान्यथा विरोधः।

---

त्वादित्यसिद्धः। तथा च व्यधिकरणत्वादसिद्धतैव दोषः। गुडो मधुरः, काकस्य कार्ष्ण्यादिति यथा। तत्र न विरोधः; भिन्नाधिकरणत्वाद् हेतुप्रतिज्ञार्थयोः।

स्याद् बुद्धिः—"समूहवाचकशब्दवाच्यत्वाद्" इत्येवं भाविविक्तेन भाष्यटीकायां प्रयोगाद् व्यधिकरणत्वं नास्ति? एवं मन्यते—न तावदयमुद्द्योतकरणैवं प्रयुक्तस्य वायमस्माभिर्दोषोऽभिधातुमारब्धः। येऽपि सम्प्रत्यन्यथा प्रयुञ्जते, तेषामपि यद्ययं दोषो न भवति? भवतु; अनन्तरोक्तस्तु दोषो वक्ष्यमाणश्च ब्रह्मणापि न शक्यते परिहर्तुमिति।

प्रतिज्ञाहेत्वोर्विरोधस्य च निग्रहस्थानान्तरत्वमङ्गीकृत्य मयेदमभ्यधायि, न त्वस्य तद् युक्तम्; "हेत्वाभासाश्च निग्रहस्थानानि" (न्याय० सू० ५.२.२४) इत्यनेनैव संगृहीतत्वादित्येतद् बिभणिषुराह—अपि चेत्यादि। द्वाववयवौ यस्या दोषजातेर्दोषप्रकारस्य सा द्वयी। काम्? इत्याह—विरुद्धताम्, असिद्धतां च।

कथं पुनर्विरुद्धता? इत्याह—विरुद्धतेत्यादि। अयमत्र संक्षेपार्थः—प्रतिज्ञाहेत्वोर्यत्र प्रयोगे विरोधश्चोद्यते, तत्रावश्यं सिद्धेन धर्मिणा भाव्यम्। सिद्धे च तस्मिन् धर्मिणि हेतोर्वा सत्त्वं भवेत् साध्यधर्मस्य, द्वयोर्वा; तत्र न तावत् द्वयोरपि सत्त्वम्, परस्परविरोधित्वेन शीतोष्णयोरिव एकाधिकरणत्वाभावात्। अन्यथा सहैकत्रावस्थानाद् रसरूपवदविरोध एव भवेत्—इति प्रतिज्ञाहेत्वोर्विरोधो दूरतर एव प्रसज्यते। यद् वक्ष्यति—विरुद्धयोः स्वभावयोरेकत्रासम्भवान्न चान्यथा विरोध इति। अथ हेतोस्तत्र सत्त्वम्? एवमपि यत्र हेतुस्तत्र न साध्यधर्मः, तद्विपर्ययस्तु विद्यत इति व्यक्तमस्य विरुद्धत्वम्। नित्यः शब्दः कृतकत्वादिवत्। तदाह—विरुद्धतासिद्धेर्हेतोर्धर्मिणि[2] भाव इति।

यदा पुनस्तस्मिन् धर्मिणि प्रमाणान्तरेण साध्यधर्मस्य सत्त्वं निश्चितम्, तदा तत्र हेतोरवृत्तिः; विरोधिना क्रोडीकृतत्वात्। अतश्चासिद्धत्वं हेतोः, कृतकः शब्दोऽकार्यत्वादिति यथा। तज्जाते असिद्धता पुनर्धर्मिणीत्यादि।

अथ मन्यसे—प्रमाणेन सिद्ध एव गुणव्यतिरिक्ते द्रव्यादौ धर्मिणि प्रतिज्ञाहेत्वोर्विरोधो व्यवस्थाप्यते, ततो नायं दोषः? इत्यत इदमाशङ्कते—असिद्धे इत्यादिना।

---

१. सम्भवन्त्वमी–रा०।　　२. ०सिद्धेर्हेत्वो–रा०।

असिद्धे धर्मस्वभावेऽभिहितयोर्हेतुप्रतिज्ञातार्थयोर्विरोधाद् विरोधसम्भव इति चेत् ?

अप्रमाणयोगे तूभयोर्धर्मिणि संशयः। तथा सति हेतोर्धर्मिणि भावसंशयेऽसिद्धतैव हेतुदोष इत्यसिद्धविरुद्धाभ्यामन्यो न प्रतिज्ञया विरोधो नाम पराजयहेतुः।

असिद्धविरुद्धे च हेत्वाभासवचनादेवोक्ते इति न पृथक् प्रतिज्ञाविरोधो वक्तव्य इति।

उभयाश्रयत्वाद् विरोधस्य विवक्षातोऽन्यतरनिर्देश इति चेत्; स्यादेतत्। प्रतिज्ञाहेत्वोर्विरोध इति प्रतिज्ञाहेतू आश्रित्योभयाश्रयो भवति। तत्र यदा प्रतिज्ञाविरोधो विवक्षितस्तदा प्रतिज्ञाविरोध इत्युच्यते, यदा प्रतिज्ञाया हेतोर्वा विरोधस्तदा विरुद्धो हेतुरिति। अतः प्रतिज्ञाविरोधः, हेतुविरोधो वा इत्यदोषः।

तत्र हेतोरुदाहरणम्–नित्यः शब्दः उत्पत्तिधर्मकत्वादिति, प्रतिज्ञाविरोधस्य–नास्त्यात्मेति, प्रतिज्ञाहेत्वोः परस्परविरुद्धोदाहरणम्—गुणव्यतिरिक्तमित्यादि, प्रतिज्ञया हेतुविरोधोदाहरणम्—'नास्त्येको भावः' इत्यादिकमिति, न सर्वहेत्वपेक्षस्य विरोधहेत्वाभासानतिक्रमात्। यथोक्तम् प्राक्।

अनपेक्षे च केवले स्वतः प्रतिविरोधे विवक्षिते प्रतिज्ञाहेत्वोर्विरोध इति हेतुग्रहणमसम्बद्धम्।

---

एवमपि यदि नाम धर्म्यभावेन पक्षधर्मस्यासम्भवाद् विरुद्धत्वं परिहृतम्, असिद्धत्वं पुनस्तदवस्थमेव ?–इति मनस्याधायाह—अप्रमाणयोगे[1] तूभयोर्वादिप्रतिवादिनोर्धर्मिणि हेतोर्वृत्तिसंशयः; प्रमाणनिवृत्तावप्यर्थाभावासिद्धेः। अतश्चासिद्धतैव; सन्दिग्धताश्रयत्वात्। 'इह निकुञ्जे मयूरः, केकायितत्वाद्' इत्यादिवत्। तु–शब्दः प्रतिपादकप्रमाणायोगे धर्मिणः सन्दिग्धाश्रयताहेतोर्धर्मिबाधकप्रमाणवृत्तौ स्फुटमेवाश्रयासिद्धत्वम्[2]। सर्वगत आत्मनि साध्ये सर्वत्रोपलभ्यमानगुणत्ववदित्यस्य समुच्चयार्थः। तथा हि–असिद्धः धर्मिस्वभाव इत्यत्र प्रतिपादकप्रमाणावृत्तेरसिद्धो धर्मी विवक्षितः स्यात्, बाधकप्रमाणवृत्तेर्वा। पूर्वस्मिन् पक्षे कण्ठेनैवोक्तो दोषः, उत्तरत्र शब्देन विवक्षितः।

अत्रोद्द्योतकरमतमाशङ्कते—उभयाश्रयत्वादित्यादिना। गतार्थत्वात् सर्वं सुज्ञानमेतत्।

न सर्वत्रेत्यादिना निराकरोति। यथोक्तं प्राक्। 'न द्वयीं दोषजातिम्' इत्यत्र।

अथ प्रतिज्ञामात्रभाव्येव हेत्वनपेक्षः प्रतिज्ञाविरोधो व्यवस्थाप्यते, यथा—'नास्त्यात्मा', 'श्रमणा गर्भिणी' इत्यत्रेति ? अत आह—अनपेक्षे च···हेतुग्रहणमसम्बद्धम्; अनुपकारकत्वात्।

यदपीदं हेतुविरोधस्योदाहरणं दत्तम्—'नित्यः शब्दः' इत्यादिना, तत् प्रति-

---

१. प्रमाणयोगे–रा०। २. ०सिद्धतत्वम्–रा०।

न चोत्पत्तिधर्मत्वान्नित्यमित्यत्रापि हेतुविरोधो युक्तः; प्रतिज्ञया हि हेतो-र्बाधने हेतुविरोधः, इह तु हेतुना प्रतिज्ञा बाध्यते इति प्रतिज्ञाविरोधो युक्तः।

उभयाश्रयेऽपि विरोधे बाध्यमानविवक्षया तद्विरोधव्यवस्थापनात्।

यदप्युक्तम्—एतेन प्रतिज्ञया दृष्टान्तविरोधादयोऽपि वक्तव्या भण्डालेख्य-न्यायेन इति।

तत्रापि पक्षीकृतधर्मविपर्ययवति दृष्टान्ते विरोधः स्यात्, विरुद्धे च दृष्टान्ते यदि पक्षधर्मस्य वृत्तिरनन्यसाधारणा प्रसाध्यते, विरुद्धस्तदा हेत्वाभासः।

साधारणायामप्रसाधिते वा तद्वृत्तिनियमेऽनैकान्तिकः। अवृत्तौ वा साधारणः।

---

ज्ञाविरोधस्य हेतुना अयुक्तमिति कथनायाह—न चेत्यादि[1]।

स्यान्मतम्–उभयाश्रयत्वाद् विरोधस्य, एवमपि न हेतुत एव? इत्यत उच्यते–उभयाश्रयेऽपीत्यादि।

एवमुपदर्शितान्युदाहरणानि प्रक्षिप्यातिदिष्टदूषणायाह—यच्चोक्तमेतेन प्रतिज्ञाया दृष्टान्तविरोधादयोऽपि वक्तव्या भण्डालेख्यन्यायेनेति। इति-शब्दः 'वक्तव्याः' इत्यत्र प्रतिपत्तव्यः; अन्यथा परेणोत्तरस्याप्रयुक्तत्वात् दुःश्लिष्टो भवेत्। भण्ड-ग्रहणं नित्यपुरुषोपलक्षणार्थम्। यथा हि भण्डाः प्राकृतान् विस्मापयन्तश्चित्रलक्ष-णोपेतकपि-शालभञ्जिकादिप्रतिच्छन्दकमालिख्य विचित्रशिल्पकलाकौशलशालि-नोऽतिदिशन्ति[2]–एवम्प्रकाराण्यप्यस्मत्कौशलनिर्मितान्येकतालमात्रेण हस्त्यादिरू-पकस्थानानि प्रतिपत्तव्यानीति, तथाजातीयकमेतदुद्द्योतकरस्य। तथा हि—एतदेव भाव उपदर्शितहेतुविरोधादिकं हेत्वाभासव्यतिरिक्तलक्षणोपेतम्। तदतिदिष्टे पुनः कैव चिन्ता!

तामेव चातिदिष्टस्य दृष्टान्तविरोधादेर्हेत्वाभासव्यतिरिक्तलक्षणापेतता-मभिधातुमुपक्रमते–तत्रापीत्यादिना। यत्र प्रतिज्ञाया दृष्टान्तविरोधः, तत्रापि पक्षी-कृतधर्मविपर्ययवति दृष्टान्ते सति विरोधः स्यात्। प्रतिज्ञाया दृष्टान्तेनेति शेषः। पक्षी-कृतश्चासौ धर्मश्च तस्य विपर्ययः स विद्यते यस्मिन्निति विग्रहः। दृष्टान्त इति साधर्म्यदृष्टान्तोऽभिप्रेतः। यस्माद् वैधर्म्यदृष्टान्तः साध्यधर्मविपर्ययवानेव, तत्र को विरोधः! तत्रोदाहरणम्—नित्यः शब्दो घटवदिति।

विरुद्धे च दृष्टान्ते सति यदि पक्षधर्मस्य वृत्तिरनन्यसाधारणा प्रसाध्यते, प्रमाणेन विरुद्धस्तदा हेत्वाभासः। नान्यसाधारणेत्यनन्यसाधारणा। अन्यशब्देन पक्षीकृतधर्म-विपर्ययवतः पृथग्भूतः पक्षीकृतधर्मवानभिप्रेतः पक्षीकृतधर्मविपर्ययवत्येव वर्तते इत्येवं यदि साध्यत इत्यर्थः। यथानयोरेव साध्यदृष्टान्तयोः कार्यत्वादिति तद्वि-पक्षीकृतधर्मबहिर्व्योमादौ न वर्तते, तद्विपरीते पुनर्घटे वर्तत इति।

साधारणायां वृत्तौ साधितायाम्। सपक्षविपक्षयोरिति शेषः। अनैकान्तिकः

---

[1]. न चेदित्यादि—रा०। [2]. ०सादिनो ०—पा०।

विरुद्धदृष्टान्तावृत्तौ विपर्ययवृत्तौ च न कश्चिद् हेतुदोषः[1], दृष्टान्तविरोधश्च प्रतिज्ञाया इति चेत् ?

न; तदापि संशयहेतुत्वानतिवृत्तेर्दृष्टान्तविरोधो[2] हि प्रतिज्ञायाः; साधर्म्ये दोषो न वैधर्म्ये; अभिमतत्वात् ।

साधर्म्यदृष्टान्ते च विपरीतधर्मवति वस्तुतः साध्याव्यभिचारेऽपि हेतोर्नाव्यभिचारधर्मता शक्या दर्शयितुमिति नाप्रदर्शिताविनाभावसम्बन्धाद् हेतोर्निश्चयः । तन्न प्रतिज्ञाया दृष्टान्तविरोधो हेत्वाभासानतिवर्तते ।

उभयथापि दोषोऽस्त्विति चेत् ; न; न हेतुदोषस्य प्राक् प्रसङ्गो न पराजितस्य दोषान्तरानपेक्षणात् ।

---

साधारणाख्यः । यथा—अनयोरेव साध्योदाहरणयोः प्रमेयत्वादिति । अप्रसाधिते चातद्वृत्तिनियमे तयोः सपक्षविपक्षयोर्वृत्तिनियमे सपक्ष एव वर्तते, विपक्ष एवेति अनैकान्तिक एव सन्दिग्धान्वयः, सन्दिग्धव्यतिरेको वा । यथा 'सर्वविद् वीतरागो वा विवक्षितः पुरुषो न वा, तथा वक्तृत्वाद्, रथ्यानरवत्' इति । तयोरेव सपक्षविपक्षयोरवृत्तौ वा सत्यामसाधारणः, 'नित्यः शब्दः श्रावणत्वाद्' इति यथा ।

परः प्राह—विरुद्धदृष्टान्तावृत्तौ हेतोर्विपर्ययवृत्तौ च सत्यां न कश्चिद् हेतुदोषः, तद्यथा—'अनित्यः शब्दः, प्रत्ययभेदभेदित्वात् नभोवत्' इति साधर्म्येण; वैधर्म्येण च घटवदिति, अत्र नासिद्धत्वम्; धर्मिणि हेतोः सद्भावात् । नाप्यनैकान्तिकत्वम्; उभयत्रावृत्तेः । प्रतिबन्धसद्भावाच्च । न च विरुद्धत्वम्; सपक्षविपक्षयोर्वैपरीत्येन वृत्त्यभावात् । दृष्टान्तेन तु विरोधः प्रतिज्ञायाः । इत्ययं हेतुदोषानतिक्रान्तो विषयः प्रतिज्ञाया दृष्टान्तेन च विरोधस्येति ।

इदमपनुदति—न; तदापि संशयहेतुत्वानतिवृत्तेः । यस्माद् दृष्टान्तेन प्रतिज्ञाया विरोधः साधर्म्ये दृष्टान्ते दोषः, न वैधर्म्ये । कस्माद् ? अभिमतत्वाद् विरोधस्य । पक्षीकृतधर्मविपर्ययवानेव हि वैधर्म्यदृष्टान्त उच्यते इत्यभिप्रायः ।

यदि नामैवम्, तथापि कथं हेत्वाभासानतिवृत्तिः ? इत्याह—साधर्म्यदृष्टान्ते च विपरीतधर्मवति नभसि नाव्यभिचारधर्मता शक्या दर्शयितुम् । तदर्थश्च दृष्टान्तः प्रदर्श्यते । यदाह—

> "त्रिरूपो हेतुरित्युक्तं पक्षधर्मे च संस्थितः ।
> रूढे रूपद्वयं शेषं दृष्टान्तेन प्रदर्श्यते ।।" इति ।

ननु च कथमशक्या, यावता प्रत्ययभेदभेदित्वमनित्यत्वाव्यभिचार्येव तत्त्वतः ? इत्यत आह—वस्तुतः साध्याव्यभिचारेऽपीति । विद्यमानोऽप्यव्यभिचारः प्रमाणेनाप्रतिपादितत्वादसत्सङ्कल्प इति भावः ।

तदेतत् नाप्रदर्शिताविनाभावसम्बद्धाद्धेतोः साध्यनिश्चयः । तत् तस्मात् न प्रतिज्ञाया दृष्टान्तविरोधोऽपि हत्वाभासानतिवर्तते । अस्यापि तदानीं सन्दिग्धविपक्षव्यावृत्तिकत्वादित्यागूरितम् ।

---

१. वेत्तिदोषः-रा० । २. ०हेतुत्वात् निवृत्ते०-रा० ।

विशेषेण[1] साधनावयवानुक्रमनियमवादिन उदाहरणसाधर्म्यं हेतुलक्षणं विरुद्धे दृष्टान्ते न सम्भवतीति प्राक्प्रयुक्तस्य हेतोर्दोषेण पराजय इति नोत्तरदृष्टान्तापेक्षया विरोधश्चिन्तामर्हति ।

हेतोरपि दृष्टान्तविरोधेऽसाधारणत्वं विरुद्धत्वं वा, वैधर्म्ये यदि वृत्तिः स्यात् ।

प्रमाणविरोधे तु हेतोर्यथा—'न दहनोऽग्निः, शैत्याद्' इत्यादि ह्यसिद्धो हेत्वाभासः ।

---

न केवलं हेतुविरोध इत्यपि-शब्दः परमतमाशङ्कते । उभयथापि हेतुद्वारेण, दृष्टान्तद्वारेण च । न हेतुद्वारेण प्राग्दृष्टान्तदोषात् प्रसङ्गेन पराजितस्य वादिनो दोषान्तरस्य दृष्टान्तविरोधस्य वाच्यस्य वानपेक्षणात् पराजितपराजयाभावादित्याकूतम् ।

विशेषेण साधनावयवानुक्रमवादिनो नैयायिकस्य । स हि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामानुपूर्वीं प्रतिपन्नः । कः पुनस्तस्यातिशयः ? इत्याह—उदाहरणसाधर्म्यमित्यादि । अङ्गीकृत्य चेदमवादि, न तु दृष्टान्तविरोधो हेत्वाभासरूपासंस्पर्श्यस्ति । यथोक्तमनन्तरमिति । एतेन विकल्पतो दोषविधानं प्रत्युक्तम् । एवं तावद् व्यवस्थितमेतद् यथा—प्रतिज्ञया दृष्टान्तविरोधो हेत्वाभासान्नातिवर्तते इति ।

यत् पुनरुदाहृतमविद्धकर्णेन भाष्यटीकायाम्—"व्यक्तमेकप्रकृतिकम्; परिमितत्वात्, शरावादिवद्" इति, तत्रापि विरुद्धो हेतुः परिमितत्वस्य; हेतोः सपक्षेऽभावे वा वृत्तेः । विपक्षे चानेकप्रकृतिके शरावादौ वृत्तेः । मृदः प्रतिक्षणं प्रत्यवयवं च भिद्यमानत्वात् ।

सम्प्रति हेतोरपि दृष्टान्तेन विरोधो हेत्वाभासान्तर्गत इति कथयति–हेतोरपि दृष्टान्तविरोधे सति असाधारणत्वम्; उभयत्रावृत्तेः । विरुद्धत्वं वा । कदा विरुद्धत्वम् ? इत्याह–वैधर्म्ये यदि स्याद् । अप्यत्रोदाहरणमुक्तं तेनैव—गुणव्यतिरिक्तं द्रव्यमर्थान्तरत्वेनानुपलभ्यमानत्वात् घटवदिति । अत्रापि दृश्यत्वे सतीति हेतुविशेषणे विरुद्धः; सपक्षेऽवर्तमानत्वात् । विपक्षे च रूपादीनां स्वरूपे वर्तमानत्वात् । विशेषणानुपादाने तु व्यभिचारः; अर्थान्तरत्वेनानुपलब्धानामपि पिशाचादीनां परस्परव्यतिरेकित्वात् । न चात्र 'घटवत्' इति दृष्टान्तो युक्तः; तस्यैव द्रव्यान्तरत्वेन पक्षीकृतत्वात् । तस्य रूपादिभ्यो ग्रहणं पूर्वमेव प्रतिषिद्धम्, ग्रहणे चासिद्धो हेत्वाभासः–इत्यस्मन्मतमेव स्थितम् ।

अथ हेतोः प्रमाणविरोधे को हेत्वाभासः ? इत्याह–असिद्धोऽग्नेः शैत्यस्याविद्यमानत्वात् । यत् पुनरत्रोदाहरणमन्यत् 'अनुष्णोऽग्निः; द्रव्यत्वात्, जलवद्' इति, तदयुक्तम्; नहि प्रत्यक्षं द्रव्यं हेतुं बाधते; तस्य धर्मिणि सिद्धत्वात् । किन्तु प्रतिज्ञार्थमनुष्णत्वम् । अथ प्रतिज्ञार्थस्य प्रत्यक्षेण बाधितत्वाद्धेतोस्तेन व्याप्तिर्नास्तीति हेतोः

---

१. विशेषणं–रा० ।

प्रतिज्ञायाः प्रमाणविरोधः स्ववचनविरोधेन व्याख्यातः । इति सर्वे एवैते साधनविरोधे हेत्वाभासेष्वन्तर्भवन्तीति हेत्वाभासवचनेनैवोक्ताः ।

यत्तु विरुद्धमुत्तरं परपक्षे स्वसिद्धेन गोत्वादिनानैकान्तिकचोदनेति, तदसम्बद्धमेव; यदि हि स्वसिद्धेन गोत्वादिना परस्य व्यभिचारसिद्धिमाकाङ्क्षेत, तस्य तत्स्वपक्षविरुद्धं नाभिमतमिति विरोधो युज्येत । स हि स्वयं प्रतिपन्ने गोत्वे हेतुवृत्तेः संशयानोऽप्रतिपत्तिमात्मनस्तथा ख्यापयति ।

स च हेतुः सत्यसति गोत्वेऽप्रसाधितसाधनसामर्थ्यः संशये हेतुत्वादनैकान्तिक एव ।

---

प्रमाणविरोध उच्यते ? एवं तर्हि विरुद्धेन साध्यधर्मेणाव्याप्तेः सन्दिग्धव्यतिरेको हेत्वाभास इत्यस्मत्पक्ष एव समर्थितः ।

हेतोः मानविरोधस्य हेत्वाभासानतिक्रमात् ।

तदुक्तम्—

"प्रत्यक्षादिविरोधा ये व्याप्तकालोपपातिनः ।
ते सर्वे न विरुद्धेन व्याप्तिधर्मेण युञ्जते" ॥ इति ।

स्यान्मतम्—प्रतिज्ञायाः प्रमाणविरोधस्तन्मात्रभावित्वाद्धेत्वाभासेऽन्तर्गमयितुं न पार्यते ? इत्यत आह—प्रतिज्ञायाः प्रमाणविरोधः स्ववचनविरोधेन व्याख्यातः । कृतप्रक्रियः, 'तत्रेदमेव निग्रहाधिकरणमसाधनाङ्गभूतायाः प्रतिज्ञायाः साधनवाक्ये प्रयोगः' इत्यादिना । इति तस्मात् सर्व एवेत्युपसंहरति ।

यत्तु विरुद्धमुत्तरमिति । पूर्वपक्षोक्तमपरमुपक्षिपति । तदसम्बद्धमेव; यस्माद् यदि हीत्यादि । 'अनित्यः शब्दः ऐन्द्रियकत्वाद्, घटवत्' इत्येकं बौद्धेन अन्येन वा कृते मीमांसकः काणादोऽन्यो वा स्वपक्षसिद्धेन गोत्वादिना सामान्येन परस्य साधनवादिनो बौद्धस्य हेतोः व्यभिचारसिद्धिमाकांक्षेत गोत्वमप्यैन्द्रियकं तदपि भवतो नित्यं प्रसज्येत इत्येव यदि परं प्रत्येवाध्यारोप्याभिदध्याद् व्यभिचारम्, तदा तस्य बौद्धस्य तत् सामान्यमैन्द्रियकं नित्यं च स्वपक्षविरुद्धं नित्यपदार्थानभ्युपगमान्नाभिमतम्, अतश्च कथं व्यभिचार इति विरोधो व्याहतिः, अयुक्तत्वमिति यावद्, युज्यते । 'उत्तरस्य' इत्यध्याहर्तव्यम् । न तु पुनरेवमसौ परस्यैवोपरि भारमुपक्षिप्य व्यभिचारमुद्भावयति, तत्कथमुत्तरस्य विरोधः; यतः स ह्युत्तरवादी स्वयं प्रतिपन्ने नित्यत्वेन गोत्वे हेतोरैन्द्रियकत्वस्य वृत्तेः संशयानः सन् 'किं घटवत् ऐन्द्रियकत्वादनित्यः शब्दो भवतु', 'किं वा गोत्वादिवन्नित्यः' इत्यप्रतिपत्तिमनिश्चयमात्मनस्तथा ब्रुवाणः ख्यापयति । सत्पक्षे खल्वैन्द्रियकमपि गोत्वं नित्यम्, तस्मादयं सम्प्रत्यनैकान्तिक इतीत्थमात्मीयमेवाभ्युपगमं पुरस्कृत्यानेकान्तं चोदयति । ततः साध्विवोत्तरमिति समुदायार्थः ।

स्यान्मतम्, बौद्धस्य नास्त्येव गोत्वं नित्यम्, ततो व्याहतमेवोत्तरम् ? इत्यत आह—स च हेतुः 'ऐन्द्रियकत्वाद्' इति सत्यसति वा गोत्वे परमार्थतः अप्रसाधितसामर्थ्यः सन् विपर्यये बाधकप्रमाणावृत्त्या संशयहेतुत्वादनैकान्तिक एव । अप्र-

प्रसाधिते तु सामर्थ्ये गोत्वेऽवृत्त्या हेतौ न संशय एव; सर्वसंशयप्रकाराणां परिहारेण समर्थनात्।

एतेन स्वपक्षानपेक्षहेतुप्रयोगस्यानैकान्तिकता व्याख्याता। सोऽपि स्वाभिमतनित्यगोत्ववृत्तिहेतुमनित्यत्वे ब्रुवाणोऽसमर्थतया साधनाङ्गतया संशयहेतुमेवाहेति।

यत् पुनरुक्तम्—उभयपक्षसम्प्रतिपन्नेन वस्तुनाऽनैकान्तिकचोदनेति ?

तत्राप्यवश्यं संशयहेतुत्वमुखेनैवानैकान्तिको वक्तव्यः। तदसमर्थितेऽन्यत्रापि तुल्यमिति नोभयसिद्धेतरयोरनैकान्तिकत्वविशेषः।

यदप्युक्तम्—'दृष्टान्ताभासा हेत्वाभासपूर्वकत्वात् तदभिधानेनैवोक्ता इति न पृथग् निग्रहस्थानेषूक्ताः' इति; तदप्यवयवान्तरवादिनोऽयुक्तम्।

---

साधितं साधनाय सामर्थ्यं साध्याविनाभावित्वलक्षणमस्येति विग्रहः। साधनशब्दो भावसाधनः। यदा तु बाधकप्रमाणबलेन हेतोरविनाभावं सर्वोपसंहारेण साधयति—यत्किञ्चिदिन्द्रियज्ञानग्राह्यं स्वनिर्भासज्ञानजनकत्वात्, तत्र सर्वमनित्यं नित्यत्वे सर्वदा तद्विषयं ज्ञानं प्रसज्जते, न वा कदाचिदपि। तथा हि—

स्वात्मनि ज्ञानजनने यच्छक्तं शक्तमेव तत्।
अथ वाशक्तं कदाचिच्चेदशक्तं सर्वदैव तत्॥
तस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता।
नित्यत्वादचिकित्स्यस्य कस्तां क्षपयितुं क्षमः॥ इति।

तदानीं गोत्वादीनामपि नित्यानामेकप्रघट्टेन इव पाटितत्वाद् गोत्वे हेतोरवृत्तेर्न संशय एव भवति।

एतेनेत्यादि सुज्ञानम्। तत्राप्यनैकान्तिकहेत्वाभासत्वानतिवृत्तिरिति संक्षेपः।

तत्संशयहेतुत्वमुखेनानैकान्तिकत्वम्। असमर्थिते सति हेतौ। अन्यत्रापीति। एकपक्षप्रतिपन्नेऽपि वस्तुनि तुल्यमिति नोभयसिद्धेतरयोर्वस्तुनोरनैकान्तिकत्वविशेषः। यथा कथितमनन्तरमेव—स च हेतुः सत्यसति वेत्यादिना। इतरदेकपक्षप्रतिपन्नमनैकान्तिकविषयत्वाच्चानैकान्तिकमिति व्याख्यातम्।

स्याच्चित्तं नानिष्टेर्दूषणम्, सर्वप्रसिद्धैस्तु द्वयोरपि साधनम्, दूषणं वा—इत्येतत् कथमेवं न व्याहन्यत इति ? तच्च नैवम्; निश्चितदूषणाभिसन्धिवचनात्। तत एव तदनन्तरमाह—अन्यः पुनः साध्यत्वमीक्षत इति। एतत्तु स्यात्। तदा द्वयोरपि न जयपराजयौ।

यदप्युक्तमुद्द्योतकरेण प्रतिज्ञाविरोधसूत्रमेव विवृण्वता—दृष्टान्ताभासा इत्यादि, तदपि अवयवान्तरवादिनो नैयायिकस्यायुक्तम्। बौद्ध एवैवं ब्रुवाणः शोभत इत्यभिप्रेतम्। तद्वचनेन हेत्वाभासवचनेन गम्यमानस्य दृष्टान्ताभासस्य तस्माद् हेतोः सकाशात् साधनान्तरत्वाभावप्रसङ्गात्। दृष्टान्तस्येति शेषः।

ननु च दृष्टान्ताभासानां हेत्वाभासेष्वन्तर्भावेऽतिदिष्टे हेतोर्दृष्टान्तेऽवयवान्तरं

योऽवयवान्तरं दृष्टान्तहेतोराह, तस्य न हेत्वाभासोक्त्या दृष्टान्ताभासोक्ति-र्व्याप्त्या, तद्वचनेन गम्यमानस्य तस्मात् साधनान्तराभावप्रसङ्गात्।

दृष्टान्ताभासानां हेत्वाभासेऽप्यन्तर्भावात् दृष्टान्तस्यापि हेतावन्तर्भाव इष्टो भवति। तत्र[1] च न दृष्टान्तः पृथक्साधनावयवः स्याद्; अपृथग्वृत्तेः।

यो दृष्टान्तसाध्योऽर्थस्तस्य हेतावन्तर्भावाद्धेतुनैव साधित इति न दृष्टान्तस्य पृथक् किञ्चित् सामर्थ्यम्।

अपि च—न किञ्चित् पूर्वपक्षवादिनो हेत्वाभासासंस्पर्शे न्याय्यं निग्रह-स्थानमस्तीति तत्सम्बन्धीनि सर्वाण्येव हेत्वाभासतावचनेनैवोक्तानीति न पृथग्वाच्यानि स्युः।

अर्थान्तरगमनादेरपि हेतोरसामर्थ्य एव सम्भवात्। नहि समर्थे हेतौ साध्ये च सिद्धेरर्थान्तरगमनं कश्चिदारभते; असमर्थस्य मिथ्याप्रवृत्तेरिति ।। ३ ।।

४. "पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः" (न्या० सू० ५.२.५)। यं प्रतिज्ञातमर्थम् 'अनित्यः शब्दः ऐन्द्रियकत्वात्' इति सामान्यवृत्त्या हेतोर्व्यभि-चारप्रदर्शनेन सः प्रतिषेधे कृते, 'क एवमाह—अनित्यः शब्दः' इति परित्य-जति, तस्य प्रतिज्ञासंन्यासो नाम निग्रहस्थानमिति।

अत्रापि यद्युद्भाविते‌ऽपि हेतोर्व्यभिचारे न सपक्षम्, किं न गृह्येत! अनिगृह त एव हेत्वाभासाभिधानादिति चेत्?

---

न प्राप्नोतीति वचनमसम्बद्धमेव? इत्यत आह—दृष्टान्ताभासानामित्यादि। अय-मस्य प्रयोगो मनसि विजृम्भते—यद्यतोऽर्थान्तरभूतं न तदाभासवचनेन तदाभासवचनं न्याय्यम्। न च तदाभासेषु तदाभासानामन्तर्भावः; तद्यथा—प्रत्यक्षाभासानामनुमानाभासेषु। तथा च भवतो हेतोर्दृष्टान्तोऽर्थान्तरभूत इति व्यापकविरुद्धोपलब्धिः। अतोऽवश्यं दृष्टान्तस्य हेतावन्तर्भाव एष्टव्यः। तत्र च न दृष्टा-न्तः पृथक् साधनावयवः स्यात्। अपृथग्वृतेः। एकव्यापारत्वादित्यर्थः।

एतदेव व्याचष्टे—यो दृष्टान्त इत्यादिना।

एवं प्रतिज्ञाहेत्वोर्विरोधस्य प्रपञ्चस्य हेत्वाभासैः संगृहीतत्वान्न पृथग् वचनं कर्तव्यमित्यभिधायाधुना प्रतिघहान्यादीनामपीयमेव गतिरित्यावेदना-याह—अपि चेत्यादि। पूर्वपक्षवादिग्रहणमुत्तरपक्षवादिनोऽज्ञानादीनि हेत्वाभास-स्पर्शीनि सन्तीति कथनार्थम्। तत्सम्बन्धीनीति। हेत्वाभाससम्बन्धीनि, पूर्वपक्ष-वादिसम्बन्धीनि वा।

अथोच्यते—अर्थान्तरगमनादीनां हेत्वाभाससंस्पर्शित्वान्न तेष्वन्तर्भाव इति? तच्चासत्; अर्थान्तरगमनादेरपि हेतोरसामर्थ्य[2] एवं सम्भवात्[2]। कुतः? असम-र्थस्य न्यायबलेन साध्यप्रतिपादने। वादिन इति शेषः। मिथ्याप्रवृत्तेरर्थान्तरग-मनादिनेत्यभिप्रायः ।। ३ ।।

---

१. तथा—रा०। २—२. रसमर्थ एवमति सम्भवात्—रा०।

किमिदानीमुत्तरप्रतिज्ञासंन्यासापेक्षया तस्य तदेवाद्यं निग्रहस्थानमिति किमन्यैरशक्तपरिच्छेदैः क्लीबप्रलापप्रचेष्टितैरुपन्यस्तैः[1] ! एवं हि अतिप्रसङ्गः[1] स्यात्। पक्षप्रतिषेधे तूष्णीम्भवतस्तूष्णीम्भावो नाम निग्रहस्थानम्; अपलायमानस्य अपलायितं नामेति एवमादपि[2] वाच्यं स्यात्। तस्मादेतदपि असम्बद्धमिति ॥ ४॥

५. "अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" ( न्या० ५. २. ६ )। निदर्शनम्—'एकप्रकृतीदं व्यक्तम्[3]; परिणामात् मृत्पूर्वकाणां सरावप्रभृतीनां दृष्टं परिमाणम्' इति।

---

४. उत्तरः पश्चाद् फलभावी स चासौ प्रतिज्ञासंन्यासश्च तस्यापेक्षया किम्। न किञ्चिदित्यर्थः। अशक्तः परिच्छेदः संख्ये येषां क्लीबप्रलापचेष्टितानां तानि, तथा क्लीबादीनां प्रलापाः येषां वादिनां तेषां चेष्टितानि प्रतिज्ञासंन्यासादीनि, तैः किमुपन्यस्तैः। कः पुनरेवं सति दोषः? इत्याह--एवं ह्यतिप्रसङ्गः स्यात्। एवमाद्यपीति। मूर्च्छावेपथुत्रसत्वादीनामादिशब्देनावरोधः। तस्मादेतदत्यसम्बद्धम्; विद्वत्सदस्येवम्प्रकारस्य स्थूलत्वादित्यभिप्रायः।

तदत्र भाविविक्तः स्वयमाशङ्क्य किल प्रतिविधत्ते-"स्थूलत्वेनेदं निग्रहस्थानमिति चेत्? प्राश्निकप्रतिवादिसन्निधौ प्रतिज्ञातार्थापह्नवं करोति" इति। असम्बद्धमुच्यते, तत्राभिप्रायापरिज्ञानात्[4]; न ब्रूमः 'ध्वंसी शब्द;' इति, किन्तु 'संयोगविभागाभ्यां न व्यक्तः' इति अयं प्रतिज्ञातार्थ इति? आह-"सामान्यस्य च स्वाश्रयव्यङ्ग्यत्वात् विवादाभावः" इति। निग्रहस्थानं तु पूर्वमप्रतिज्ञातार्थत्वात्। अनैकान्तिकदोषेण प्रतिषेधे हेतौ प्रतिज्ञातार्थापह्नवं करोतीति निगृह्यते इति? तत्र वाच्यम्-यदि वादी साकांक्ष एवान्तराले केनचिद् दुर्विदग्धेनानैकान्तिकदोषेण चोदितः सन् प्रतिज्ञातार्थफलीकरणेन स्वाभिप्रायमाविष्करोति, तदान्योऽपि न कश्चिद्दोषः, किमङ्ग पुनः प्रतिज्ञासंन्यासः! अथ निराकांक्षः सन् पश्चाच्चोदितः प्रतिज्ञां विशिनष्टि, तदाप्यनैकान्तिकदोषेणैव[5] निगृह्यत इति किमुत्तरप्रतिज्ञासंन्यासापेक्षयेति न किञ्चित् परिहृतम्। किञ्च स्फुटमिदं प्रतिज्ञान्तरेऽन्तर्भवतीति न पृथग् वाच्यमिति ॥ ४॥

५. अविशेषोक्ते हेतावित्यादि सूत्रम्। अत्र निदर्शनम्। उदाहरणमित्यर्थः। कापिलः प्रमाणयति प्रधानसिद्धिप्रत्याशया--एकप्रकृतीदं व्यक्तम्, व्यक्तादिपरिमितत्वात्, घटशरावादिवदिति। एका प्रकृतिरस्येति विग्रहः। प्रकृतिः = उपादानकारणम्। या च किल सा प्रकृतिर्विकारग्रामस्य, तत् प्रधानमिति इयमलीकप्रत्याशा साङ्ख्यस्य—अपरिमाणं चतुरस्रमण्डलमित्यादि। मृत्पूर्वकाणामिति अन्वयमाह।

---

१-१. ०न्यस्तैरेव क्षति प्रसङ्गः-रा०। २. एवमन्यदपि-रा०। ३. वक्तव्यं-रा०। ४. तन्नाभिप्राय०—रा०। ५. तदप्यनै०-रा०।

अस्य व्यभिचारेण प्रत्यवस्थानम्—नानाप्रकृतीनामेकप्रकृतीनां च दृष्टं परिमाणमिति ।

एवं प्रत्यवस्थित आह—एकप्रकृतिसमन्वयप्रकाराणां परिणामदर्शनात् सुखदुःखमोहसमन्वितं हीदं सर्वं व्यक्तं परिगृह्यते, तस्य प्रकृत्यन्तररूपसमन्वयाभावोऽसत्येकप्रकृतिकत्वमिति तदविशेषोक्ते हेतौ प्रतिषेधं ब्रुवतो हेत्वन्तरं भवति । सति हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम् ।

अत्रापि पूर्वस्यैव हेतोरनैकान्तिकस्याभिधानान्निगृहीते हेत्वन्तरचिन्ता कोपयुज्यते ? यदि प्राक्साधनवादी हेतुमनैकान्तिकमुक्त्वा दत्तोत्तरावसरः तेनैव निगृह्यते । अदत्तोत्तरावसरो हेत्वन्तराभिधानेऽपि न निग्रहमर्हति; अविरामात् ॥ ५ ॥

६. "प्रकृतादर्थादप्रतिबद्धार्थमर्थान्तरम्" ( न्या० ५.२.७ ), "यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां कुर्यात्—नित्यः शब्दोऽस्पर्शत्वादिति हेतुः । हेतुश्च नाम हिनोतेर्धातोस्तुशब्दे प्रत्यये कृदन्तं पदम् । पदं च नामाख्यातोपसर्गनिपाता इति प्रस्तुत्य नामादीनि व्याचष्टे । इदमर्थान्तरं नाम निग्रहस्थानम् ; अभ्युपगतार्थासङ्गतत्वादिति" ।

---

अस्य हेतोर्व्यभिचारेण प्रत्यवस्थानं प्रतिवादिना क्रियते । नानाप्रकृतीनाम् गवाश्वादीनाम्, एकप्रकृतीनां च कुम्भोदञ्चनादीनां दृष्टं परिमाणम् । इत्येवं प्रत्यवस्थिते सति प्रतिवादिनि । यदि वा प्रत्यवस्थितः प्रतिषिद्धः ।

प्रधानवादी आह—एकप्रकृतिसमन्वयत्वे सति परिणामदर्शनादिति सविशेषणत्वाद्धेतोर्व्यभिचाराभाव इति मतिः । कथं पुनरेकप्रकृतिसमन्वयः ? इत्याह—सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते । सर्वत्र तत्कार्यदर्शनादित्याकूतम् । तथा हि—सुखबहुलानां प्रसादलाघवप्रसवाभिष्वङ्गाद् हर्षप्रीतयः कार्यम्, रजोबहुलानां शोष-ताप-भेद-स्तम्भोद्वेगापद्वेषाः, तमोबहुलानां सावरण-मादनायध्वंस-बीभत्स-दैन्य-गौरवाणि । एतानि च सर्वाणि सर्वत्रैव यथोत्कर्षापकर्षभेदमुपलभ्यन्ते । तस्मात् त्रैगुण्यप्रकृतीदं विश्वम् । तदिदमित्यादिना निग्रहस्थानत्वे कारणमाह ।

अत्रापीत्यादि । अस्य प्रतिषेधः सुज्ञानः । अविरामाद् । अच्छेदादपरिसमाप्तत्वात् साधनाभिधानस्येत्यर्थः ॥ ५ ॥

६. यथोक्तलक्षण इति । एकाधिकरणौ विरुद्धौ धर्मौ इति पक्षप्रतिपक्षलक्षणं स्मारयति । परिग्रहे वादिप्रतिवादिभ्यां कृते सति हेतुतः साध्यसिद्धौ प्रकृतायां हेतुवशात् साध्यसिद्धिरित्येतस्मिन् प्रकरणे सति प्रकृतोऽर्थः शब्दनित्यत्वम्; तेनासङ्गतत्वात् । तदसम्बद्धत्वात् । तदनुपकारकत्वादित्यर्थः । तथा हि—विनापि रूपसिद्ध्या प्रातिपदिकव्याख्यानं यथाकथञ्चित् प्रतिपादितादर्थादेवार्थः सिद्ध्यति ।

न्याय्यमेतन्निग्रहस्थानम् ; पूर्वोत्तरपक्षवादिनोः प्रतिपादिते दोषे प्रकृतं परित्यज्यासाधनाङ्गवचनमदोषोद्भावनं च। साधनवादिना ह्युपन्यस्तसाधनस्य समर्थने कर्तव्ये तदकृत्वा परस्य प्रसङ्गेनाप्रसङ्गेन वाऽतन्नान्तरीयकस्याभिधानमुत्तरवादिनोऽपि[1] दोषोद्भावनमात्रादपरस्योपक्षेप इति ॥ ६ ॥

७. "वर्णक्रमनिर्देशवन्निरर्थकम्" (न्या० सू० ५.२.८)। यथा—'नित्यः शब्दो जबगडत्वात् झभघढवद्' इति। "साधनान्युपादानान्निगृह्यते" इति।

इदमप्यसम्बद्धम्, नहि वर्णक्रमनिर्देशसिद्धावानर्थक्यं यदेव किञ्चिदसाधनाङ्गस्य वचनं तदेवानर्थकम्; साध्यसिद्ध्युपयोगिनोऽभिधेयस्याभावात्, निष्प्रयोजनत्वाच्चेति। प्रकारविशेषोपादानमसम्बद्धम्।

वतेरुपादानाददोष इति चेत्, स्यादेतत्; वर्णक्रमनिर्देशवदिति वतिरत्रोपात्तः, सोऽन्यदप्यननुरूपं गृह्णातीत्यदोष इति नार्थान्तरादेर्निग्रहस्थानस्यावचनप्रसङ्गात्।

एवं हि ता निरर्थका वाच्या निरर्थकेनैवाभिधानाहितम्। (?)

न साध्यसिद्धौ अनर्थकं निरर्थकम्, यस्य नैव कश्चिदर्थस्तन्निरर्थकमिति चेत्?

यस्य कस्यचिद्वादिनोऽपि हि निरर्थकाभिधाने किं न निग्रहः! निग्रहनिमित्ताविशेषात्।

---

न्याय्यमेतदिति। स्वमतेनाविरुद्धत्वादभ्यनुजानाति। कदा च पूर्वोत्तरपक्षवादिनोर्न्याय्यं निग्रहस्थानम्? इत्याह—प्रतिपादिते दोषे सति वादिप्रतिवादिभ्यामन्योन्यमसाधनाङ्गवचनमेतत्, अदोषोद्भावनं च भवेदिति। अन्यथा न ह्यनयोरेकस्यापि जयपराजयावित्युक्तम्। प्रकृतं परित्यज्येति। न्याय्यतामेवास्य प्रतिपादयति। प्रकृतमत्र साध्यसाधनहेत्वभिधानम्। तदकृत्वेति। उपन्यस्ते दोषे न समर्थनम्। अपरस्य रूपसिद्ध्यादेः। अतन्नान्तरीयकस्यापीति। उपन्यस्तसाधनसमर्थनाङ्गस्येत्यर्थः। अपरस्य नामादिव्याख्यानादेः उपक्षेपः। पराजयस्थानमिति वर्तते ॥ ६ ॥

७. वर्णक्रमनिर्देशवन्निरर्थकम्। यत्र वर्णा एव केवलं क्रमेण निर्दिश्यन्ते, न पदम्, नापि वाक्यम्। अर्थान्तरे किलाप्रकृतार्थकथनमिह वर्णमात्रोच्चारणमिति शेषः। असम्बद्धतामेवाह—न हि वर्णक्रमनिर्देशादेव केवलादानर्थक्यम्, अपि तु यदेव किञ्चिदसाधनाङ्गस्यासिद्धविरुद्धादेः शब्दरूपसिद्ध्यादेश्च वचनं तदेवानर्थकम्। किं कारणम्? साध्यसिद्ध्युपयोगिनोऽभिधेयस्याभावात्। साध्यसिद्ध्युपयोगिनोऽभावेऽपि कस्यान्यत् प्रयोजनमस्तीत्यपि न मन्तव्यमिति कथयति—निष्प्रयोजनत्वाच्चेति। साध्यसिद्धेरेव प्रस्तुतत्वादन्यप्रयोजनवत्त्वेऽपि आनर्थक्यमेव तत्र प्रस्तावे इत्यभिप्रायः। तस्मात् प्रकारविशेषोपादानं वर्णक्रमनिर्देशवदित्यसम्बद्धम्।

परः प्राह—न साध्यसिद्धौ यदनर्थकमनङ्गं तन्निरर्थकमभिप्रेतम्, अपि तु यस्य वचनस्य काकवासितादेरिव नैव कश्चिदर्थः; तथा च नार्थान्तरापार्थकादीनानामनेनैव संग्रहः; तत्र कस्यचिदर्थलेशस्य सद्भावात्। आचार्य आह—यस्य

---

[1] वाऽजनान्तरी(य)कस्या०—रा०।

न तस्येहाप्रस्तावादिति चेत् ?

आयातमिह-यो निरर्थकं ब्रवीति, तस्य तेनैव निग्रह इति। तत्तुल्यं सर्वस्यासाधनाङ्गवादिन इति। स सर्वो निरर्थकाभिधानोऽप्यनेनैव निग्रहस्थानेन निग्रहार्हः।

न च वर्णक्रमनिर्देशः सर्वत्र निरर्थकः; क्वचित् प्रकरणे तस्याप्यर्थवत्त्वात्। तस्मादत्रैवास्यानर्थक्यात् निग्रहस्थानत्वम्। अपि चान्यदिदमुच्यते—'वर्णक्रमनिर्देशो निग्रहस्थानम्' इति; कपोलवादितकंक्ष्यघट्टितकमित्येवमादीनामपि वाच्यत्वात्॥ ७॥

८. "पर्षत्प्रतिवादिभ्यां त्रिरभिहितमप्रतिज्ञातार्थम्" (न्या० ५.२.९)। "यद्वाक्यं पर्षदा प्रतिवादिना च त्रिरभिहितं न विज्ञायते क्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तं निग्रहस्थानमिति।"

नेदं निरर्थकाद् भिद्यते; सपदि प्रकृतार्थसम्बद्धं गमकमेव कुर्यात्, नास्यासामर्थ्यम्, न च जाड्यात् पर्षदादयो न प्रतिपद्यन्ते इति न विद्वान्निग्रहमर्हति।

---

कस्यचिदप्यवादिनोऽपि[1] निरर्थकाभिधाने वादिन इव किं न निग्रहो भवति। कथं स्याद्? इत्याह—निग्रहनिमित्तस्य निरर्थकाभिधानस्य वाद्यवादिनोरविशेषात्।

नेति परः[2]। तस्य वादिनः। इह वादप्रकरणे।

आयातमित्याचार्यः। तस्य तेनैव निरर्थकाभिधानेन। तत्रैवं स्थिते वादे तुल्यम्। सर्वस्यासाधनाङ्गवादिनो निरर्थकाभिधायित्वमित्यध्याहर्तव्यम्। क्वचित् तवेति पाठः। तव नोपस्कारेण किञ्चित्। अनेनैव निरर्थकाभिधानेन।

प्रत्युच्यते—'यस्य नैव कश्चिदर्थः' इत्येतदप्यसम्बद्धम्, यस्मान्न च वर्णक्रमनिर्देशोऽपि निरर्थकः, क्वचित् प्रकरणे प्रत्याहारादावर्थवत्त्वाच्च। तस्मादत्रैव वादेऽस्य वर्णक्रमस्यानर्थक्यम्। तच्चार्थान्तरादेरपि तुल्यमिति! कंक्ष्यघट्टितकमिति[3]अत्रादिशब्देन उत्प्लुत्य गमनं तालदाननृत्तादीनां[4] ग्रहणम्॥ ७॥

८. त्रिरभिहितमिति। त्रिवचनं कार्यमिति न्यायं दर्शयति। सकृदुक्तं स्पष्टार्थमपि कदाचिन्न ज्ञायत इति त्रिरुच्चारणं कार्यम्। कस्मात् पुनः पदवाक्यप्रमाणविद्भिर्वाक्यं न ज्ञायते? इत्याह—क्लिष्टशब्दमित्यादि। क्लिष्टशब्दं मनागुच्चरितत्वात्। अपशब्दत्वादित्यपरे। कस्मादेवं प्रयुक्तम्? इत्याह—असामर्थ्यसंवरणायेति। स्पष्टार्थस्य प्रयोगे दूषणं वक्ष्यतीति भयात् प्रयुङ्क्ते। इदं च साधनदूषणवादिनोः समानम्। दूषणवाक्यमपि ह्येवम्भूतनिग्रहप्राप्तिकारणम्।

नेदं निरर्थकाद् भिद्यते। तथा हि श्लिष्टशब्दादिभिः प्रकृतार्थसम्बद्धं गमकमेव ब्रूयात्। एतद्विपरीतं वा। प्राक्तने प्रकारे नास्यासामर्थ्यम्। तत्र तु पर्षदादयो[5] जाड्यात् तदुक्तं न प्रतिपद्यन्ते इति नेयता विद्वान् वादी निग्रहमर्हति।

---

१. दप्यादिनो०—रा०। २. परं—रा०। ३. चित्तं कक्कङ्पिङ्गितमित्यत्रा०—रा०।
४. ०नृत्या०—रा०। ५. परिषदादयो—रा०।

पर्षत्प्रतिभासपरिकल्प्यार्हवचनात् निग्रहार्ह एवेति चेत्? न्यायवादिनो जाड्यादुक्तमजानन् किं न प्रतिवादी निगृह्यते। जाड्यात् पर्षदादेरविज्ञातप्रतिपादनासामर्थ्य इति विजेता न स्यान्न निग्रहार्हः! असम्बद्धाभिधाने निरर्थकमेवेति न पृथक् विवक्षितार्थं नाम निग्रहस्थानमिति ॥ ८॥

९. "पौर्वापर्यायोगादप्रतिवद्धार्थमपार्थकम्" (न्या० ५.२.१०)। "यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येण योगो नास्तीत्यसम्बद्धार्थता गृह्यते, तत्समुदयार्थोपायादपार्थकं दशदाडिमादिवाक्यवत्। इदं किल पदानामसम्बद्धात् सम्बद्धवर्णान्निरर्थकात् पृथगुक्तम्।

नन्वेवमसम्बद्धवाक्यमपि पृथग् वाच्यम्; नोभयसङ्ग्रहात् लक्षणमपार्थकम्[1]; निरर्थकस्य संग्रहप्रसङ्गात्।

एवंविधाच्च[2] विशेषसमाश्रयात् पृथग् निग्रहस्थानलक्षणप्रलपनेऽतिप्रसङ्गोऽ-

---

'वक्तुरेव हि तज्जाड्यं यच्छ्रोत्रा नावबुध्यते', ततोऽसौ निग्रहार्ह एवेत्याकूतवानाह परः—पर्षत्प्रज्ञामिति। न्यायवादिन इति परिहरति। न्यायवादिन उक्तमिति सम्बन्धः। वादी तु जाड्यात् परिषदादेरविज्ञातसाधनसामर्थ्य इति कृत्वा विजेता न स्यात्; परिषत्प्रतिवादिप्रत्यायनेन जयव्यवस्थापनात्। अविज्ञातं प्रतिपादनसामर्थ्यं परिषत्प्रतिवादिभ्यां यस्येति कार्यम्। द्वितीयं तु विकल्पमधिकृत्याह—असम्बद्धाभिधाने निरर्थकमेवेति ॥ ८॥

९. अनेकस्य पदस्येति। इदानीमसम्बद्धार्थप्रतिपादकत्वे वाक्यार्थप्रतिपादकत्वं निराकरोति। वाक्यस्यासम्बद्धार्थप्रतिपादकत्वे प्रकरणाध्यायप्रतिपत्त्यभावात्[3], समुदायप्रतिपत्त्यभावाच्च निग्रहस्थानम्। उदाहरणम्—दश दाडिमानि षडपूपाः कुण्डमजाजिनम् पललपिण्डम्, अथ रौरुकमेतत् कुमार्यः स्फैयकृतस्य पिता प्रतिशीन इति। अत्र च भारद्वाजेन निरर्थकापार्थकयोरभेद इत्याशङ्क्य प्रतिविहितम्—"तत्र हि वर्णमात्रम्, इह पदान्यसम्बद्धानि" इति। तदेवाचार्योऽपि उपक्षिपति—इदं किलेत्यादिना। असम्बद्धा वर्णा यस्मिन् निरर्थके इति विग्रहः। किलशब्दोऽनभिमतत्वप्रदर्शनार्थः। अनभिमतत्वमेवाह—नन्वेवं[4] पदानामसम्बद्धादपार्थकवदसम्बद्धवाक्यमपि[5] निरर्थकात् पृथग् वाच्यं स्यात्। स्यान्मतम्-अपार्थकं नैवासम्बद्धपदार्थासम्बद्धवाक्यार्थयोः संगृहीतत्वात् पृथग् न वाच्यमित्यत उच्यते—नोभयसंग्रहादपार्थकं युक्तम्। कस्मात्? असम्बद्धपदार्थेनापार्थकेनैवासम्बद्धवाक्यस्येव निरर्थकस्यापि वर्णक्रममात्रलक्षणस्य संग्रहप्रसङ्गात्।

अथोच्यते—निरर्थकं किमुच्यते? यस्यार्थ एव नास्ति केवलं वर्णक्रममात्रम्; असम्बद्धपदवाक्ययोस्तु साध्यसिद्ध्यनुपयोगेऽपि न सर्वथा नैरर्थक्यम्, अतोऽर्थतत्त्वे साम्याद् द्वयोरेवैकीकरणम्? इत्यत आह—एवंविधाच्चेत्यादि। कपोलवादितादीनामपि पृथगभिधानप्रसङ्ग इत्यत्रातिप्रसङ्ग उक्तः। न हि किञ्चिन्मात्रेण विशेषो न शक्यते क्वचित् प्रदर्शयितुमित्यभिसन्धिः।

---

१. अपार्थकात्—रा०।　२. एवं विधार्थ०—रा०।　३. प्रतिपत्त्यभावः—रा०।
४. नन्वयं—रा०।　५. मसम्बन्ध०—रा०।

प्युक्तः । न च सङ्ग्रहनिर्देशे कञ्चिद्दोषं पश्यामः । प्रभेदे वा गुणान्तरमिति यत्कि-ञ्चिदेतत् ॥ ९ ॥

१०. "अवयवविपर्यासवचनमप्राप्तकालम्" (न्या० सू० ५.२.११) । "प्रतिज्ञादीनां यथालक्षणमर्थवशात् क्रमः, तत्रावयवानां विपर्ययेणाभिधानं निग्रहस्थानम् ।"

नैवमपि सिद्धेरिति चेत्, न; प्रयोगापेतशब्दतुल्यत्वात् । यथा—गौरि-त्यस्य पदस्यार्थे गोणीति प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति न शब्दार्थाख्यानं व्यर्थम् ।

अनेन च पदेन गोशब्दमेव प्रतिपद्यते, गोशब्दात् ककुदादिमन्तमर्थम्, तथ प्रतिज्ञाद्यवयवविपर्ययेणानुपूर्वीं प्रतिपद्यते, आनुपूर्व्या चार्थमिति । तथा हि—पूर्वं कर्मोपादीयते, ततः करणं मृत्पिण्डादिकं लोके इति ।

---

अथ निरर्थकापार्थकयोः संग्रहनिर्देशदोषम्, भेदनिर्देशे च गुणं पश्य अक्षपादेन न संग्रहनिर्देशः कृत इति मन्यसे ? न साधु मन्यसे, इत्याह—न च सं इत्यादि ॥ ९ ॥

१०. यथालक्षणमर्थवशादिति । अर्थः सामर्थ्यम् । अनुपदर्शिते हि विषये नि षया साधनप्रवृत्तिर्मा भूदिति "साध्यनिर्देशलक्षणा प्रतिज्ञा" पूर्वमुच्यते । तदनन्तर "उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः" ( न्या० सू० १. १. ३४ ) इत्येवंलक्ष हेतुस्तत्साधनायोच्यते । ततो हेतोर्बहिर्व्याप्तिप्रदर्शनार्थम् "साध्यसाधर्म्यात् तद्ध भावी दृष्टान्त उदाहरणम्" ( न्या० सू० १. १. ३६ ) इत्येवंलक्षणमुदाहरण ततः प्रतिबिम्बनार्थं साध्यधर्मिणि सम्भवप्रदर्शनार्थं वा "उदाहरणापेक्षस्तथेत्यु संहारो न तथेति वा साधनस्योपनयः" ( न्या० सू० १. १. ३८ ) इत्येवंलक्ष उपनयः, तत उत्तरकालं सर्वावयवपरामर्शेन[1] विपरीतप्रसङ्गनिवृत्त्यर्थं "हे पदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" ( न्या० सू० १. १. ३९ ) इत्ये लक्षणं निगमनमिति—अयमसौ यथालक्षणमर्थवशात् क्रमः । तथा हि—लोके पूर्वं कार्यं मृत्पिण्डाद्युपादीयते, पश्चात्तु करणं चक्रदण्डादिकमिति न्यायः । अस्मिन् क्रमे न्यायतः स्थितेऽवयवानां प्रतिज्ञादीनां विपर्ययेणाभिधानं निग्रहस्थान यथा—घटवत् कृतकत्वादनित्य इति ।

नैवमपि सिद्धेरिति भारद्वाजः स्वयमेवाशङ्क्य, परिहरति—न; प्रयोगापेत वदेतत् स्यादिति । अनेनेति गोणीपदेन । यथा—

> अम्बाम्बेति[2] यथा बालः शिक्षमाणः[3] प्रभाषते[4] ।
> अव्यक्तम्, तद्विदां तेन व्यक्ते भवति निश्चयः ॥ (वा० प० १. १

तथा किल गोण्यादयः शब्दाः—

> "ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः" । (वा० प० १. १५०) इति ।

---

१. परामर्षेण—पा० । २. अम्बाम्ब्रिति—रा० ।
३. शिक्ष्यमाणः—रा० । ४. प्रभासते—पा० ।

तदेतदुन्मत्तकस्योन्मत्तकसंवर्णनमिव, प्रयोगापेतशब्दवदेतदिति। यदि गोणीशब्दात् ककुदादिमत्यर्थे प्रतीतिशब्दान्वाख्यानप्रयत्नेनाऽर्थं पश्यामः।

गोणीशब्दस्यार्थप्रतिपादनेऽसामर्थ्यात् प्रतिपादकव्युत्पत्त्यर्थमन्वाख्यानमिति चेत्?

ननु गोणीशब्दादपि लोके प्रतीतिर्दृष्टा? सत्यं दृष्टा, न तु साक्षादित्युक्तम्।

उक्तमेतन्न पुनर्युक्तम्; स्त्रीशूद्राणामुभयप्रतीतेरभावात्। यः खलूभयं वेत्ति-शब्दमपशब्दं च, स एव प्रतिपद्यते। यस्तु नक्कशब्दं मुक्कशब्दमेव वा वेत्ति, न नासाशब्दम्, स कथमपशब्दाच्छब्दं प्रतिपद्येत, ततोऽर्थं प्रतिपद्येत।

दृष्टा चानुभयवेदिनोऽपि प्रतीतिरिति।

---

तदेतदुन्मत्तकस्य वैयाकरणस्योन्मत्तकसंवर्णनमुन्मत्तकेनोद्द्योतकरेण संवर्णनम्। यथा ह्येक उन्मत्तो द्वितीयमुन्मत्तकं संवर्णयति, तथाभूतमेतदपीति यावत्। यदि चोन्मत्तकस्योद्द्योतकरस्योन्मत्तकस्य वैयाकरणस्य संवर्णनम्; तथा हि शाब्दिक एव तावदुन्मत्तः, प्रमाणविरुद्धवक्त्वाभिधायित्वात्; ततः कुतस्तत् प्रक्रियायाः प्रमाणचिन्ताया ज्ञापकत्वमित्यभिप्रेतम्।

कथं पुनः शाब्दिकस्यायुक्ताभिधायित्वम्? इत्याह—यदीत्यादि। सुबोधम्।

स्त्रीशूद्रशब्दो मूर्खवचनः।

यस्तु नक्कशब्दं मुक्कशब्दमेव वा नासापर्यायं वेत्ति, स कथमपशब्दाच्छब्दं साधुं प्रतिपद्यातः साधोः शब्दादर्थं प्रतिपद्येत। किमुच्यते नैवासौ तथा विबोधं प्रतिपद्यते? इत्याह—दृष्टा चानुभयवेदिनोऽपि सनकादेः प्रतीतिरिति। तस्मान्न परम्परया प्रतीतिरर्थस्य। अयमत्र संक्षेपः—यस्मादेवमसाधूनां साध्वनुमापकत्वम्, यद्येषां धूमादीनामिव त्रैरूप्यं भवेन्निश्चितम्, तच्च न सम्भवति; यस्मादेतावदनुभयवेदिनः सनकादयस्ते सन्तमपि व्याप्यव्यापकभावं न प्रतिपद्यन्ते। न चासावज्ञातो गमकः; ज्ञापकत्वात्। येऽपि शब्दापशब्दप्रविभागकुशलाः, तेऽप्यविद्यमानत्वादेव भावयन्ति। तथा हि—असाधूनां साधुभिः सम्बन्धस्तादात्म्यम्, कार्यकारणभावो वा भवेत्; तदुभयविकलस्याव्यभिचारनियमाभावात्। तत्र च तावन्न तादात्म्यमभ्युपेयम्; पारमार्थिकस्यैव भेदस्य स्फुटं प्रत्यक्षतः प्रतीतेः। शब्दवदसाधोरप्यव्यतिरेकतो वाचकत्वप्रसङ्गाच्च। तदुत्पत्तिरपि दूरोत्सारितेव; यतो नासाधवः साधुभ्यो जायन्ते; कारणगुणवस्तुकामतामात्रहेतुत्वात्तेषाम्। न च तेषां नित्यत्वम्; कादाचित्कोपलम्भतः। तत्त्वे वा सुतरां तदुत्पत्तेरभावः। सत्यपि वा व्याप्यव्यापकभावे तत्परिज्ञाने च पक्षधर्मत्ववैकल्याच्चाक्षुषत्वादेरिवासाधुभ्यो नानुमानम्। न ह्यत्र धर्मो[1] विद्यते, यतः पक्षधर्मत्वं निष्पद्यते। न हि साधूनामेव धर्मित्वम्, तेषामेवानुमीयमानत्वात्। न च धर्मिसाधनं युक्तिमतः; भावाभावोभयधर्मस्यासिद्धविरुद्धानैकान्तिकदोषदुष्टत्वतः। कथं वा साधूनां तद्धर्मत्वम्, न हि तत्काले ते सन्ति! असतां च धर्मित्वं वाचकत्वं चेति सुभाषितम्! किमुच्यते—

---

१. धर्मी–रा०।

**न परम्परया[1] प्रतीतिः; अर्थेऽसमर्थस्य शब्देऽपि प्रतीतिजननासामर्थ्याच्च ।**

**न ह्यर्थेऽपि वाचकत्वं नामान्यदेव, अन्यत्र तद्विषयप्रतीतिजननात् ।**

**अपशब्दश्चेच्छब्दे प्रतीतिं जनयेत्, अर्थ एव किं न जनयति ! न ह्येतस्यार्थात् कञ्चिद् भेदं पश्यामः, येन तं परिहरेत् ।**

---

पुरुषो धर्मी, साधुशब्दविवक्षा साध्यधर्मः, पक्षधर्मश्चासाधुरिति ? तदप्यसम्बद्धम्; व्याप्यव्यापकभावाभावादेव । यस्मान्न च गोणीशब्दप्रयोगकाले गोशब्दविवक्षामुपलभामहे । अथ प्रत्यवस्थीयते—यथा पक्षधर्मत्वादिवैकल्येऽप्यव्यक्तम् बालवचो व्यक्तमनुमापयति, तथैवासाधवोऽपि साधूनिति ? तदयुक्तम्; तत्रापि तुल्यपर्यनुयोगत्वात् ।

वयं तु प्रतिपद्यामहे—साक्षादेव तस्मादप्यव्यक्तान्मात्राद्यर्थः प्रतीयत इति । तत्र संज्ञासंज्ञिसम्बन्धस्याननुभूतत्वादयुक्ताप्रतीतावित्यपि न मन्तव्यम्; अनादिमति संसारे व्यवहारपरम्परायास्तथाभूतायाः सम्बन्धस्योल्लिङ्गितत्वात् । तथा हि—न गवादिशब्दानामपि प्रायः शृङ्गिग्राहिकयार्थनियमः सङ्केत्यते, अपि तु व्यवहारपारम्पर्यतो विदग्धाः निश्चिन्वन्ति । तच्चेहापि समानमेव । तस्मादेतदरण्यरुदितम्—

"अम्बाम्बेति[2] यदा बालः शिक्षमाणः प्रभाषते[3] ।
अव्यक्तं तद्विदां तेन व्यक्ते[4] भवति निश्चयः ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः[5] प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽवसीयते" ॥ (वा.प.१५२-३) इति ।

यदप्यभिधायि कुमारिलेन—

"गोशब्देऽवस्थितेऽस्माकं तदशक्तिजकारिता ।
गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारिणी" ॥ (श्लो० वा० शब्द० २७६

इति, तस्यापीदमेव प्रतिविधानम् ।

इदं च सर्वमागूर्य निगमयति—न परम्परया प्रतीतिरिति । अत्रैवोपचयमाह—अर्थे प्रतिपादनायासमर्थस्यासाधोः शब्देऽपि साधौ प्रतीतिजननासामर्थ्याच्च ।

तत्रैतत् स्यात्—न वयमसाधूनामर्थेषु प्रतीतिजनकत्वं निराकुर्मः, किन्तु वाचकत्वम्, शब्दे चासाधुः प्रतीतिजनक एव न वाचक[6] इति ? अत आह—ह्यर्थेऽपि शब्दस्य वाचकत्वमन्यदेवेत्यादि ।

यद्यसाधोरर्थे प्रतीतिजनकत्वमिष्यते, तदेतावता वयमाहितपरितोषाः, किमस्माकमभिधानान्तरकल्पितेन वाचकत्वेनेत्याकूतम् । नैव तर्ह्यसावर्थप्रतीतिं जनयितुं क्षमः, अपि तु शब्द एवेति चेद् ? आह—अपशब्दश्चेदिति ।

---

१. परस्परं याऽपि–रा० । २. अम्बम्बिति–रा० । ३. शिक्ष्यमाणः प्रभासते–रा० ।
४. व्यक्तेन–रा० । ५. यद्भ्रंशः–रा० । ६. वाचक एव–रा० ।

अकृतसमयस्य शब्देऽप्यप्रतीतिजननाच्च ।

नह्ययमपशब्दः शब्देऽपि स्वभावतः प्रतीतिं जनयति, अदर्शनात्[1] समय[1] एव तु जनयेत् । समयवशात् प्रवर्तते ।

एवं हि प्रतिपत्तिपरम्परापरिश्रमः परिहृतो भवति ।

विपर्ययदर्शनाच्च । शब्दादर्थमप्रतिपद्यमाना अपशब्दैरेव ज्ञानं व्युत्पद्यमाना लोके दृश्यन्ते इति व्यर्थं शब्दानुशासनम् ।

न व्यर्थम्, संस्कृतशब्दव्युत्पत्त्यर्थमिति चेत्, कोऽयं शब्दानां संस्कारः ? न ह्येषां प्रज्ञाबाहुश्रुत्यादिकं संस्कारं पश्यामः ।

---

अथोच्यते--शब्देन तस्य स्वाभाविकः सम्बन्धः, नार्थेन, ततस्तमेव प्रतिपादयति नार्थम्, तद्यथा—स्वभावतः चक्षू रूपं प्रकाशयति न शब्दादीन् ? अत आह--अकृतसमयस्येत्यादि ।

अदर्शनादिति । न ह्यप्रतीतिसम्बन्धाः सिंहलशब्दा आर्यजनव्यवहाराय वर्तन्ते, समय एव तु जनयेत् प्रतीतिम् । सामयिके च तत्र सम्बन्धे सोऽर्थेऽप्यनिवार्यः । समयवशात् असाधुः साधौ वर्तमानोऽर्थ एव गवादौ किं न प्रवर्तते । नहि किञ्चत् तथा दोषः, गुणस्तु केवल इत्याह–एवं हीत्यादि । एतदुक्तं भवति–ये स्वभावतः प्रकाशकाः न ते समयमपेक्षन्ते; यथा चक्षुर्दीपादयो रूपादीनाम् । स्वभावतश्चापशब्दो यदि शब्दस्य प्रकाशको भवेत्, ततस्तेनापि सम्बन्धोऽनपेक्षः[2] स्यात्, अपेक्ष्यते च । ततो नास्य शब्दे स्वाभाविकं सामर्थ्यम् । तथा चेदमपि शक्यमनुमातुम्–"ये समयापेक्षप्रवृत्तयः, ते सर्वत्र यथासमयमनिवारितप्रसराः साक्षादेव प्रतिपादकाः भवन्तिः; यथा—कायविज्ञप्त्यादयः । तथा चापशब्दा अपि समयापेक्षप्रवृत्तयः" इति । सिद्धमेषामव्यवधानत[3] एवार्थप्रतिपादकत्वमिति ।

विपर्ययदर्शनाच्चेति । उपचयान्तरम् । तथा हि--'वृक्षः, अग्निः, उत्पलम्' इत्युक्तेऽव्युत्पन्नधियो बालाः प्रश्नोपक्रमं सन्तिष्ठन्ते—'कोऽयं वृक्षः' इत्यादिना । ते चान्यस्य व्युत्पादनोपायस्याभावादपशब्दैरेव व्युत्पाद्यन्ते—रुक्खो, अग्गि, उप्पलमिति । तदेवमत्रासाधव एव वाचका न साधवः सन्तोऽपीति विपर्ययो दृश्यते ।

अथ प्रतिपद्यसे–धर्मसाधनता शब्दसंस्कारः । यथोक्तम्—

"शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम् ।
अर्थप्रत्यायनाभेदे　　विपरीतास्त्वसाधवः" ॥ (वा०प० १.२७.) ॥

तथा—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥"

'तेऽसुरा हेलयो हेलय इत्युक्तवन्तः पराबभूवुः । एकोऽपि शब्दः सम्यक्

---

१–१. अदर्शनासमयत–रा० । २. ०न्धोनापेक्षः–रा० । ३. ०व्यधानतः–पा० ।

नाप्येषामेकान्तेन श्रव्यता । नाऽप्यर्थप्रत्यायने कश्चिदतिशयः ।

न धर्मसाधनता, मिथ्यावृत्तिचोदनेभ्यः संस्कृतेभ्योऽप्यधर्मोत्पत्ते ।

अन्येभ्योऽपि विपर्ययेण धर्मोत्पत्तेः । शब्दस्य सुप्रयोगादेव स्वर्गमोदन-घोषणा वचनमात्रम् । न चैवंविधानागमानाद्रियन्ते युक्तिज्ञाः ।

न च दानादिधर्मसाधनचोदनाशून्यकेवलशब्दसुप्रयोगान्नगपातमिति ब्रुवाणस्य कस्यचिन्मुखं वक्रीभवति । तस्मान्न संस्कृतं नाम कश्चिच्छब्दः ।

शिष्टप्रयोगः संस्कार इति चेत् , के शिष्टाः ? ये वादतवेद्यादिगुणयुक्ताः[1] । कः पुनरेषां गुणोत्कर्षानपेक्षोऽलीकनिर्बन्धो यत्तेऽमूनेव शब्दान् प्रयुञ्जते, नापरान् ? न चात्र कश्चिच्छब्देऽपवाद्यः साक्षी, यत इदमेव प्रयुञ्जते नापरान् शिष्टाः इति निश्चिनुमः ।

नन्वेवं वयं गुणातिशयमपश्यन्तः संस्कारं केषाञ्चिच्छब्दानामनुमन्यामहे, तदन्वाख्यानं यत्नं वा; गुणातिशयाभावात् । वेदरक्षादिकं चाप्रयोजनमेव[2] तत्समयस्थायिनः[3] । सत्यपि गुणातिशये न करणीय एवान्वाख्याने यत्नः,

---

प्रयुक्तः सुकृतिनां लोकं गमयति । आहिताग्निरपशब्दमभिधाय प्रायश्चित्तीयामिष्टिं निर्वपेद्'' ( म० भा० प० आ० १ ) इत्यादि ?

इदमपसारयति–न धर्मसाधनता । शब्दानां संस्कार इति वर्तते । किं कारणम् ? इत्याह–मिथ्यावृत्तिचोदनेभ्य इत्यादि । मिथ्यावृत्तिश्चोद्यते यैरिति कार्यम् । यथा हि 'अस्याभिनवविद्रुमांकुरप्रकराभिरामकिसलयमञ्जुमञ्जरीराजिविराजित-तरोरशोकवनस्पतेरधः शयितस्य द्विजन्मनो नीलनीरजनीलतातिशायिना मण्डलाग्रेण शिरश्छित्त्वा' इत्युक्तेऽपि भवत्येव ब्रह्महत्यया सम्बन्धः प्रयोजकस्य ।

अन्येभ्य इति । असम्भूतेभ्यो विपर्ययेण सम्यक्त्ववृत्तिचोदनेन । तथा–'अस्स बम्भणस्स गावी दीअदि' । सर्वं चेदमप्रमाणत्वाद् वचनमात्रं भवतामित्याकूत-वानुपचयमाह[3]--शब्दस्य सुप्रयोगादेवेत्यादि । एवंविधानिति । अप्रमाणकान् ।

ननु च "प्रतिष्ठिते भूप्रदेशे चैत्यं कारयति ब्राह्मं[4] पुण्यं प्रसवति, कल्पं स्वर्गेषु मोदते" इत्यादावपि प्रमाणाभावादयं तुल्यः प्रसङ्गो भवतामपि ? न तुल्यः; यस्मादत्र विषयद्वयपरिशुद्धिः परिहानार्था[5] विसंवादश्चास्तीति तृतीयेऽपि राशावाहितपरितोषाः प्रेक्षावन्तः प्रवर्तन्ते । नन्वेवं भवन्मतेऽनन्तरोदितद्वयमपि; प्रमाणव्याहतत्वात् । प्रमाणव्याहतिश्चानन्तरमेवावेदिता । तस्मात् दरिद्रेश्वर-स्पर्धासमानमेतत् ।

विदितवेद्यादिगुणप्रयुक्ता इति । अन्तर्भावितभावप्रत्ययनिर्देशः । विदितं वेद्यं हेयोपादेयत्वं यैस्ते तथोक्ताः । आदिग्रहणात् करुणादिपरिग्रहः । अमूनेव संस्कृतान्, अपरानसंस्कृतान् । एतदुक्तं भवति–शब्दो हि व्यवहारोऽर्थप्रत्यायन-फलः । तच्च यथा संस्कृतेभ्यः सङ्केतवशात् सम्पद्यते ,तथाऽसंस्कृतेभ्योऽपीति

---

१. वेद्यतादि०–रा० । २. कथाप्रयो०–रा० । ३. तत्स्थामवस्थापिनः–रा० ।
४. भवताविमत्याकू०–रा० । ५. ब्राह्मचं–रा० । ६. परिनार्था–पा०, रा० ।

तत्स्वभावस्यान्यतोऽपि सिद्धेः। प्राकृतापभ्रंशद्रमिडान्ध्रादिभाषावत्। न हि प्रतिदेशं भाषाणां किञ्चिल्लक्षणमस्ति, अथ च सम्प्रदायसाम्याल्लोकस्तथैव[1] प्रतिपद्यते, तासां च प्रयोगभ्रंशम्; तथा संस्कृतानां शब्दानां प्रतीतिर्भविष्यतीति जडप्रतिपत्तिरेवैषा, या शब्दानां लक्षणे प्रवृत्तिः।

अवयवविपर्ययेऽपि यदि तेषां वचनानां सम्बन्धप्रतीतिर्न, न विपर्ययः, नाप्यर्थापत्तिः; सामर्थ्यात्।

न ह्यत्र कश्चित् समयः 'प्रत्यायनाविशेषेऽपि एवमेव शब्दाः प्रयोक्तव्याः' इति। स एव तेषां क्रमो यथावस्थितेभ्योऽर्थप्रतीतिर्भवतीति न विपर्ययात् प्रतीतिः। तत आनुपूर्वीप्रतिपत्त्या प्रतीतिरिति चेत्? नाप्रतीयमानसम्बन्धेभ्य आनुपूर्वी प्रतिपत्तिः।

येषां शब्दानां कश्चित् सम्बन्धो जायते 'इदमिह सम्बध्यते' इति, तेषु विदितसम्बन्धेषु कः कस्य पूर्वोऽपरो वा क्रमः, येन क्रमेण व्यवस्थाप्येरन्! सम्बन्धप्रतिपत्तौ स एव तेषां क्रमः, यो यथावस्थितानां सम्बन्धः प्रतीयते। न हि वाक्येषु पदानां क्रमनियमः कश्चित्, यथा—पुरुषो राज्ञः, राज्ञः पुरुष इति।

यावद्भिः पदैरर्थपरिसमाप्तिस्तदेकं वाक्यम्, यथा—'देवदत्त गामानय कृष्णाम्' इति। अत्र पदानां यथाकामं प्रयोगेऽपि नार्थप्रतीतौ विशेष इति कश्चित् क्रमाभिनिवेशः।

---

किमस्थानेऽभिनिविष्टाः शिष्टाः! अत एव च मन्ये प्रेक्षावद्भ्योऽन्यत्वादनुगतार्थमेवं नामामीषामिति। अथवा किमस्माकमर्हर्षितिः प्रत्याख्यानैः। ते अमूनेव[2] प्रयुञ्जते नापरानित्यत्रैव निश्चयाभावात्। यदाह—न चात्र शब्दे परोक्षः साक्षी यतः साक्षिणः इदमेवामूनेव प्रयुञ्जते नापरानिति निश्चिनुमः।

ननु चोक्तम्—तदन्वाख्यानस्य प्रयोजनं "रक्षोहागमलघ्वसन्देहाः" (म०भा० प० आ०) इति, तत् कथं गुणातिशयाभावादित्युच्यते? इत्याह—वेदरक्षादिकं चाप्रयोजनमेवातत्समयस्थायिनस्ताथागतस्य। न्यायानुपायित्वात्। तत्स्वभावस्य साधुशब्दरूपस्य। अन्यतोऽपीति। वृद्धप्रवादपारम्पर्यात्। एतदेव दृष्टान्तोपक्रमं व्यनक्ति—प्राकृतेत्यादिना।

इत्थं शाब्दिकस्योन्मत्तकतामुपदर्श्याधुना भारद्वाजस्याह—अवयवविपर्ययेऽपीत्यादि। सम्बन्धप्रतीतिरिति। सम्बन्धः=परस्परमुपकार्योपकारकभावः। सामर्थ्याद् विवक्षितप्रतिपादन इति शेषः।

अथ स्याद्—अक्षपादसिद्धान्तनीतिपालनाय न प्रतिज्ञादीनां क्रमव्यत्ययः क्रियते इति? अत्राह—नह्यत्र कश्चित् समयः सिद्धान्तो नियमो वा प्रमाणोपेत इत्यप्याह। अपर[3] आह—न विपर्ययात् प्रतीतिः साध्यस्य; किन्तु ततो विपर्ययादानुपूर्व्याः प्रतीतिरिति। अस्य प्रतिषेधः। नाप्रतीयमानसम्बन्धेभ्य आनुपूर्वी प्रतीतिरिति।

येषामित्यादिनैतदेव व्याचष्टे।

---

१. सम्प्रदायः ल्लोक०—रा०। २. अमूनैव—रा०। ३. नपरः—रा०, पा०।

प्रतिपादितं च प्रतिज्ञावचनान्तरेणापि यथा प्रतीतिर्भविष्यतीति। प्रतीयमानार्थस्य शब्दस्य प्रयोगेऽतिप्रसङ्गः। परिशिष्टेषु च सम्बन्धं प्रदर्श्य धर्मिणि भावः प्रदर्श्येत, धर्मिणि भावं प्रदर्श्य सम्बन्धः प्रदर्श्येतेति न नियमः कश्चिद्; उभयथापि प्रतीत्युत्पत्तेरित्युक्तम्। अप्रतीयमानसम्बन्धेषु च पदेषु न तेभ्य आनुपूर्व्या अपि प्रतीतेरिति नेदमपार्थकाद् भिद्यते इति नाप्राप्तकालं पृथग् वाच्यं स्यादिति ॥ १० ॥

११. "हीनमन्यतमेनाप्यवयवेन न्यूनम्" ( न्या० ५. २. १२ )। "यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति, तद्वाक्यं हीनम्; साधनाभावे साध्यसिद्धेः।"

न प्रतिज्ञादीनां[1] न्यूनं हीनम्; तदभावे प्रतीतिभावादिति प्रतिपादितम्।

हीनमेव तत्, न्यूनतायामपि निग्रहादित्यपरः।

यः प्रतीयमानार्थमनर्थकं शब्दं प्रयुङ्क्ते, स निग्रहमर्हेत्, नार्थोपसंहितस्याभिधातेति असमीक्षिताभिधानमेतत्। अतएव च प्रतिज्ञाया न साधनाङ्गभाव इति ॥ ११ ॥

---

अपि च—प्रतिज्ञोपनयनिगमनानां पूर्वमेवास्माभिः साधनवाक्ये प्रयोगः प्रतिक्षिप्तः, तत् कुतस्तत्कृतो विपर्यय इति? एतत् कथयति—प्रतिपादितमित्यादिना। प्रतिज्ञाग्रहणमुपलक्षणार्थम्।

अथ सामर्थ्यलभ्यापि प्रयुज्यते, तदातिप्रसङ्गः इति? एतदाह—प्रतीयमानार्थस्य च प्रयोगेऽतिप्रसङ्गः। साधर्म्यवति प्रयोगे वैधर्म्यस्यापि प्रयोगप्रसङ्गः, न चेष्यते; "अर्थादापन्नस्य स्वशब्देन पुनर्वचनं च" ( न्या० सू० ५. २. १५ ) इति निग्रहस्थानवचनात्। पक्षधर्मान्वयव्यतिरेकेषु तर्हि प्रतिज्ञाद्यभावेऽपि क्रमनियमो भविष्यति? इत्यत आह—परिशिष्टेष्वित्यादि।

अप्रतीयमानसम्बन्धपक्षे दोषान्तरं ब्रूते—नेदमपार्थकाद् भिद्यते इति न पृथग्वाच्यं स्यादिति ॥ १० ॥

११. यस्मिन् वाक्ये प्रतिज्ञादीनां निगमनपर्यन्तानामन्यतमोऽवयवो न भवति तद्वाक्यं हीनम्। निग्रहस्थानत्वे कारणमाह—साधनाभावे साध्यासिद्धेरिति।

इदं निराकरोति—न प्रतिज्ञादीनामित्यादिना। प्रतिज्ञाग्रहणमुपलक्षणार्थम्। तेनोपनयनिगमनयोरपि परिग्रहः।

उद्द्योतकरस्य मतमुपन्यस्यति—हीनमेव तत्। प्रतिज्ञान्यूनम्। तस्या प्रतिप्रतिज्ञाया न्यूनतायामपि निग्रहादिति। अस्यायुक्ततामाह—यः साधनसामर्थ्यात् प्रतीयमानार्थमनर्थकं शब्दं साध्याभिधायिनं साधने प्रयुङ्क्ते स निग्रहमर्हेत्। तथा हि—शब्दस्यानित्यत्वविचारे प्रस्तुते यदा ब्रवीति—'कृतकानामनित्यत्वं दृष्टम्, कृतकश्च शब्दः' इति, तदा वचनद्वयादेव साध्यार्थः प्रतीयत इति निरर्थकं प्रतिज्ञावचनम्। नार्थोपसंहितस्य युक्तियुक्तस्य पक्षधर्मसम्बन्धमात्रस्याभिधातेत्यसमीक्षिताभिधानमेतत् वार्त्तिककारस्य। अत एव चेति। यतः प्रतीयामानार्थे शब्दे प्रयुक्ते निग्रहमर्हति।

---

१. प्रतिज्ञान्यूनं—रा०।

१२. "हेतूदाहरणाधिकमधिकम्" (न्या० ५. २. १३)। "एकेन कृतकत्वादित्यस्यानर्थक्यमिति तदेतन्नियमाभ्युपगमे वेदितव्यम्"।

यत्रैकसाधनवाक्यप्रयोगपूर्वको विचारस्तत्राधिकाभिधानमनर्थकमिति निग्रहस्थानम्।

प्रपञ्चकथायां तु न कश्चिद् दोषः, नियमाभावादिति ॥ १२ ॥

१३. "शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्" (न्या० ५.२.१४)। "शब्दपुनरुक्तम्–अनित्यः शब्दोऽनित्यः शब्द इति। अर्थपुनरुक्तम्—अनित्यः शब्दो निरोधधर्मको ध्वान इति।"

---

तदत्राविद्धकर्णः प्रतिबन्धकन्यायेन प्रत्यवतिष्ठते—"यद्येवम्, 'कृतकश्च शब्दः' इत्येतदपि न वक्तव्यम्, किं कारणम्? 'अनित्यत्वम्' इत्येतेनैव शब्देऽपि कृतकत्वमनित्यत्वं चोभयं प्रतिपद्यते; यस्मात् पूर्वमपि शब्दे कृतकत्वं परेण प्रतिपन्नमेव, करणाच्छब्दोऽपि बुद्धौ व्यवस्थितः, अतोऽन्वयवाक्येन स्मृतिमात्रकमुत्पाद्यते। अप्रतिपन्नकृतकत्वस्य पुनः 'कृतकश्च शब्दः' इत्येतस्मादपि नैव भवति। यद्वा—'कृतकः शब्दः' इत्येतावद् वक्तव्यम्। कृतकत्वस्य त्वनित्यत्वेनाविनाभावित्वं परस्य प्रसिद्धमिति शब्देऽप्यनित्यत्वं प्रतिपद्यते" इति।

तेनानुकूलमेवाचरितम्। तथा हि यदि वादिना कथञ्चिन्निश्चितं भवति, प्रतिपन्नमनेन वादिना—कृतकत्वं शब्द इति, तदा नैव तेन पक्षधर्मोपसंहारः कर्तव्यः; निष्फलत्वात्। प्रतिबन्धमात्रं तु प्रदर्शनीयम्। अथ तथा न निश्चितम्, तथापि यद्ययं परः पक्षधर्मोपसंहारे मया कृते तस्यासिद्धिं चोदयिष्यति, तदाहं तां प्रत्ययभेदभेदित्वादिभिरुपायैः प्रतिनिवारयिष्यामि। स्वयमेव वाऽचोदित एवाशङ्क्यैतच्चेतस्यधाय पक्षधर्मत्वमुपसंहर्तव्यमेव–कृतकश्च शब्द इति। यदाप्येवंवादी निश्चितवान् कृतकत्वस्यानित्यत्वेनाविनाभावित्वं परस्य प्रसिद्धमिति, तस्यामप्यवस्थायाम् 'कृतकः शब्दः' इत्येतावदेव वक्तव्यम्। यथोक्तम्—

तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः।
ख्याप्यते विदुषां वाच्यो हेतुरेव हि केवलः॥ इति ॥ ११ ॥

१२. तदेतन्नियमाभ्युपगम इति। अधिकं निग्रहस्थानं विशिष्टे विषये स्थापयति। तं च विशिष्टं विषयमाह—यत्रेत्यादिना। ननु चेदं नियमाभ्युपगमे वेदितव्यमिति भाष्यकारेणैवोक्तम्, तत् किमत्र दूषणमाचार्येणोक्तम्? सत्यं न किञ्चिदुक्तम्, आचार्येण तु परक्षिप्तोक्तमेवानूद्यतेऽभ्यनुज्ञानार्थम् ॥ १२ ॥

१३. शब्दार्थयोः पुनर्वचनं पुनरुक्तमिति। अस्यापवादमाह—अन्यत्रानुवादादिति। अनुवादः=निगमनम्। अनुवादो हि न पुनरुक्तव्यपदेशं लभते। शब्दाभ्यामर्थविशेषोत्पत्तिः। यस्मात् साध्यनिर्देशः। प्रतिज्ञासिद्धनिर्देशो निगमनमित्युक्तम्। पुनः शब्दश्च नानात्वे दृष्टः। पुनरियमचिरप्रभा निश्चरतीत्यप्यावेदितमेव।

---

१. किंकारणनी—पा०, किंकारणनिमित्तम्—रा०।

अत्र न शब्दपुनरुक्तं पृथग्वाच्यम् ; अर्थपुनरुक्तवचनेनैव गतत्वात् । न ह्यर्थभेदे शब्दसाम्येऽपि कश्चिद् दोषः । यथा—

हसति हसति स्वामिन्युच्चैरुदत्यभिरोदिति ।
कृतपरिकरं स्वेदोऽङ्गारं प्रधावति धावति ॥
गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति ।
धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति ॥

यथा वा—यद्यस्मिन् सति भवति भवति, न भवति न भवति तत्तस्य कार्यमितरत् कारणमिति ॥ १३ ॥

१४. गम्यमानार्थं पुनर्वचनमपि पुनरुक्तम् ; नियतपदप्रयोगे[1] साधनवाक्ये यथा प्रतिज्ञावचनमिति अर्थपुनरुक्तेनैव[2] गतार्थत्वान्न पृथग् वाच्यम् ।

---

यद्येवम्, तत्र तर्हि पुनरुक्ततायाः प्राप्तिरेव नास्तीति किमर्थमयमपवादः प्रारभ्यते ? सत्यमेवमेतत् । त एव तु प्रकृष्टतार्किकाः प्रष्टव्याः—कथमेतदिति ! अस्माकं तु किं परकीयाभिर्गृहचिन्ताभिश्चिन्तिताभिरित्यलं प्रसङ्गेन ।

अत्र चेदमपि द्वितीयसूत्रमस्ति—"अर्थादापन्नस्य स्वशब्देन पुनर्वचनम्" ( न्या० सू. ५. २. १५ ) इति, तदाचार्येण नोपन्यस्तम्; उपलक्षणार्थत्वात् । तद्भाष्यमपक्षिप्य निराकरिष्यति—गम्यमानार्थं पुनर्वचनमपीत्यादिना ।

अत्रेत्यादिना दूषणमारभते । एतदुक्तं भवति—यत्र शब्दसाम्येऽप्यर्थो न भिद्यते, तत्रार्थपुनरुक्तेन गतम् । यत्र तु शब्दसाम्येऽप्यर्थभेदः, तत्र शब्दपुनरुक्ताप्रामपि न किञ्चित् कृतम् ।

किमस्त्ययमीदृशः सम्भवो यच्छब्दपुनरुक्ततायामप्यर्थभेदोऽस्ति ? इत्यत आह—यथा हसति हसतीत्यादि । अत्र हि पूर्वो हसतिशब्दः सप्तम्यन्तः, द्वितीयश्च तिङन्त इत्यर्थभेदः । एवमुत्तरत्रापि ।

काव्य ईदृशः सम्भवो न तु वादे-इत्याशङ्कायामुदाहरति—यथा चेत्यादि । ननु चेहाप्यर्थभेदवच्छब्दभेदोऽप्यस्ति सुबन्ततिङन्ततया ? सत्यम्, न केवलमत्रापि । अत्रापि "अनित्यः शब्दः, अनित्यः शब्दः' इत्यत्रास्त्येव शब्दभेदः; स्वलक्षणभेदात्, अन्यथा न क्रमभावि श्रवणं स्यात् । समानश्रुतिसमाश्रयमिह पौनरुक्त्यं यदि व्यवस्थाप्यते, तदत्रापि तुल्यमेव । अर्थभेद एवायम्; क्रियाभेदादिवाच्यत्वात् । तद्वत्[3] कल्पित एव हि पदभेदः ॥ १३ ॥

१४. गम्यमानार्थं पुनर्वचनमपि पुनरुक्तमिति । द्वितीयं पुनरुक्तलक्षणसूत्रमुपलक्षयति । अस्य चोदाहरणं वात्स्यायनेन न्यायभाष्ये उक्तम्—साधर्म्यवति प्रयोगे वैधर्म्यस्य । आचार्यस्तु प्रतिज्ञायामप्येतत् समानमित्यागूर्य प्रतिज्ञायाः साधनवाक्येऽननुपन्यासं प्रतिपादयितुकामो वक्रोक्त्या प्रतिज्ञावचनमेवोदाहरणत्वेनोपन्यस्यति—नियतपदप्रयोगे साधनवाक्ये यथा प्रतिज्ञावचनमिति । नियतानां पदानां प्रयोगो यस्मिन्निति

---

१. नियति०—रा० । २. अथ पुन०—रा० । ३. तद्वल—रा० ।

अयमपि नियतसाधनवाक्ये एव दोषो वक्तव्यः; न विस्तरकथायाम्। व्याचक्षाणो हि कदाचिदसम्यक्श्रवणप्रतिपत्तिशङ्कया साक्षिप्रभृतीनां पुनः पुनर्ब्रूयादिति न तत्र किञ्चिच्छलम्।

नाविषयत्वादिति चेत्; नायं गुरुर्न शिष्य इति न यत्नतः प्रतिपादनीयः, येन पुनः पुनरुच्यत इति।

पुनर्वचने निग्रह एवेति चेत्, न; साक्षिणां यत्नेन प्रतिपाद्यत्वात्, तदप्रतिपादने दोषाभिधानात्, प्रतिपाद्यस्य शिष्यत्वात्, विजिगीषुवादप्रति-

---

कार्यम्। इदं प्रतिक्षिपति—अर्थपुनरुक्तेनैव गतार्थत्वान्न[1] पृथग्वाच्यमिति। यथा ह्येकशब्दप्रतिपादितेऽर्थे तत्प्रतिपादनाय पर्यायशब्दान्तरमुपादीयमानमनर्थकम्, तथा सामर्थ्यगम्येऽप्यर्थ इति अर्थपुनरुक्तेनैवास्य संग्रह इति समुदायार्थः।

क्व पुनरेतत् प्रतिज्ञादिवचनमर्थापत्तिलभ्यं पुनरुक्तं सत् निग्रहस्थानं भवति?—इति प्रश्ने नियतपदप्रयोगे साधनवाक्ये इत्येतदेवं पक्षेण विवृणोति। अयमपि दोषो गम्यमानार्थपुनर्वचनकृतः साधनवाक्य एव नियतपदप्रयोग इति वर्तते। इदमुक्तं भवति—यदा प्राश्निकाः शब्दार्थप्रमाणप्रविचयनिपुणाः प्रेक्षवन्तोऽत्यन्तमवहितमनसश्च भवन्ति, प्रतिवाद्यपि तथाभूत एवेति वदन्ति—यदन्तरेण न साध्यसिद्धिः तदेव प्रयोक्तव्यम्, नाभ्यधिकमिति; तदायं दोषः, नान्यथा। यस्मात् करुणापरतन्त्रचेतसोऽनिबन्धनवत्सलाः प्रतिवादिनमतिदुर्लभमिव शिष्यं न्यायवर्त्मावतारयितुं यतन्ते, तत्र पुनर्वचनमपि न दोषाय।

एतदेवाह—व्याचक्षाणो हि वादी साक्षिप्रभृतीनामसम्यक्श्रवणप्रतिपत्तिशङ्कया करणभूतया सम्यक्श्रवणप्रतिपत्त्यर्थं पुनः पुनः ब्रूयादपीति। नाविषयत्वादिति। परः।

इदमेव व्याचष्टे—नायं वादी गुरुः प्रतिवादिनः। न शिष्यः, प्रतिवाद्यपि वादिनः। द्वयोरपि परस्परविजिगीषया व्यवस्थानादिति। तस्मात् न वादिना प्रतिवादी यत्नतः प्रतिपादनीयः।

नेत्याद्याचार्यः। यदि नाम प्रतिवादी न प्रतिपाद्यते यत्नेन, साक्षिणस्त्ववश्यं प्रतिपाद्याः; तद्बोधनादेव हि वादिनो जयः, अन्यथा च पराजयः—इति कथं साक्षिण एव न प्रतिपादयेत्! किञ्च अवश्यं साक्षिवत् प्रतिवाद्यपि प्रतिपाद्यः। कस्मात्? तदप्रतिपादने दोषाभिधानात्। तच्छलेन साक्षिप्रभृतयः प्रत्यवमृश्यन्ते। यदि साक्षिप्रभृतयो न प्रतिपाद्या भवेयुस्ततो यद् भवद्भिः—"परिषत्प्रतिवादिभ्यां त्रिरभिहितमविज्ञातमविज्ञातार्थं निग्रहस्थानम्" (न्या. सू० ५. २. १६) उक्तम्, तद्विरुध्यत इत्यर्थः।

यच्चोच्यते—नायं शिष्य इति, तदसिद्धम्; प्रतिपाद्यस्य शिष्यत्वात्। तत्त्वज्ञानार्थतया प्रतिपाद्य एव शिष्यः; अन्यस्य तल्लक्षणस्याभावात्। प्रतिवादी च तथाभूतः कथं न शिष्यः! किमुच्यते—नैवासौ प्रतिवादी, तत्त्वज्ञानार्थास्पर्धया व्युत्थितत्वादिति? तदयुक्तम्; पूर्वं विजिगीषुवादविप्रतिषेधात्। एवमपि नैवासौ यत्नप्रतिपाद्यः; त्रिरभिधाननियमस्य महर्षिणा कृतत्वादिति? अत आह—त्रिरभिधान-

---

१. गतत्वान्न—पा०।

षेधत्वात् त्रिरभिधानवचनात्, पुनर्वचनप्रसङ्गे समयनियमाभावाच्च।

न चेदमधिकाद् भिद्यते इति न पृथग्वाच्यम्। विनियतपदप्रयोगे हि साधनवाक्ये आधिक्यदोष इति पुनर्वचनेऽपि गतार्थस्याधिक्यमेव पदस्येति।

प्रपञ्चकथायामपि कथितैकार्थसाधनाधिकरणायां नानार्थसाधनेप्सायां[1] नानासाधनेप्सां वा श्रोतुर्हेत्वादिबाहुल्यस्य पुनर्वचनस्य दोषत्वात्। प्रतीतप्रत्ययाभावाद् हेत्वादिबाहुल्यं वचनबाहुल्यं च साधनदोष इति।

आधिक्यपुनर्वचनयोस्तुल्यदोष इति संग्रहवचनं न्याय्यम्; दोषाभावादेव गुणाभावात्। एवम्प्रकाराणां भेदानां वचने चातिप्रसङ्गादित्युक्तम्।

पर्यायशब्दकल्पो ह्यपरो हेतुः[1] प्रतिपादिते विषये प्रवर्तमानः; प्रतिपाद्यस्य विशेषाभावात्।

---

वचनादित्यादि। अनेनैतद् दर्शयति—यद्वक्ष्यति 'यदि तावत् परप्रतिपादनार्था प्रवृत्तिः, किं त्रिरभिधीयते, तथा तथा स ग्राहणीयो यथास्य प्रतिपत्तिर्भवति। अथ परोपतापनार्था, तथापि किं त्रिरभिधीयते, साक्षिणां कर्णे निवेद्य प्रतिवादी कष्टाप्रतीतद्रुतसंक्षिप्तादिभिरुपद्रोतव्यो यथोत्तरप्रतिपत्तिविमूढस्तूष्णीम्भवति' इति।

न चेदमिति। शब्दार्थयोः पुनर्वचनम्, गम्यमानार्थपुनर्वचनं च। अभेदमेव साधयति—विनियतेत्यादिना। आधिक्यं हेतूदाहरणयोर्दोषः। एकेन कृतत्वादितरस्यानर्थ्यकमिति वचनात्। पुनर्वचनेऽपि गतो ज्ञातः पूर्वेणैव शब्देनार्थो यस्योत्तरस्य पदस्य तदेवमुक्तम्। तस्याधिक्यमेव दोष इत्यधिकृतम्।

किं पुनर्नियतपदप्रयोगेऽयं दोष इत्युक्तमिति चेद्? आह—प्रपञ्चकथायाम्। अदोष इत्यभिसम्बन्धः। कस्य? हेत्वादिबाहुल्यस्य, पुनर्वचनस्य च। आदिशब्देनोदाहरणबाहुल्यग्रहणम्। कीदृश्याम्? अनिरूपितैकार्थसाधनाधिकरणायाम्। अर्थः साध्यः। अर्थ्यत इति कृत्वा साधनम्। हेतुः अधिकरणं धर्मी। अर्थसहितं साधनम् अर्थसाधनम्। मध्यपदलोपात्। एकं च तदर्थसाधनं च तथोक्तम्। तस्याधिकरणं तदनिरूपितमेकार्थसाधनाधिकरणं तस्यां प्रपञ्चकथायां प्रतिवादिना धर्मिणो जीवशरीररादेर्नैको धर्मो नैरात्म्यादिषु प्रमातुमिष्टः, अपितु अनेकः क्षणिकत्वानात्मत्वानीश्वरकर्तृत्वादिः; तथा नैकेनैव हेतुना, किन्त्वनेकेनापि तस्यामित्यर्थः। एतदेव यथाक्रमं ब्रूते—नानार्थसाधनेप्सायां नानासाधनेप्सायां वा श्रोतुरिति। पूर्वकः साधनशब्दो भावसाधनत्वात् सिद्धिवचनः, उत्तरस्तु करणसाधनत्वाद्धेतुवचनः। तस्माद्धेत्वादिबाहुल्य वचनबाहुल्यं साधनेन विनियतपदे दोषः। कस्मात्? प्रतीतप्रत्ययाभावात्[1]। तुल्यो दोष इति कृत्वा संग्रह एव न्याय्यः। अधिकमेव वा वक्तव्यं पुनरुक्तमेव चेत्यर्थः। अनयोरेकस्मिन् द्वितीयस्यान्तर्भावात्।

कथं पुनः शब्दपुनरुक्तेऽधिकस्यान्तर्भावः? इत्याह—पर्यायशब्दकल्पो ह्यपरो द्वितीयो हेतुरेकहेतुप्रतिपादिते विषये प्रवर्तमानः। किं कारणम्? प्रतिपाद्यस्य विशेषाभावात्।

---

१. लीनार्थ०-रा०। १. ह्यपरोक्तेतु-रा०। १. प्रतीताय्याभावात्। प्रत्य-रा०।

अर्थः पुनः प्रतिपादनान्न भिद्यते ॥ १४ ॥

१५. यत्पुनरुक्तम्—"अनुवादे त्वपुनरुक्तम्; शब्दाभ्यासादर्थविशेषोपपत्तेः। यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" (न्या० १.१.३९) इति। प्रतिज्ञाया एवं गम्यमानार्थाया वचनं पुनर्वचनम्, किं पुनरस्याः पुनर्वचनमित्युक्तं निगमनम् ॥ १५ ॥

१६. विज्ञातस्य पर्षदा त्रिरभिहितस्याप्रत्युच्चारणमननुभाषणम् ( न्या० सू० ५. २. १७ )। "विज्ञातवाक्यार्थस्य पर्षदा त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमप्रत्युच्चारयन् किमाश्रयं परप्रतिषेधं कुर्याद्" इति।

उत्तरेणावसानान्नेदं निग्रहस्थानमिति चेत्, स्यादेतत्; उत्तरेण गुणदोषवता मूढामूढत्वं गम्यते इति किमुच्चारितेन ! अस्ति हि कश्चिद् उत्तरेण समर्थो न प्रत्युच्चारणेन, नासौ तावता निग्रहमर्हेदिति; नोत्तरविषयापरिज्ञानाद्। यद्ययं न प्रत्युच्चारयति, निर्विषयमुत्तरं प्रसज्येत। अथोत्तरं ब्रवीति, कथं नोच्चारयति ! तदिदं व्याहतमुच्यते-'नोच्चारयति, उत्तरं च ब्रवीति' इति। अप्रतिज्ञानाच्च न चेदं न प्रतिज्ञायते—पूर्वं सर्वमुच्चारयितव्यं पश्चादुत्तरमभिधातव्य-

---

अर्थस्य पुनरुक्तं तर्हि कथमधिकेऽन्तर्भवति ? इत्याह—अर्थः पुनः प्रतिपादनान्न भिद्यते इति। अर्थशब्देनार्थपुनरुक्तमुपलक्षयति। पुनः प्रतिपाद्यतेऽनेनेति पुनः प्रतिपादनं हेतूदाहरणाधिकमेव। इदमुक्तं भवति—स्फुटमेवास्य उदाहरणाधिकेऽन्तर्भावः। तथा हि—साधर्म्यवति प्रयोगे वैधर्म्योदाहरणस्य अप्रयोगोऽर्थपुनरुक्तस्योदाहरणमुक्तम् ॥ १४ ॥

यत्पुनरुक्तमेवाद्यपवादप्रतिषेधः सुज्ञानः ॥ १५ ॥

१६. विज्ञातो वाक्यार्थो यस्य त्रिरभिहितस्य तत् तथा। विशेषणसमासो वा, विज्ञातश्चासौ वाक्यार्थश्चेति त्रिरभिहितस्य वादिनेति प्रतिपत्तव्यम्। प्रतिवादिना यदप्रत्युच्चारणमिति सम्बन्धनीयम्। त्रिवचनं सकृदभिहितस्याननुभाषणेऽपि न निग्रह इति ज्ञापनार्थम्। अप्रत्युच्चारणं च शब्दद्वारेण, अर्थद्वारेण वा। निग्रहस्थानत्वे कारणमाह—अप्रत्युच्चारयन् किमाश्रयं परपक्षे प्रतिषेधं ब्रूयादिति। न विषयं दूषणाभिधानं नास्तीत्यर्थः। इदं त्वयोक्तं मतिं कृत्वा दूषणं वाच्यम्। एवं दूषणवाक्यमपि साधनवादिना प्रत्यनुभाष्य परिहर्तव्यम्, अतो द्वयोरपि निग्रहस्थानम्।

अत्र भारद्वाजोऽन्यपक्षेणाक्षेपं करोति—उत्तरेणावसानात् परिज्ञानात् नेदं निग्रहस्थानमिति चेदिति। इदं वाक्यं व्याचष्टे—स्यादेतदित्यादिना।

नोत्तरविषयापरिज्ञानादिति। स एव प्रतिविधत्ते। यद्ययमित्याद्यस्यैव विभागः। अप्रतिज्ञानाच्चेति। स एव। उत्तरं चाश्रयाभावे परपक्षोपक्षेपाभावे सत्ययुक्तमिति युक्तमप्रत्युच्चारणे निग्रहस्थानमिति। एतावान् परकीयो ग्रन्थः।

मिति। अपि तु यथा कथञ्चिदुत्तरं वाच्यम्, उत्तरं चाश्रयाभावेऽयुक्तमिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति।

यदि नाम वादी स्वसाधनार्थविवरणव्याजेन प्रसङ्गादपरं घोषयेद्, विवादास्पदं च जिज्ञासितमर्थमात्रमुक्त्वा प्रतिज्ञादिष्वर्थविशेषपरम्परया अपरानर्थानुपक्षिप्य कथां विस्तारयेत्।

तच्च सर्वं यदा नानुवक्तुं शक्नुयात्, कस्तस्य विवादाश्रयार्थमात्रोत्तरवचने[1] सामर्थ्यविघातः? येन वादिवचनानुभाषणं निग्रहस्थानमुच्यते। तस्मान्न सर्वां वादिकथामननुभाषमाणो नोत्तरे समर्थः।

---

अत्राचार्यो दूषणं वक्तुमारभते—यदि नाम वादी स्वसाधनार्थस्य विवरणव्याजेन प्रसङ्गादपरापरं घोषयेत्। यथोदाहृतं प्राक्—तत्र करणभुवनानि बुद्धिसत्कारणपूर्वकाणीति प्रतिज्ञाशरीरादिव्याख्यानच्छद्मना सकलं वैशेषिकतन्त्रं घोषयेदिति। तथा जिज्ञासितमर्थमुक्त्वा कथां विस्तारयेद्। यदि नाम वादीति वर्तते। किं कृत्वा विस्तारयेद्? इत्याह—प्रतिज्ञादिष्वर्थविशेषणपरम्परयाऽपरान् सिद्धयनुपयोगिनोऽर्थानुपक्षिप्य। यथा निर्दर्शितं पूर्ववत्—'नित्यः शब्दोऽनित्यः शब्दः' इति विवादे जैमिनीयः प्रमाणयति–द्वादशलक्षणेत्यादिना। व्याचष्टे च द्वादश लक्षणानि। यथा वा आक्षपादा एवं कुर्वन्ति—'किममी सर्वे संस्काराः क्षणिका नो वा' इति विवादे रूपत्वादिसामान्याश्रयत्वात् तदाश्रयास्तद्विषयाश्च प्रत्यक्षादयः प्रत्ययाः स्वात्मलाभानन्तरप्रध्वंसिनो न भवन्ति; समानानामसमानजातीयद्रव्यसंयोगविभागजनितशब्दकार्यशब्दाभिधेयत्वात्, प्रागभावादिवदिति।

ननु च प्रतिज्ञादिष्वित्यत्रादिशब्देन किं गृह्यते; न तावद्धेतूदाहरणे, तन्मात्रमुक्त्वेति वचनात्। न चापरः कश्चित् प्रस्तुतोऽत्रेति? नैष दोषः; यतो हेत्वादिमात्रमप्युक्त्वेति द्रष्टव्यम्। तेन हेत्वादिनामेवादिग्रहणेन आक्षेप इति केचित्। अपरे पुनराहुः—अस्थानमेवेदमाशङ्कितं क्त्वाप्रत्ययनिर्देशेऽत्र। यस्मादयमत्रार्थो यत्र प्रतिवादिना जिज्ञासितमर्थमात्रमन्यविशेषणरहितमक्षणिकत्वादिकं तदुक्त्वा वादी 'अहमेतत् साधयामि' इत्युत्तरकालप्रमाणमारचयन् प्रतिज्ञादिष्वर्थविशेषणपरम्परयापरानर्थानुपक्षिप्य कथां विस्तारयेदिति।

तच्चेति। प्रतिज्ञादिविशेषणपरम्परया यदाप्रस्तुतमेव नाटकाख्यायिकाघोषणकल्पं वादिनोद्ग्राहितम्, तदा कस्तस्य विवादाश्रयश्चासौ अर्थमात्रश्चाक्षणिकत्वादिकं तस्योत्तरवचने सामर्थ्यविघातः! नैवेत्यर्थः। तस्मान्न वादिकथामननुभाषमाणः प्रतिवाद्युत्तरदाने[2] समर्थः।

---

१. श्रयाथमत्रो०–रा०। २. ०युत्तरवाद्येन—०पा०।

यद्वचननान्तरीयका जिज्ञासितार्थसिद्धिः, यथा पक्षधर्मता व्याप्तिप्रसाधनमात्रम्, न तत्रापि प्रसङ्गान्तरोपक्षेपः; तदवश्यं साधनाङ्गविषयत्वाद् दूषणमेवोपदर्श्यत एव। तत्रापि न सर्वम्। प्रागनुक्रमेणोच्चारयितव्यम्, पश्चाद् दूषणं वाच्यम्; द्विरुच्चारणप्रसङ्गात्[1]। दूषणविषयोपदर्शनार्थेऽनुभाषणे वादिवचनानुक्रमघोषणं व्यर्थमिति न कार्यमेव दूषयता 'अस्यायं[2] दोषः' इति नान्तरीयत्वान् प्रतिदोषवचनं विषयोपदर्शनं क्रियते एव।

न हि सर्वविषयोपदर्शनं कृत्वा युगपद् दोषः शक्यतेऽभिधातुम्; प्रत्यर्थं दोषभेदात्। तस्माद् यं पदार्थं दूषयति, स एव तद्दूषणविषयस्तदा प्रदर्शनीयः, नापरस्तु; दूषणेऽपरोपदर्शनस्यासम्भवात्। तस्मिन् दूषिते पुनरन्योऽर्थोऽपरदोषविषय इत्ययमनुभाषणे दूषणे च न्यायः।

सकृत् सर्वानुभाषणेऽपि दोषवचनकाले पुनर्विषयः प्रदर्शनीय एव, अप्रदर्शिते दोषस्य वक्तुमशक्यत्वात्। तथा च द्विरनुभाषणं कृतं स्यात्। तत्र

---

किन्तु यद्वचननान्तरीयका जिज्ञासितार्थसिद्धिस्तदवश्यमुपदर्श्यत एवेति सम्बन्धः। कस्मात्? साधनाङ्गविषयत्वात् दूषणस्य। परोपनीते हि साधने दूषणं प्रवर्तत इति सम्बन्धः। किन्नान्तरीयका पुनर्जिज्ञासितार्थसिद्धिः? इत्याह—यथा पक्षधर्मता व्याप्तिप्रसाधनमात्रमिति। व्याप्तिः प्रसाध्यतेऽनेनेति व्याप्तिप्रसाधनम्, बाधकप्रमाणोपदर्शनम्। किमियमित्यपि साधनप्रयोगेऽर्थान्तरोपक्षेपः कर्तव्यः? नेत्याह—न, तत्रापि प्रसङ्गान्तरोपक्षेप इति। नैरर्थक्यादिति मतिः। तावन्मात्रमुपदर्श्यते, किं प्रागनुक्रमेण, पश्चात्तु दूष्यते? नेत्याह। तत्रापि दूषणविषयोपदर्शनार्थेऽनुभाषणे न सर्वं यावदुपन्यस्तं वादिना तद्दूषणाभिधानात्। प्रागनुक्रमेणोच्चारयितव्यम्। कस्मात्? द्विरुच्चारणप्रसङ्गात्[3]। त्रिरुच्चारणप्रसङ्गमेव प्रतिपादयितुमादिप्रस्थानमाचरति—दूषणेत्यादिना। यदि वचनानुक्रमघोषणं न करोति निर्विषयमिदानीं दूषणं प्रसक्तम्? इत्याह—नान्तरीयकत्वाद् दूषयता विषयोपदर्शनं क्रियत एव। कथम्? प्रतिदोषवचनम्। दोषवचनं दोषवचनं प्रति। यो यो दोषो भण्यते तस्य तस्य विषयः कथ्यत इत्यर्थः। इदमेवाह—अस्य वाद्युक्तस्यायं दोषः इति।

किं पुनः कारणं सर्वं प्रत्युच्चार्य युगपद् दूषणं नोच्यत इति चेद्? आह—नहीत्यादि। कुतः? प्रत्यर्थं दोषभेदात्। विषयवद् भिद्यते दोष इति यावत्।

एवमारचितादिप्रस्थानो द्विरुच्चारणप्रसङ्गं प्रदर्शयति—सकृदेवाप्रघुष्टो सर्वानुभाषणेऽप्यप्रदर्शिते[4] विषयदोषस्य वक्तुमशक्यत्वात्।

---

१. विरुद्धो०–रा०।　　२. स्यादयं–रा०।

३. द्विरुच्चारण०—रा०।　　४. ०णेऽस्य प्रदर्शिते–रा०।

प्रथमं सर्वानुक्रमानुभाषणं निष्प्रयोजनम् ; दूषणवादिना दूषणे वक्तव्ये यत्र[1] तत्रोपयुज्यते तस्याभिधानमदोषोद्भावनम् , द्विरुक्तिश्च—इति सकृत्सर्वानुभाषणं पराजयाधिकरणं वाच्यम् ।

तथास्त्विति चेत्; स्यादेतत् । उक्तमेतदर्थान्तरं निग्रहस्थानमिति । तत्र साधने यतः कुतश्चित् प्रसङ्गादिना नान्तरीयकाभिधानं वादिनोऽर्थान्तरगमनमेवेति स निग्रहार्हः । न कश्चित् कचित्[2] क्रियमाणप्रसङ्गो न प्रसज्यते, नापि तत् तस्यानुभाषणीयम् । न चेदमप्यस्माभिरनुज्ञायते—सर्वं प्राक् सकृद्वक्तव्यम् , पश्चाद् दूषणमिति; किन्तु दूषयताऽवश्यं विषयो दर्शनीयः; अन्यथा दूषणावृत्तेरिति ।

एवं तर्हि नाननुभाषणं पृथग्निग्रहस्थानं वाच्यम् , अप्रतिभया गतत्वात् । "उत्तरस्य ह्यप्रतिपत्तिरप्रतिभा" ( न्या० ५. २. १९ ); न चोत्तरविषयमप्रदर्शयन् उत्तरं प्रतिपत्तुं समर्थः । न ह्यनाक्षिप्तानुत्तरप्रतिपत्तिकमननुभाषणम् ,

---

केवलमिदं निःप्रयोजनम्, पराजयाधिकरणं क्वेति[3] ? आह—दूषणवादिना दूषणे वक्तव्ये सति यत्र सर्वानुक्रमभाषणं तत्र परपक्षक्षोभेनोपयुज्यते तस्याभिधानमिदं द्विरुक्तपदोद्भावनं चेत्येवं व्यत्यासेन पदविन्यासः कार्य इति । तस्मात् सर्वानुक्रमभाषणं पराजयाधिकरणं वाच्यम् ।

अत्रेदानीमाक्षपादः सर्वमिदं दूषणमनभ्युपगमेनैव पूर्वपक्षस्यास्माभिः प्रतिव्यूढमिति मन्यमानोऽभ्यनुजानाति—तथास्त्विति ।

स्यादेतदित्येव व्याचष्टे । यतः कुतश्चिदिति । साधनार्थविवरणस्य व्याजेन प्रतिज्ञादिष्वर्थविशेषणपरम्परोपक्षेपेण चाप्रसङ्गात् नान्तरीयकाभिधानं रूपसिद्धिनामादिव्याख्यानकल्पत्वात् वादिनोऽर्थान्तरगमनमेवेति स तेन निग्रहार्हः ।

प्रासङ्गिकं ब्रुवाणः किमिति निगृह्यत इति चेद् ? आह—नहि कश्चित् क्वचित् क्रियमाणप्रसङ्गो न प्रयुज्यते । यथोक्तं प्राक्—नैरात्म्यवादिनस्तत्साधने नृत्यगीतादेरपि प्रसङ्ग इति । नापि तद् यद्वादिना प्रसङ्गत्वेनाहितम् । तस्य प्रतिवादिनोऽनुभाषणीयमनुप्रयुज्यमानत्वं नैवानुभाषणमर्हतीत्यर्थः । तदेतेन यत् पूर्वमुक्तम्—यदि नाम वादी स्वसाधनार्थविवरणव्याजेनेत्यादि, तदभ्यनुज्ञातम् । सम्प्रति यदुक्तं तत्रापि न सर्वं क्रमेणोच्चारयितव्यम् । पश्चाद् दूषणं वाच्यम् । द्विरुच्चारणप्रसङ्गादिति तदनुजानाति—न चेदमप्यस्माभिरित्यादिना ।

आचार्य आह—यदि भवद्भिरपीदमेवाभीष्टम्, एवं तर्हि नाननुभाषणं पृथग्वच्यम् । कस्मात् ? अप्रतिभया गतत्वात्[4] । गतत्वमेव प्रतिपादयति—"उत्तरस्य ह्यप्रतिपत्तेरप्रतिभा" ( न्या० सू० ५. २. १८ ) । ततः कथं गतम् ? इत्याह—न चोत्तरविषयमप्रदर्शयन् प्रतिवादी उत्तरं प्रतिपत्तुं ज्ञातुं अभिधातुं वा समर्थः । किमिति न शक्तः ? इत्याह—नहीत्यादि । अनुत्तरप्रतिपत्तिः नोत्तरा[5] प्रतिपत्तिरित्यर्थः । सा नाक्षिप्ता येनाननुभाषणेन तत्तथा ।

---

१. यत्र–रा० ।  २. तत्कथित–रा० ।
३. चेति–रा० ।  ४. गत्वात्–रा० ।  ५. चोत्तरप्रतिपत्तिर–रा० ।

तेनाननुभाषणस्य व्यापिकायामप्रतिभायां विहितं निग्रहस्थानत्वमननुभाषणम्। गव्यपरामृष्टतद्भेदायां[1] विहितमिव सास्नादिमत्त्वं बाहुलेयेऽपि[2]। तस्मादप्रतिभैव निग्रहाधिकरणत्वेन वा नाननुभाषणम्।

कश्चायं समयनियमस्त्रिरभिहितस्याननुभाषणमिति? यदि तावत् परप्रत्यायनार्था प्रवृत्तिः, किं त्रिरभिधीयेत? तथा तथा स ग्राहणीयो यथाऽस्य प्रतिपत्तिर्भवति! अथ परोपतापनार्था, तदापि किं त्रिरभिधीयेत? साक्षिणां कर्णे निवेद्य प्रतिवादी कष्टाप्रतीतद्रुतसंक्षिप्तादिभिरुपद्रोतव्यः; यथोत्तरप्रतिपत्ति-

प्रतिषेधद्वयाद् विध्यवसीय आक्षिप्तोत्तराप्रतिपत्तिकमेवेति। एतदुक्तं भवति—यो हि नामोत्तरं प्रतिपद्यतेऽतोऽवश्यं तद्विषयमप्यवैति; 'अस्येदं दूषणम्' इति परिज्ञानात्। परिज्ञातविषयश्च कथं सचेतनो न तमनुभाषते! तस्माद् यत्राननुभाषणं तत्राप्रतिभया भाव्यमिति सा तस्य व्यापिका, तरुरिव खदिरस्य, तस्याश्च विहितं निग्रहस्थानत्वं व्याप्येऽननुभाषणे तदाक्षिपतीत्येतन्निगमनव्याजेनाह—तेनेत्यादि। अत्रैव दृष्टान्तं ब्रूते—गव्यपरामृष्टतद्भेदायां सामान्यभूतायां विहितमिव सास्नादिमत्त्वं तद्व्याप्तबाहुलेयेऽपि। लब्धमिति वर्तते। प्रयोगः पुनः—यदेकविधानसामर्थ्यादनुक्तमपि लभ्यते। ननु भूयः प्रेक्षापूर्वकारिणा विधातव्यम्; तद्यथा—गोजातौ सास्नादिमत्त्वविधानसामर्थ्यात् प्रतिलब्धं तद्भेदेषु सास्नादिमत्त्वम्। अप्रतिभानिग्रहत्वविधानसामर्थ्यात् प्रतिबद्धश्चाननुभाषणनिग्रहस्थानत्वमिति व्यापकविरुद्धोपलब्धिः।

ननु च विषयं विषयविषयं[3] च[3] प्रपञ्चोत्तरं प्रतिपद्यमानोऽप्यतिभयकम्पादिभिर्व्याकुलीकृतचेताः प्रतिवादी नानुभाषते, स विषयोऽननुभाषणस्याप्रतिभयानालीढः, तत्कथं सा तस्य व्यापिका यतोऽयं हेतुः सिद्धो भविष्यति? नैव सम्भवात्। नहि विषयं विषयविषयं चोत्तरं प्रतिपद्यमानः कुतश्चिद् बिभेति, वेपते वा; तदज्ञानकृतत्वाद् भय-वेपथु-स्वेदादीनाम्। अथ तथाभूतोऽपि भयादिभिराकुलीक्रियते? स तर्ह्यादावेव तथाभूतो वादमपि कर्तुं नैव धावति। अपि च—यदि परं बाला एवम्भूता भवन्ति, न च बालव्यवहारानधिकृत्य न्यायशास्त्राणि प्रणीयन्ते। यद्वा—एवमप्यप्रतिभायामन्तर्भावो नैव व्याहन्यते; यस्माद् विविधोत्तरा प्रतिपत्तिः उत्तराज्ञानरूपा, उत्तरानभिधानरूपा च। तस्मात् यत् किञ्चिदेतत्।

अथ परोपतापनार्था, तथापि किं त्रिरभिधीयते। किं तर्हि कार्यम्? इत्याह—साक्षिणामुत्कोचोपसंक्रमं कर्णे निवेद्य—'अयमत्रार्थो मया विवक्षितः' इत्युत्तरकालं प्रतिवादी अनाथो वराकः कष्टाप्रतीतद्रुतसंक्षिप्तादिभिः। शब्दैरिति शेषः। उपद्रोतव्यः। कस्माद्? दुर्भणाः अप्रतीताः सिंहलभाषादिवदसंकेतिकाः। द्रुताः शीघ्रमुच्चारिताः। संक्षिप्ताः सूत्रवण्टादिवद् वर्तुलीकृतार्थाः। आदिग्रहणेन गोपितार्थानां ग्रहणम्। यथा–सत्त्वादुर्वायुस्ते दिश्यायोतायां चारात्यस्वन्तं पक्षे नोलंवं विज्ञायैः वेष्टतोयास्पृष्टेशः शम्' इति।

१. न-मेवाग (?)–रा०। २. बाहुल्येपि–रा०। ३–३. विषयश्च–रा०।

विमूढस्तूष्णीम्भवति ! न हि परोपतापनक्रमे कश्चिन्न्यायः, येन कष्टाप्रतीत-प्रयोगद्रुतोच्चारिता निवार्यन्ते, त्रिभिरभिधानं वा विधीयते। न च परोपतापाय सन्तः प्रवर्तन्ते, शास्त्राणि वा प्रणीयन्ते इत्यदो वक्तव्यम् ! तस्मात्तावद्वक्तव्यम् यावदनेन न गृहीतम् , न त्रिभिरेव ।

अग्रहणसामर्थ्ये प्रागेव वा परिच्छिन्नसामर्थ्येन परिहर्तव्यः पुनरनुप्रति-बोध्य इति ॥ १६ ॥

१७. "अविज्ञातमज्ञानम्" (न्या० ५. २. १७)। "विज्ञातं पर्षदा प्रतिवादिना यदविज्ञातं तदज्ञानं नाम निग्रहस्थानम्। अर्थे खल्वविज्ञाते न तस्य प्रतिषेधं ब्रूयादिति ।"

---

यथा सम्प्रति वादी उत्तरप्रतिपत्तौ विमूढः तूष्णीम्भवति । "पर्षत्प्रतिवादिभ्यां त्रिरभिहितमविज्ञातमविज्ञातार्थम्" ( न्या० सू० ५. २. ९ ) इत्यत्र श्लिष्टक-ष्टादिशब्दप्रयोगस्य मुनिना निवारितत्वात् नैवमन्यायं कर्तुं लभत इति चेद् ? आह—नहि परोपतापनक्रम[1] इत्यादि । किञ्च—न परोपतापनाय सन्तः प्रवर्तन्ते शास्त्राणि वा प्रणीयन्ते तैरित्युक्तम् "दुर्जनविप्रतिपत्त्यधिकरणे सतां शास्त्राप्रवृत्तेः" इत्यत्र। यतश्च परानुपतापयितुं न सन्तः प्रवतन्ते तस्माद् तावद् वक्तव्यं याव-दनेन न गृहीतम् । न त्रिभिरेव[2] । वक्तव्यमित्यधिकृतम् ।

अथ वादिना शतधा पुनः पुनरभिधाने प्रतिवाद्यतिजडत्वात् गृहीतुं न शक्नो-तीति निश्चितम्, तदा अग्रहणसामर्थ्ये कथञ्चिन्निश्चिते साधनप्रयोगात् प्रागेव परिहर्तव्यः—नानेन सहोद्ग्राहयामीति परिच्छिन्नमसामर्थ्यम्[3] । ग्रहणेऽतिजाड्यापरना-मकप्रतिवादिसम्बन्धि येन वादिना स तथा । कथं तथा परिहरन्नशक्तः शंक्यते ? इत्याह—परान्[4] साक्षिणः प्रबोध्य नायं शक्तो वाक्यार्थं बोद्धुम्, वस्तु त्वेवं व्यवस्थितमिति ॥ १६ ॥

१७. अविज्ञातं चाज्ञानमिति । भावे निष्ठाविधानात् साधनवाक्यार्थापरिज्ञानं निग्रहस्थानम् । तत एव भाष्ये टीकाकृतो विवृण्वन्ति—"वाक्यार्थविषयस्य विज्ञान-स्यानुत्पत्तिरज्ञानम्" इति ।

अस्तु वा कर्मण्येव निष्ठाविधानम्, तथापि वाक्यार्थविषयज्ञानानुत्पत्त्या विशे-षितं वादिप्रयुक्तं वाक्यमेव प्रतिवादिनो निग्रहस्थानमिति न किञ्चिद् व्याहन्यते ।

अन्ये पुनर्विवरणेऽर्थग्रहणं पश्यन्तः सूत्रेऽप्यर्थग्रहणं भ्रान्त्या पठन्ति । "अवि-ज्ञातार्थं चाज्ञानम्" इति सोऽन्येषां पाठः । विज्ञातार्थं साधनवाक्यं परिषदा तस्य प्रतिवादिना यदविज्ञातमनवबोधः, तदज्ञानमित्येवं भावपक्षेऽक्षरविन्यासः । कर्म-पक्षे तु 'तस्य' इति नाध्याहर्तव्यम्, एकवाक्यतयैव तु व्याख्यातम् । विज्ञातं पर्ष-देति । किमर्थम् ? पर्षदाप्यविज्ञाते वादिन एवाविज्ञातार्थं निग्रहस्थानं भवतीति ज्ञापनाय ।

---

१. परोपताप०—रा० । २. त्रिरेव—रा० ।
३. परिच्छिन्नमसामर्थं—प० । ४. परागन—पा० ।

एतदप्यननुभाषणप्रदत्रेति तत्रैव गम्यत्वादवाच्यम्। यथाऽननुभाषणेऽप्रदर्शितविषयत्वादुत्तरप्रतिपत्तिरशक्येति अनुत्तरप्रतिपत्त्यैव[1] निग्रहस्थानत्वम्; उत्तरविषयप्रदर्शनप्रसङ्गमन्तरेणानुभाषणस्य वैयर्थ्यात्।

तथाऽज्ञानेऽप्युत्तराप्रतिपत्त्यैव निग्रहस्थानत्वमजानानः कथमुत्तरम्, उत्तरविषयं च ब्रूयादिति विषयाज्ञानमुत्तराज्ञानं च निग्रहस्थानम्; अन्यथा[2] एवं सति अप्रतिभया[2] निर्विषयत्वात्।

अनवधारितार्थो हि नानुभाषते, अननुभाषमाणो विषयमुपदर्श्योत्तरं प्रतिपत्तुं न शक्नुयादित्युत्तरं न प्रतिपद्येत; ज्ञातोत्तरतद्विषयस्योत्तराप्रतिपत्तेरसम्भवात्। उभयमेतदुत्तराप्रतिपत्तेः कारणमिति।

---

निग्रहस्थानत्वे कारणमाह—अर्थे खल्वविज्ञाते प्रतिवादी न तस्य प्रतिषेधं ब्रूयादिति।

अपरे तूत्तरेण दूषणग्रन्थेन सहैतत् सम्बध्नन्ति, तच्चायुक्तम्; भाष्यवार्त्तिकग्रन्थत्वादस्य।

गम्यत्वमेव साधयति—यथाऽननुभाषणे अनुत्तरप्रतिपत्त्यैव निग्रहस्थानत्वम्। कथमुत्तरा प्रतिपत्तिः ? इत्याह—अप्रदर्शितविषयत्वात्। प्रतिवादिनोत्तरप्रतिपत्तिरशक्येति कृत्वाऽप्रदर्शितो विषयो येनेति विज्ञेयम्। विशेषणसमासो वा। तथा हि—दूषणस्य विषयख्यापनार्थमनुभाषते, तच्च[3] परित्यज्य यद्यदेव वादिनाऽनुद्ग्राहितमालजालमनुभाषते, तदानीमुत्तरविषयप्रदर्शनप्रसङ्गमन्तरेण तथाभूतस्यानुभाषणस्य वैयर्थ्याद्। अशक्येति वर्तते। अनुग्रहप्रतिपत्त्यैव निग्रहस्थानत्वमिति वा।

दार्ष्टान्तिकमुपसंहरति—तथा अज्ञानेऽप्युत्तराप्रतिपत्त्यैव निग्रहस्थानत्वमिति। यस्मादजानन् प्रतिवादिदूषणतद्विषयौ कथमुत्तरविषयं च ब्रूयात्। उत्तरविषयो दूष्यः। क्वचित्तु पाठः—कथमुत्तरमुत्तरविषयं च ब्रूयादिति। अत्रैवं पदसम्बन्धः[4]—अजानन्नुत्तरविषयं च कथमुत्तरं ब्रूयादिति। तस्माद् विषयाज्ञानमुत्तराज्ञानं च निग्रहस्थानमप्रतिभयैव गम्यत्वात्। अवाच्यमिति वर्तते। किं कारणम्? अन्यथैवमनिष्प्रमाणे सति अप्रतिभया निर्विषयत्वात्।

कथं निर्विषयत्वम्? इत्याह—अनवधारितार्थो हीत्यादि। अनवधारितोऽर्थः पूर्वपक्षस्योत्तरस्य च येन प्रतिवादिना स नानुभाषेत, अननुभाष्यमाणश्च विषयमप्रदर्श्योत्तरं प्रतिपत्तुं न शक्नुयादित्यत उत्तरं न प्रतिपद्येत। न जानीयान्नाभिदध्याद्वा। कस्माद् उत्तरविषययोरज्ञाने सत्युत्तराप्रतिपत्तिरिति? अत आह—ज्ञातोत्तरतद्विषयस्योत्तराप्रतिपत्तेरसम्भवादिति[5]। ज्ञाता उत्तरतद्विषयौ[6] येनेति वृत्तः।

तस्मादुभयमप्येतदुत्तराज्ञानं विषयाज्ञानं च प्रतिपत्तेरप्रतिभापरपर्यायायाः कारणम्।

---

१. अनुत्त(र)—रा०। २-२. मन्येथा अतिप्रतिभासा—रा०।
३. तत्च—रा०। ४. यदसम्बन्धः—रा०।
५. ज्ञानोत्तर०—रा०। ६. तद्विषयो—रा०।

तदभावे प्रतिपत्तिर्भवत्येवेति तयोः पृथग्वचनेऽप्रतिभायाः को विषय इति वक्तव्यम्! निर्विषयत्वादवाच्यैव[1] स्यात्।

नोत्तराज्ञानमज्ञानम्, किं तर्हि? विषयाज्ञानम्[2]; ज्ञाते हि विषये उत्तराज्ञानात् तन्न प्रतिपद्येतेति। अस्ति विषयोऽप्रतिभाया इति चेत्? एवं तर्हि अननुभाषणं निर्विषयम्; अज्ञानेनापेक्षात्। न हि विषयं सम्यक् प्रतिपद्यमानः कश्चिन्नानुभाषेतेति नाननुभाषणं पृथग्वाच्यम्, उत्तराज्ञानस्य चापेक्षत्वात्।

विषयाज्ञानेनोत्तराज्ञानमप्याक्षिप्तमेव। न हि विषयमजानन्नुत्तरं जानातीति नैवाप्रतिभाया विषयोऽस्ति।

ज्ञातेऽपि विषये पुनरुत्तराज्ञानमप्रतिभाया विषय इति चेत्; एवं तर्हि विषयोत्तराज्ञानयोरपि प्रभेदान्निग्रहस्थानान्तरालवाच्यानि।

यथाऽज्ञानस्य विषयो ज्ञानमुत्तराज्ञानमिति प्रभेदादसत्यपि गुणातिशये

---

ननु चोत्तराज्ञानमेवाप्रतिभा, तत् कथं सैवात्मनः कारणत्वेनोपदिश्यते? न; उत्तरानभिधानलक्षणाया अप्रतिभाया[3] विवक्षितत्वात्। तदभावे इति। तयोरुत्तरविषायाज्ञानयोरभावे सति प्रतिपत्तिरभिधानमुत्तरस्य भवत्येव इति तस्मात् तयोर्विषयाज्ञानोत्तराज्ञानयोरज्ञानसंज्ञितेन निग्रहस्थानेनाप्रतिभानिग्रहस्थानात् पृथग्वचने सति अप्रतिभायाः को विषय इति वक्तव्यम्। न चेद् विषयो भण्यते, तदा निर्विषयत्वादवाच्यैव स्यादप्रतिभा। तयोरज्ञानानुभाषणयोः पृथग् वचने इत्यन्ये व्याचक्षते।

अज्ञानाप्रतिभयोर्विषयभेदव्यवस्थापनाय परः प्राह—नोत्तरज्ञानमज्ञानमुच्यते, यतोऽप्रतिभानिर्विषयत्वादवाच्यं भवेत्। किं तर्हि? अज्ञानमित्याह—विषयाज्ञानम्। एवमपि कथमप्रतिभा विषयवती भवति? इत्याह—ज्ञाते विषये सत्युत्तरकालमुत्तराज्ञानात्। प्रतिवादी तदुत्तरं न प्रतिपद्येत न ब्रूयात्। अतोऽस्ति विषयोऽप्रतिभायाः अज्ञानाक्रान्तः।

एवमप्यवाच्यत्वान्न मुच्यसे? इत्याह–एवं तर्हीत्यादि। अज्ञानेनानुभाषणस्याक्षेपमेव साधयति। नहि विषयं सम्यक् प्रतिपद्यमानः कश्चित् सचेतनो नानुभाषेतेति नानुभाषणमज्ञानात् पृथग्वाच्यम्। अपि चैवमप्रतिभाप्यनुभाषणवदज्ञानात् पृथग् न वाच्या? इत्याह—उत्तराज्ञानस्य चाक्षेपादिति।

इदं व्याचष्टे—विषय इत्यादिना।

ज्ञाते विषय इत्यादि परः। इदमुक्तं भवति—द्विधोत्तराज्ञानम्—विषयाज्ञानसहचरं च, विषयज्ञानसहचरं च। तत्राद्यस्य विषयाज्ञानेनाक्षेपेऽप्युत्तरमनाक्षिप्तमेव। ततो द्वितीयापेक्षया अप्रतिभायाः पृथगुपादानमिति।

अनवस्थैव निग्रहस्थानानां प्रसज्यत इत्याह—एवं तर्हीत्यादि। यथेत्यादि।

---

१. ०दवाच्यत्वाच्च–रा०। २. विषयज्ञानं–रा०। ३. अप्रतिभासाया—रा०।

निग्रहस्थानान्तरव्यवस्था क्रियते, तथाऽज्ञानयोरपि सर्वोत्तराज्ञानमित्यादि[1] प्रभेदान्निग्रहस्थानान्तराणि किं नोच्यन्ते। न चोभयस्याप्यज्ञानस्य संग्रह-वचने दोषः, गुणस्तु लाघवसंज्ञः स्यादिति संग्रहवचनं न्याय्यम्। तस्मादननु-भाषणाज्ञानयोरप्रतिभाविषयत्वान्न पृथग्वचनम्।

अपि च—न पूर्वोत्तरपक्षवादिनो हेत्वाभासाप्रतिभाभ्यामन्यन्निग्रहस्थानं न्याय्यमस्ति; तदुभयवचनेनैव सर्वमुक्तमिति। तदुभयाक्षिप्तेषु प्रभेदेषु गुणा-तिशयमन्तरेण वचनादरेऽतिप्रसङ्गात्[2] व्यर्थः प्रपञ्च इति ॥ १७ ॥

१८. "उत्तरस्याप्रतिपत्तिरप्रतिभा" ( न्या० ५. २. १८ )। परपक्षप्रतिषेधे उत्तरं यदा न प्रतिपद्यते, तदा निगृहीतो वक्तव्यः।"

साधनवचनान्तरं प्रतिविषयमुत्तरे व्यर्थम्, तदज्ञानक्रमघोषणश्लोक-पाठादिना कालं गमयन् कर्तव्याप्रतिपत्त्या निग्रहार्ह इति न्याय्यं निग्रहस्थान-मिति ॥ १८ ॥

---

अस्यैव विभागः। तथाज्ञानयोरपीति। विषयोत्तराज्ञानयोरपि। सर्वस्योत्तरस्य विषयस्य चाज्ञानम्। आदिग्रहणेन द्वित्रिचतुर्भागाद्यवरोधः। विषयोत्तराज्ञानयोः संग्रहवचने दोष इति चेद्? आह—न चेति। यथा न दोषस्तथा गुणोऽपि नास्तीति चेद्? आह—"गुणश्च लाघवसंज्ञः स्यात्" इति संग्रहवचनं न्याय्यम्। अप्रतिभाविषयत्वान्न पृथग्वचनम्। अप्रतिभावचनेनैवानयोः संग्रह इत्यर्थः।

न केवलमनयोरेवापृथग्वचनं न्याय्यम्, अपि त्वन्येषामपीत्याह—अपि चेत्यादि। तदुभयवचनेनैवेति। हेत्वाभासाप्रतिभयोरेव वचनेन सर्वप्रतिज्ञाहान्य-ननुभाषणाद्युक्तम्। न हि कश्चिद्धयन्यः साधनवादी प्रतिपक्षधर्ममभ्यनुजानाति, प्रतिज्ञां वा प्रतिज्ञासाधनायोपादत्ते इत्यादि वाच्यम्। तदा न किञ्चिद् दूषणं व्यक्तमेव, यन्नानुभाषते, कथां विक्षिपति, परमतं नानुजानातीति वक्तव्यम्। तदुभयाक्षेपेऽपि प्रपञ्चो गुणवान्, अतस्तदवचनादरो मुनेरिति चेद्? आह— तदुभयाक्षिप्तेषु प्रभेदेषु गुणातिशयमन्तरेण अनुपलभ्यमानत्वाद् गुणस्य प्रपञ्च-वचनादरेऽतिप्रसङ्गात्। कक्षपिट्टितादीनामभिधानप्रसङ्गात्। अतो व्यर्थः प्रपञ्चो महामुनिनाक्रियत ॥ १७ ॥

१८. "परपक्षप्रतिषेधे कर्तव्ये उत्तरं दूषणं यदा न प्रतिपद्यते न वेत्ति नाभिदधाति तदा निगृहीतो वेदितव्यः" इतीयान् परकीयग्रन्थः। साध्वेतन्निग्रहस्थानम्। अत एवास्माभिरपीदमदोषोद्भावनमित्यत्रोक्तमित्येतत् मत्वाऽभ्यनुजानाति।

साधनेत्यादि। साधनवचनानन्तरं प्रतिवादिना दूषणं वक्तव्यम्, स यदा सर्वं तदकृत्वा सर्वानुक्रमानुभाषणेन श्लोकपाठेन सभासंवर्णनेनान्येन कालं नयति, तदासौ व्यर्थं निष्प्रयोजनं कालं गमयन् कर्तव्यस्य दूषणाभिधानस्याप्रतिप-त्त्याननुष्ठानेन[3] निगृह्यते। व्यर्थमिति इदं क्रियाया कालस्य विशेषणम् ॥ १८ ॥

---

१. सर्वा क्रमर्द्धा०—रा०। २. वचनादे०—रा०। ३. ०भिधानस्य प्रतिपत्त्या०—रा०।

१९. "कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः" (न्या० ५.२.२०)। "यत्किञ्चित् कर्तव्यं व्यासज्य कथां विच्छिनत्ति । 'इदं मे करणीयं प्रहीयते, अस्मिन्नवसिते पश्चात् करिष्यामि । प्रतिश्यायकला मे[1] कण्ठं[1] क्षिणोति'-एवमादिना कथां विच्छिनत्ति। स विक्षेपो नाम निग्रहस्थानमेकमेकतरनिग्रहान्तायां कथायां स्वयमेव कथान्तं प्रतिपद्यते" इति ।

इदमपि यदि पूर्वपक्षवादी कुर्यात् व्याजोपक्षेपमात्रेण, न पुनर्भूतस्य तथाविधकथोपरोधिनः कार्यस्य भावे, तस्य स्वसाधनसामर्थ्यपरिच्छेदादेव विक्षेपः स्यात्। तथा चेदमर्थान्तरगमने एवान्तर्भवेत्; असमर्थसाधनाभिधानात्।

हेत्वाभासेषु वा अप्रकृतसाधनासम्बद्धप्रतिपत्तेश्च निरर्थकापार्थकाभ्यां च न भिद्यते। अतिप्रसङ्गश्चैवम्प्रकाराणामसम्बद्धसाधनवाक्यप्रतिपत्तिभेदानां पृथग् निग्रहस्थानव्यवस्थापने प्रोक्तः।

---

१९. कार्यव्यासङ्गः करणीयोपन्यासः[2]। कथाविच्छेदः कथानिवृत्तिः। यथा 'जीर्णकला मे बाधते, सम्प्रति वक्तुं न शक्नोमि पश्चात् कथयिष्यामि' इत्येवमादिना प्रकारेण कथामुद्ग्राहणे कथां[3] विच्छिनत्ति[3]। निग्रहस्थाने कारणमाह—एकतरस्य वादिनः प्रतिवादिनो वाऽसाधनाङ्गवचनेनादोषोद्भावनेन च निगृह्णन्ती निग्रहपर्यवसाना कथा, तस्यां च तथाभूतायां प्रस्तुतायां स स्वयमेव कथान्तं कथापर्यवसानं प्रतिपद्यते इति निग्रहस्थानमेतत्।

अत्राचार्यो ब्रूते—इदमपि कार्यव्यासञ्जनं यदि तावत् पूर्वपक्षवादी कुर्यात् साधनाभिधानशक्तिविकलत्वात् व्याजोपक्षेपमात्रेण। येन केनचिच्छलेनेत्यर्थः। न पुनर्भूतस्य तथाविधकथोपरोधिनः कार्यस्य भावे सति। कुर्यादिति वर्तते। तथाविधामुद्ग्राहणिकारूपां कथामुपरोद्धुं शीलं यस्य कार्यस्याजीर्णकला-कुक्षिशूल गेडुदाहाद्यैस्तत्तथा। यदि सद्भावेनैव तस्य तस्यां वेलायां कुक्षिशूलगेडुदाहादयो भवन्ति, तथा सति नैव निग्रहस्थानमित्यर्थः। यदा पुनर्व्याजमात्रेणैव करोति तदा तस्य पूर्वपक्षवादिनः स्वसाधनासामर्थ्यपरिच्छेदादेव विक्षेपः स्यात्। ततः किम्? इत्याह—तथा चेदं विक्षेपसंज्ञितं निग्रहस्थानमर्थान्तर एवान्तर्भवेत्। रूपसिद्धिनामादिव्याख्यानसमानत्वात् करणीयोपन्यासस्य। हेत्वाभासेष्वेवान्तर्भवेदित्यधिकृतम्। कस्माद्? असमर्थं च तत् साधनं च तस्याभिधानात्।

किञ्च—इदं निरर्थकापार्थकाभ्यां सकाशान्न भिद्यते। किं कारणम्? प्रकृतं च तत् साधनं च तेन असम्बद्धा च सा प्रतिपत्तिश्च ततः साधनवाक्येन सहास्य दशदाडिमादिवचनस्येव जबगडादिवर्णक्रमस्येव च सम्बद्धानुपलम्भादित्यर्थः।

किञ्चिन्मात्रभेदान्निमित्तलेशेन पृथगुक्तमिति चेदाह—अतिप्रसङ्गश्चेत्यादि। असम्बद्धा साधनवाक्येन प्रतिपत्तिर्येषां प्रभेदानाम्, तेऽसम्बद्धसाधनवाक्यप्रतिपत्तयः, ते च ते प्रभेदाश्च तेषामिति कार्यम्। एवं तावत् पूर्वपक्षवादिसम्बन्धेन विक्षेपस्य पृथगनभिधानमुक्तम्।

---

१-१. कलातमञ्च-रा०। २. कर्णीयो०-रा०। ३-३. काचिच्छिनत्तिः-रा०।

अथोत्तरवादी एवं विक्षिपेत्, तस्यापि साधनान्तरमुत्तरे प्रतिपत्तव्ये तदप्रतिपत्त्या विक्षेपप्रतिपत्तिरप्रतिभायामर्थान्तरे वान्तर्भवति।

ननु नावश्यं साधनदूषणाभ्यामेव सर्वस्य प्रतिपत्तिः, येन सर्वा वादिप्रतिवादिनोर्न सम्यक् प्रतिपत्तेर्हेत्वाभासेऽर्थे प्रतिभायां वाऽन्तर्भावात्। भवति हि अनिबद्धेनापि कथाप्रपञ्चेन विवाद इति, न; असम्भवात्। एकत्र अधिकरणे[1] विरुद्धाभ्युपगमयोर्विवादः स्यात्; अविरुद्धाभ्युपगमयोरनभ्युपगमयोर्वा वादाभावात्[2]। तत्रावश्यमेकस्य प्राग्वचनप्रवृत्तिः; युगपत्प्रवृत्तौ परस्परवचनग्रहणावधारणोत्तराणामसम्भवेन[3] प्रवृत्तिवैफल्यात् स्वस्थात्मनामप्रवृत्तेः। तेन च स्वोपगमोपन्यासेऽवश्यं साधनं वक्तव्यम्; अन्यथा परेषामप्रतिपत्तेः।

अपरेण च तत्सम्बन्धि दूषणम्, उभयोरसम्यक्प्रतिपत्तौ हेत्वाभासाप्रतिभयोः प्रसङ्ग इति सर्वो न्यायप्रवृत्तः पूर्वोत्तरपक्षोपन्यासोऽयं नातिपतति।

---

अधुना प्रतिवादिसम्बन्धेनाप्याह—अथोत्तरपक्षवाद्येवं वलासकला मे कण्ठं क्षिणोतीत्यादिना प्रक्रमेण कथां विक्षिपेत् तदानीं तस्याप्युत्तरपक्षवादिनः साधनान्तरमुत्तरे प्रतिपत्तव्ये सति तदप्रतिपत्त्या तस्योत्तरस्यानभिधानेन विक्षेपप्रतिपत्तिर्या सा अप्रतिभायामर्थान्तरे वान्तर्भवतीति।

परस्तु यथोक्तमन्तर्भावमसहमानश्चोदयति—ननु नावश्यमिति। तदेव द्रढयति—भवति ह्यनिबद्धेनापि साधनवाक्येनासम्बद्धेनापि कथाप्रपञ्चेन[4] परप्रतिभाहरणायान्तशो जननीव्यभिचारचोदनेनापि विवाद इति। आचार्य आह—न; असम्भवादेवंविधस्य विवादस्य। यस्मादेकत्र शब्दादावधिकरणे नित्यत्वानित्यत्वादिप्रतिज्ञानाविरुद्धाभ्युपगमौ ययोर्वादिप्रतिवादिनोस्तयोर्विवादः स्यात्। कुत एतद्? इत्याह—अविरुद्धावभ्युपगमौ ययोस्तौ, तथा न विद्येते विरुद्धाविरुद्धयोरभ्युपगमौ ययोः पुरुषयोस्तावभ्युपगमौ, तयोर्विवादाभावात्। तत्र एतस्मिन् व्यवस्थिते न्यायनिर्धारणे वा तत्र-शब्दः। एकस्य वादिनः प्रतिवादिनोऽवश्यं प्राग्वचनप्रवृत्तिः। यौगपद्येन किं न ब्रूते? इत्याह—युगपत् प्रवृत्तौ स्वस्थात्मनामप्रवृत्तेरिति सम्बन्धः। एतदेव कुतः? इत्याह—परस्परवचनश्रवणावधारणोत्तराणामसम्भवेन कारणभूतेन प्रवृत्तिवैफल्यात्। यदि हि परस्परवचनस्यासङ्करेण श्रवणं भवेत्, ततस्तदर्थमवधारयति, उत्तरं च। युगपत् प्रवृत्तौ च दिगम्बरपाठकलकल इव सर्वमेतन्न सम्भवति। तस्मादवश्यमेकस्य प्राग्वचनप्रवृत्तिः। अतस्तेन च स्वस्थात्मना पूर्वपक्षवादिना 'अनित्यं शब्दं साधयामि' इत्यादिना स्वोपगमोपन्यासे सत्यवश्यं साधनं वक्तव्यम्। अन्यथेति। हेत्वभिधाने। परेषां साक्षिप्रभृतीनामप्रतिपत्तेः।

अपरेण चेति। उत्तरपक्षवादिना। तत्सम्बन्धिवादिप्रोक्तसाधनसम्बन्धि दूषणं वक्तव्यमिति वर्तते। तस्मादुभयोर्वादिप्रतिवादिनोरसम्यक् प्रवृत्तौ सत्यां हेत्वाभासाप्रतिभयोः संग्रह इति सर्वो न्यायप्रवृत्तः पूर्वोत्तरपक्षोपन्यासो द्वयं हेत्वाभासमप्रतिभां च नातिपतति।

---

१. पूर्वकरणे—रा०। २. विरोधा०—रा०। ३. ०वधारिणोन्तरा०—रा०। ४. कथाप्रबन्धेन—रा०।

एतेनैव वितण्डा प्रत्युक्ता; अभ्युपगमाभावे विवादाभावात् ।

यदा तर्ह्यभ्युपगम्य वादं विफलतया न किञ्चिद् वक्ति, अन्यद्वा यत्किञ्चित् प्रलपति, तदा कथं हेत्वाभासान्तर्भावः ?

असमर्थितसाधनाभिधाने एवमुक्तम् । अनभिधानान्याभिधानयोरपि पराजय एवेत्युक्तम् , अभ्युपगम्य वादमसाधनाङ्गवचनात् ।

एतेनाधिकस्य पुनरुक्तस्य च प्रतिज्ञादेर्वचनस्य च निग्रहस्थानत्वं व्याख्यातम् । तदपि हि प्रतिपादितार्थविपर्ययत्वात् साधनसामर्थ्यमविधानम-

---

ननु च यदि न्यायः प्रवृत्तः, कथं तत्रास्य द्वयस्याधिकारः ? कथं चैकत्र धर्मिणि विरुद्धावुपन्यासौ न्यायप्रवृत्तौ, अवश्यं हि तत्रैकेनोपन्यासेन न्यायं प्रवृत्तेन भाव्यम्; अन्यथा धर्मी द्व्यात्मको भवेत् ? न; अभिप्रायापरिज्ञानात् । नेदं भवता न्यायप्रवृत्तत्वमाचार्येण विवक्षितं पर्यज्ञायि । न्यायप्रवृत्तौ हि पूर्वोत्तरपक्षोपन्यासस्य युगपत् प्रवृत्त्यभावेन जननीव्यभिचारचोदनाद्यभावेन[1] चाभिप्रेतम् ।

एतेन 'एकत्र ह्यधिकरणे विरुद्धाभ्युपगमयोर्विवादः स्याद्' इत्यादिना वितण्डा प्रत्युक्ता । कथं प्रत्युक्ता ? इत्याह—अभ्युपगमाभावे विवादाभावात् । इदमुक्तं भवति—"स्वपक्षस्थापनाहीनो वाक्यसमूहो वितण्डा" ( न्या० सू० १. २. ३ ) इत्युच्यते । यदि च वैतण्डिकस्य स्वपक्षो नास्ति; विवादस्तर्हि कथमिति वक्तव्यम् ! परपक्षप्रतिषेधार्थं वैतण्डिकः प्रवर्तत इति चेत् ? 'परपक्षप्रतिषेध एव तर्ह्यस्य स्वपक्षस्थापना' इति वितण्डालक्षणं विशीर्यते । तथा हि—यो येनाभ्युपगतः स तस्य स्वपक्षः, परपक्षप्रतिषेधश्च तेनाभ्युपगतः स्वपक्षतो नातिवर्तते इति ।

यदा तर्ह्यभ्युपगम्य वादं प्रतिज्ञामात्रेण विफलतया । परिषच्छारद्येन व्याकुलीकृतत्वादित्यर्थः । न किञ्चित् साधनं तदायासं वा वक्ति । अन्यद् वा किञ्चित् प्रलपति साधनतदाभासव्यतिरिक्तम्—'काको विरूपं विरौति, नूनमयं मे गेहे विपदं सूचयति, तदलमनेन विवादेन, यामि तावद् गेहे—किं नु मे पितुर्मरणमन्यद् वा वर्तते' इत्यादि । तदा[2] कथं हेत्वाभासान्तर्भावः । साधनाभावाद् हेत्वाभासासम्भवं मन्यते । उत्तराप्रतिपत्तिरपि नास्त्येव, पूर्वपक्षवादित्वादित्यभिप्रायः । तदनेन 'द्वयं नातिपतति' इत्येतद् विघटयितुमिच्छति परः ।

आचार्य आह—असमर्थितसाधनाभिधान एवमुक्तम् । द्वयं नातिपततीति प्रोक्तसाधन एतदुक्तमिति यावत् । अप्रोक्ते तु कथं प्रतिपत्तव्यम् ? इत्याह—अनभिधानान्याभिधानयोरपि सतोः पराजय एवेत्युक्तम् । प्रकरणावतार एव । तदेव स्मारयति—अभ्युपगम्यवादमसाधनाङ्गवचनादिति । तथा हि तत्र व्याख्यातम्—साधनाङ्गस्यानुच्चारणम्, साधनाङ्गाद्वा यदन्यस्याभिधानं तत् सर्वमसाधनाङ्गवचनमिति ।

एतेनेति । अन्याभिधानेन पराजयवचनेन । अधिकस्य पुनरुक्तस्य च प्रतिज्ञादेर्वचनस्य च निग्रहस्थानत्वं व्याख्यातम् । कथम् ? इत्याह—तदपि हीत्यादि । अनेनै-

---

१. ०वेदनाद्य०–रा० । २. तथा–रा० ।

प्रतीतप्रत्ययतया न लक्षणात् साधनस्यासाधनाङ्गवचनमिति निग्रहस्थानमिति ॥ १९ ॥

२०. "स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा" ( न्या० ५. २. २१ )। यः परेण चोदितं दोषमनुद्धृत्य भवतोऽप्ययं दोष इति ब्रवीति, यथा 'भवांश्चौरः पुरुषत्वात्' इत्युक्ते स तं प्रति ब्रूयाद्—भवानपीति। स स्वपक्षे दोषाभ्युपगमात् परपक्षे तं दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञा निग्रहस्थानमिति।

अत्रापि यदि पुरुषत्वाच्चौरो भवानपि स्यात् न च भवता नैवमिष्टस्तस्मान्नायं चौर्यहेतुरिति यद्ययमभिप्रायः, तदा न कश्चिद्दोषः; अनभिमते तदात्मनि चौरत्वेन हेतुदर्शने दूषणात्।

---

तदाह—यद्युक्तियुक्तमक्षपादेन किञ्चिन्निग्रहस्थानमुक्तम्, तदस्माभिरसाधनाङ्गवचनपदेनैव संगृहीतम्। यद्येवम्, 'प्रतिज्ञादेर्वचनस्य च' इति किमर्थमुक्तम्, नहि प्रतिज्ञोपनयनिगमनानां वचनं निग्रहस्थानमक्षपादेनोक्तम्, प्रत्युत तदवचनमेव निग्रहस्थानतया—"यदिष्टं हीनमन्यतमेनाप्यवयवेन न्यूनम्" ( न्या० सू० ५. २. १२ ) इति ? एवं तर्हि दृष्टान्तार्थमेतद्, यथा तस्याप्रतीतप्रत्यायनशक्तिविकलत्वादसाधनाङ्गवचनपदेनाभिधानम्, तथा अधिकपुनर्वचनयोरपि। तत एव च द्वितीयश्चकार इव-शब्दार्थे वर्तते। अन्यथा पुनरुक्तस्य चेत्ययं बोध्यर्थः स्यात्। केचित्तूत्तरं चकारं न पठन्ति। तैः पुनरुक्तव्याख्यानमेव प्रतिज्ञादेर्वचनस्य चेत्येतद् व्याख्येयम्। एवमपि न युक्तम्; अक्षपादेनैवंविधस्य पुनरुक्तस्यानिष्टत्वान्नास्ति दोषः; पूर्वतुल्यधर्मतयास्यापि पुनरुक्तेऽन्तर्भावितत्वात् ॥ १९ ॥

२०. स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा। दोषपरिहारे वक्तव्ये दोषस्यापरिज्ञानात् परमतमनुजानाति, अतो निगृह्यते। तदाह—परेण वादिना चोदितं पर्यनुयुक्तं दोषमनुद्धृत्यापरिहृत्य भवतोऽप्यं दोष इति ब्रवीति, यथा 'भवाँश्चौरः पुरुषत्वाच्छबरादिवत्' इत्युक्ते वादिना स प्रतिवादी तं वादिनं प्रतिब्रूयाद्—'भवानपि चौरः' इति। सोऽपि शब्दप्रयोगादात्मनश्चौरत्वमभ्युपगम्य परपक्षे तं दोषमासञ्जन् आपादयति, अपरेण वादिना यन्मतं प्रतिवादिनश्चौरत्वं तदनुजानाति। तथा हि तेन मुक्तसंशयं तावदात्मनश्चौरत्वं प्रतिपत्तुम्, अन्यथा नापि तमभिदध्यात्। वादिनि तु तदस्ति नास्तीति चिन्त्यम्, अतो मतानुज्ञा निग्रहस्थानम्।

इदमाचार्यो निराकरोति—अत्रापि यद्ययमभिप्रायः उत्तरवादिनः पुरुषत्वाच्चौरो भवानपि स्यादहमिव, न च भवतात्मैवं चौरत्वेनेष्टः, तन्नायं चौर्यसाध्ये हेतुः। अचौरेऽपि भवति विपक्षभूते वृत्तेरनैकान्तिकदोषदुष्टत्वादिति। तदास्मिन् प्रतिवादिनोऽभिप्राये न कश्चित् तस्य दोषो मतानुज्ञालक्षणोऽन्यो वा। कस्माद् ? अनभिमते चौरत्वेन रूपेण तस्य वादिन आत्मनि विपक्षभूते हेतोः सत्त्वप्रदर्शनेन प्रकारेण दूषणात्। विदग्धभङ्गाव्यभिचारोद्भावनादिति यावत्।

प्रसङ्गमन्तरेणैवमृजुनैव[1] क्रमेण[1] किं न व्यभिचारित इति चेत् ? यत्किञ्चि-देतत् । सन्ति ह्येवम्प्रकारा अपि व्यवहारा लोक इति ।

अथ तदुपक्षेपमभ्युपगच्छत्येतदप्युत्तराप्रतिपत्तौ न तत्साधने निग्रहार्हः, नापरत्र; स्वदोषोपक्षेपात् । तत्साधननिर्दोषतायां हि तदभ्युपगम एवोत्तराप्रतिपत्तिरिति तावतैव पूर्वमापन्ननिग्रहस्य परदोषोपक्षेपस्यानपेक्षणीयत्वादिति ॥२०॥

२१. "निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्" ( न्या० सू० ५. २. २२ )। पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, तस्योपेक्षणं निग्रहप्राप्तौ सत्यननु-

---

औद्द्योतकरं चोद्यमाशङ्कते—प्रसङ्गमन्तरेण भवानपि स्यादित्येवमाञ्जसेनैवमृजुनैव क्रमेण किं न व्यभिचारितो हेतुस्त्वय्यपि अचौरे वर्तते पुरुषत्वमतोऽनैकान्तिकत्वमिति । तस्माद् यत एवासावकौटिल्ये कर्तव्ये कौटिल्यमाचरति, तत एव निगृह्यत इति । आचार्य आह—यत्किञ्चिदेतत् । औद्द्योतकरं वचः । यस्मात् सन्ति ह्येवम्प्रकाराः वैदग्ध्यप्रवर्त्तिता व्यवहारा लोके । तथा हि—'भावत्क्यो मातरो बन्धक्यः; स्त्रीत्वात्, इतरबन्धकीवत्' इत्युक्ताः पशुपालादयोऽपि जडजङ्गमादि[2] जनसाधारणं वैदग्ध्यमनुसरन्तः प्रत्यवतिष्ठन्ते 'तावकीनापि माता तथा स्याद्' इति । न च तेऽनेन प्रकारेण स्वस्याः स्वस्याः मातुर्बन्धकीत्वं प्रतिपद्यन्ते, अपि तु भङ्ग्या हेतुव्यभिचारचोदनया परं प्रतिवदन्ति । तस्मादेवं बालहालिकादिलोकप्रकटमपि व्यवहारालोकमपसारयता यदि परमुद्द्योतकरत्वमेवोद्द्योतकरेण उद्द्योतितमात्मनः ।

अथोच्यते—नैवासौ भङ्ग्या व्यभिचारमादर्शयति, अपि तु तस्य साधनस्य सम्यक्त्वमभ्युपगम्यैव तेन दोषेण परमपि कलङ्कयतीति ? अत आह—अथ तदुपक्षेपः 'पुरुषत्वाद् भवाँश्चौरः' इत्येनमभ्युपगच्छत्येव तदाप्यसौ तत्साधन उत्तराप्रतिपत्त्यैव निग्रहार्हः, नापरत्र; वादिनि स्वदोषस्य चौरत्वस्योपक्षेपात् । निग्रहार्ह इति वर्तते ।

इदमेवोपोद्बलयति—तत्साधननिर्दोषतायां हि । अङ्गीकृतायामिति शेषः । तस्योपक्षेपस्याभ्युपगम एव यः स एवोत्तराप्रतिपत्तिरिति तावतैवोत्तराप्रतिपत्तिमात्रेणैवापरत्र दोषप्रसञ्जनात् । पूर्वमापन्ननिग्रहस्य सतः प्रतिवादिनः । आपन्नः प्राप्तो निग्रहो येन तस्येति च विग्रहः । परदोषोपक्षेपस्य मतानुज्ञालक्षणस्यानपेक्षणीयत्वात् । पराजितपराजयाभावादिति भावः ॥ २० ॥

२१. निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । पर्यनुयोज्यो नाम निग्रहप्राप्तस्योपेक्षणम्[3], 'निग्रहप्राप्तोऽसि' इत्यनभिधानम् । कः पुनरिदं पर्यनुयोज्योपेक्षणं निग्रहस्थानं चोदयति ? न तावत् पर्यनुयोज्य इति युक्तम्; असम्भवात् । न ह्यस्ति सम्भवो यत् परदोषप्रतिपादनार्थमात्मनो दोषवत्त्वमसावभ्युपैति—'निग्रहप्राप्तः सन्नहमनेनोपेक्षितः, निग्रहस्थानस्यापरिज्ञानात्, तस्मादयं दोषवान्' इति । नाप्युपेक्ष इति युक्तम्; यस्मादसौ न जानात्येवायं निग्रहप्राप्त इति । तथा हि—

---

१-१. मनैव-रा० । २. ०जनङ्गमादि-रा० । ३. ०प्राप्तस्योक्षण०-पा० ।

योगः । एतच्च 'कस्य पराजयः' 'इत्यनुयुक्तया पर्षदा वक्तव्यम्, न खलु निग्रहप्राप्तः स्वकौपीनं विवृणुयादिति !

अत्रापि यदि साधनवादिनं निग्रहप्राप्तमुत्तरवादी न पर्यनुयुङ्क्ते, अप्रतिभैवास्योत्तराप्रतिपत्तेरिति न पर्यनुयोज्योपेक्षणं पृथग् निग्रहस्थानम् । न्यायचिन्तायां पुनर्न द्वयोरेकस्याप्यत्र जयपराजयौ; साधनाभासेना प्रतिपादनात्[1], भूतदोषानभिधानाच्च ।

अथ कञ्चिद्दोषमुद्भावयति, कञ्चिन्न; न[2] तदा निग्रहमर्हति; उत्तरप्रतिपत्तेः ।

अर्हत्येव, सतो दोषस्यानुद्भावनादिति चेत्? न सन्त इति कृत्वा सर्वे दोषा अवश्यं वक्तव्याः ।

अवचने वा निग्रहः; एकेनापि तत्साधनविघातादेकसाधनवचनवत् ।

---

अपरिज्ञानादेवासौ नानुयुङ्क्ते—'निग्रहप्राप्तोऽसि' इति । परिज्ञाने वा कथमुपेक्षेत, उपेक्षणे वा समचित्तः कथमेवं प्रकटयेद्—'अयं मयोपेक्षितः स दोषः, ततो मम पर्यनुयोज्योपेक्षणं निग्रहस्थानम्' इति । न चान्यस्तृतीयः कश्चिदिहानुषङ्गी, तत् केनेदं चोदनीयम्?—इत्येतत् सर्वमाशङ्क्य पक्षिलः स्वामी ब्रूते—एतच्च पर्यनुयोज्योपेक्षणं वक्तव्यं चोदनीयं कस्य पराजय इति एवं वादिप्रतिवादिभ्यां प्रभुणा तदन्यैर्वा पर्यनुयुक्तया पृष्टया सत्या परिषदा प्राश्निकैर्वक्तव्यमित्यर्थः । चशब्दोऽवधारणार्थः । एवमेव[3] अन्यानि निग्रहस्थानानि वादिप्रतिवादिभ्यामेवोद्भाव्यन्ते, एतत्पुनः प्राश्निकैरेव, किं पुनः कारणं ताभ्यामेव नोच्यते? इत्याह—न खलु निग्रहप्राप्तः स्वकौपीनं स्वदोषं विवृणुयात् प्रकाशयेत् ।

अत्रापीति । आचार्यः । यदि तु न्यायश्चिन्त्यते तदा नैकस्यापि जयपराजयौ न्याय्यौ । कथं वादिनो जयः? इत्याह—साधनाभासेन जिज्ञासितस्यार्थस्याप्रतिपादनात् । अत एव न प्रतिवादिनोऽपि पराजयः; वादिविवक्षितार्थसिद्ध्यपेक्षया प्रतिवादिनः पराजयव्यवस्थापनात् । प्रतिवादिनस्तर्हि किं जयः? इत्याह—भूते दोषानभिधानाच्च । अत एव च न वादिनः पराजयः; तद्दूषणापेक्षया तद्व्यवस्थितेः ।

अथोत्तरपक्षवादी अनेकदोषसद्भावेऽपि वादिप्रोक्तस्य साधनस्य कञ्चिद् दोषमुद्भावयति, कञ्चिन्न, न तदासौ निग्रहमर्हति, किं कारणम्? उत्तरस्य प्रतिपत्तेः । अभिधानादित्यर्थः । पर आह—अर्हत्येव निग्रहम्, सर्वेषां दोषाणामनुद्भावनात् । आचार्य आह—न खलु भोः सन्त इति कृत्वा सर्वे दोषा अवश्यं वक्तव्या प्रतिवादिना । अवचने वा दोषान्तरस्य निग्रहो भवति । नेति वर्तते । कस्मात् सर्वे दोषा नोद्भाव्यन्ते? इत्याह—एकेनापि दोषेणासिद्धत्वादिनोद्भावितेन न तस्य वादिप्रयुक्तस्य साधनस्य विघातात् । साध्यसिद्धिं प्रत्यसमर्थत्वप्रतिपादनादित्यर्थः । भावसाधनो वा साधन-

---

१. ०प्रतिभासनात्–रा० । २. रा० पुस्तके नास्ति । ३. एतदेव–पा० ।

यथैकस्यार्थस्यानेकसाधनसद्भावेऽप्येकेनैव साधनेन तन्निष्ठेन सत्त्वोपादानमिति न दोषमुद्भावयन्नेवापरस्यानुद्भावनान्निग्रहार्हः पूर्ववत्[1]।

अथ पूर्वपक्षवादी उत्तरपक्षवादिनं निग्रहप्राप्तं न निगृह्णाति, तदा तयोर्नैकस्यापि पूर्ववत् जयपराजयौ; दोषाभासं ब्रुवाणमुत्तरवादिनं स्वसाधनादनुत्सारयतोऽसमर्थितसाधनत्वान्न जयो वादिनः। सर्वदोषासम्भवप्रदर्शनेन साधनाङ्गासमर्थनात्। नाऽप्युत्तरवादिनः; उभयदोषाप्रतिपादनात्।

तस्मादेवमपि न पर्यनुयोज्योपेक्षणं नाम पराजयाधिकरणमिति ॥ २१ ॥

२२. "अनिग्रहस्थाने[1] निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः" (न्या० ५.२.२२)। "निग्रहस्थानलक्षणस्य मिथ्याव्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वक्तव्यः।"

अत्रापि यदि तत्साधनवादिनमभूतैस्तद्दोषैरुत्तरवाद्यभियुञ्जीत, सोऽ-

---

शब्दः। अत्रैव दृष्टान्तमाह—एकसाधनवचनवदिति। यथेत्यादि। अस्यैव विभागः—एकस्यार्थस्य क्षणिकत्वादेः प्रतिपादनायानेकस्य साधनस्य सत्त्व-कार्यत्व-प्रयत्नोत्थत्वादेः सद्भावेऽपि सत्येकेनैव सत्त्वादीनामन्यतमेनोपात्तेन तस्य क्षणिकत्वादेरर्थस्य सिद्धेर्निश्चयान्न सर्वेषां साधनानामुपादानम्। तथैकेनापि दोषेण तत्साधनविघातान्न सर्वोपादानमितीदं दृष्टान्तेन साम्यम्। इति तस्मात् न उत्तरपक्षवादी पूर्वमेकं दोषमुद्भावयन्नेवापरस्य दोषान्तरस्यानुद्भावनान्निग्रहार्हः। पूर्ववदिति। साधनाभासेनाप्रतिपादनात्, भूतदोषानभिधानाच्च।

ननु च कथं न वादिनो जयः, यावता न तेन साधनाभासः प्रयुक्तः, प्रतिवादी तु असन्तं दोषमुद्भवयति ? इत्यत आह—दोषाभासं ब्रुवाणमुत्तरपक्षवादिनं स्वसाधनात् सकाशात् अनुत्सारयतः अनिवर्तयतः। तदुक्तदूषणाभासत्वेनाप्रतिपादयत इति यावत्। वादिनो न जयः। कस्माद् ? असमर्थितसाधनाङ्गत्वात्[2]। असमर्थितसाधनाङ्गं येन, तस्य भावस्तत्त्वम्। एतदेव कुतः ? इत्याह—सर्वदोषाभावप्रदर्शनेन साधनाङ्गसमर्थनात्। "इत्थम्भूतलक्षणे" ( पा. सू. २. ३. २९ ), करणे वा तृतीया। असमर्थितत्वात् साधनाभास एव तेन प्रयुक्तः इति संक्षेपार्थः। नाप्युत्तरवादिनो जय इति वर्तते।

तस्मादेवमपीति। यदि पूर्वपक्षवादी उत्तरपक्षवादिनं न निग्रहप्राप्तं निगृह्णाति, न केवलमुत्तरवादिसम्बन्धेनेत्यपि-शब्दः ॥ २१ ॥

२२. निरनुयोज्यस्यानुयोगः। अनिग्रहप्राप्ते 'निगृहीतोऽसि' इत्यभिधानम्। किं पुनरेवं ब्रूते ? इत्याह—निग्रहस्थानलक्षणस्य मिथ्याव्यवसायाद्। यथोक्तस्य निग्रहस्थानलक्षणस्य सम्यगपरिज्ञानादित्यर्थः। एवं चाप्रतिपत्तितो निगृह्यते।

अत्रापीत्यादि। आचार्यः। यदि तस्य साधनस्य वादिनम् अभूतैरलीकैर्दोषैः

---

१. अस्थाने–रा०।  २. असम०–रा०। एवमुपर्यपि।

स्थाने निर्दोषे निग्रहस्थानस्य नियोक्तोद्भावयिता न भवति। तथा भूतदोषोद्भावनलक्षणस्योत्तरस्याप्रतिपत्तेरितरेणोत्तराभासत्वे प्रतिपादितेऽप्रतिभयैव निगृहीत इति नेदमतो निग्रहस्थानान्तरम्।

अथोत्तरवादिनं साधनदोषमुद्भावयन्तमपरो दोषाभासवचनेनाभियुञ्जीत, तस्य तेन भूतदोषत्वे प्रतिपादिते साधनाभासवचनेनैव निगृहीत इति।

एवमपि नेदं हेत्वाभासेभ्यो भिद्यते। अवश्यं हि विषयान्तप्राप्त्यर्थं[1] हेत्वाभासा निग्रहस्थानत्वेन वक्तव्याः, तदुक्तावपरोक्तिरनर्थिकेति ॥ २२॥

२३. सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ( न्या० ५. २. २४ )।

---

'सव्यभिचारादिदोषदुष्टं त्वया साधनम् प्रयुक्तम्, ततः निगृहीतोऽसि' इत्येवमभियुञ्जीत, तदा सोऽस्थानेऽस्य व्याख्यानं निर्दोषे निग्रहस्थानस्य •अस्य विभागादेवास्येति। अभियोक्ता इत्यस्य विवृतिः—उद्भावयितेति। तथा चालीकदोषस्याभिधायित्वे सति दोषोद्भावनलक्षणस्योत्तरस्याप्रतिपत्तेरभिधानादप्रतिभयैव करणभूतया उत्तरवादी निगृहीत इति कृत्वा नेदं निरनुयोज्यानुयोगाभिधानं निग्रहस्थानम्। अतोऽप्रतिभानिग्रहस्थानात् सकाशान्न निग्रहस्थानान्तरम्। कदा चायमप्रतिभया निगृह्यते ? इत्याह—इतरेण वादिना तदुक्तस्य उत्तराभासत्वे प्रतिपादिते। अन्यथा न द्वयोरेकस्यापि पूर्ववज्जयपराजयावित्याकूतम्।

एवं प्रतिवादिसम्बन्धेनास्यापृथग्वचनं प्रतिपाद्य वादिसम्बन्धेनाप्याह—अथोत्तरवादिनं भूतं सत्यं साधनदोषं सव्यभिचारादिकमुद्भावयन्तमपर इति पूर्वपक्षवादी दोषाभासवचनेनाभियुञ्जीत। 'जात्युत्तरमनैकान्तिकाद्याभासं त्वया प्रयुक्तम्, तस्मान्निगृहीतोऽसि' इत्येवं यद्यभियुञ्जीतेत्यर्थः। तदा तस्य उद्भावितस्य दोषस्य व्यभिचारादेस्तेनोत्तरवादिना भूतदोषत्वे प्रतिपादिते। जात्युत्तरवत्त्वे परिहृत इति यावत्। साधनाभासवचनेनैव निगृह्यत इति।

तस्माद् एवमपि प्रतिवादिसम्बन्धेनापि नेदं हेत्वाभासेभ्यो भिद्यते इति न[2] पृथग्वाच्यम्। अस्यैवोपोद्वलनम्—अवश्यं हि द्वाविंशतिनिग्रहस्थानवादिना हेत्वाभासाः पृथग् निग्रहस्थानत्वेन वक्तव्याः। किमर्थम् ? इत्याह—विषयान्तरप्राप्त्यर्थम् निरनुयोज्यानुयोगादिभिर्निग्रहस्थानैरनाक्रान्तसंग्रहमपीति। अन्यथा द्वाविंशतित्वं निग्रहस्थानानामभ्युपगमं विरुध्यत इत्यभिप्रायः। तथा च तदुक्तौ तेषां हेत्वाभासानां निग्रहस्थानेनोक्तौ सत्यामपरोक्तिः अपरस्य निरनुयोज्यानुयोगस्योक्तिर्निरर्थिका; हेत्वाभासवचनेनैव संगृहीतत्वात्॥ २२॥

२३. सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इति सूत्रम्। सिद्धान्तमभ्युपेत्य पक्षपरिग्रहं कृत्वा अनियमात् पूर्वप्रकृतार्थोपरोधेन, शास्त्रव्यवस्थामनादृत्येति यावत्। कथाप्रसङ्गः = अर्थान्तरोपवर्णनम्।

---

१. ०व्याप्त्यर्थं–रा०। २. रा. पुस्तके नास्ति।

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययात् कथाप्रसङ्गं कुर्वतोऽपसिद्धान्तो विज्ञेयः। यथा 'न सतो विनाशः, नासदुत्पद्यते' इति सिद्धान्तमभ्युपेत्य पक्षमवस्थापयति—'एकान्ता प्रकृतिः, व्यक्तस्याव्यक्तविकाराणामन्वयदर्शनात्[1]। मृदन्वयानां[2] शरावादीनां दृष्टमेकप्रकृतिकत्वम्। तथा चायं व्यक्तभेदः सुखदुःखमोहसमन्वितो गृह्यते, तत्सुखादिभिरेकप्रकृतिः' इति।

स एवमुक्तवान् पर्यनुयुज्यते—अथ 'प्रकृतिर्विकारः' इति कथं लक्षयितव्यम्? यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः, यत् तद् धर्मान्तरं स विकार इति। सोऽयं प्रकृतार्थविपर्ययादनियमात् कथां प्रसञ्जयति। प्रतिज्ञातं चानेन—'नासदाविर्भवति, न सत् तिरोभवति' इति।

सदसतोश्च तिरोभावाविर्भावावन्तरेण न कस्यचिद् प्रवृत्त्युपरमः, प्रवृ-

---

कस्यचिदर्थस्येति। धर्मिणो धर्मान्तरं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययो विरोधः। इदमुदाहरणेन स्पष्टयति—यथा न सतो वस्तुनो विनाशो निरन्वयः, केवलं तिरोभावमात्रं भवति; नासत् खरविषाणतुल्यमुत्पद्यते, किं तर्हि? आविर्भावतः। 'सदेवोत्पद्यते' इत्येवं कापिलः सिद्धान्तव्यवस्थामादर्श्य पक्षं करोति—एका प्रकृतिर्व्यक्तस्याव्यक्तलक्षणा। व्यक्तस्येति महदादेः। अत्र हेतुमाह—विकाराणां शब्दादीनामन्वयदर्शनात्। मृदन्वयानामित्यादि। दृष्टान्तः। तथा चायमिति। उपनयः। सुखदुःखमोहसमन्वित इति। सुखादिमयत्वं पूर्वं यथा साङ्ख्येनाभिमतम्। तत् तस्मात् सुखादिभिरेकप्रकृतिरिति। अयं व्यक्तभेदः। इति निगमनम्। 'सुखादिभिः' इति "इत्थम्भूतलक्षणे" (पा० सू० २.३.२१) तृतीया। सुखादिप्रकारा सुखादिलक्षणा एका प्रकृतिरस्येत्यर्थः। अन्ये पठन्ति—एका प्रकृतिः, व्यक्ताव्यक्तविकाराणामन्वयदर्शनादिति। एवञ्च व्याचक्षते—एका प्रकृतिरभिन्ना सर्वात्मस्वभावा, व्यक्ताव्यक्तविकाराणामन्वयदर्शनात्। ये व्यक्ता विकारा महदादयः, ये चाव्यक्ताः प्रधानात्मनि व्यवस्थितास्तेषामप्यन्वयदर्शनादिति। अपरे तु पठन्ति—एका प्रकृतिरव्यक्ता, व्यक्तविकाराणामिति। व्यक्तरूपाणां विकाराणामिति चाहुः।

प्रकृतार्थविपर्ययेणायं[3] यथा प्रवृत्तेति प्रदर्शनार्थमाह—स कापिल एवमुक्तवान् पर्यनुयुज्यते—अथ प्रकृतिर्विकार इति। एतदुभयम्। कथं लक्षयितव्यम् प्रतिपत्तव्यमिति। स एवमनुयुक्तः प्राह—यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते, सा प्रकृतिरवस्थितरूपा। यत् तत्प्रवृत्तिनिवृत्तिसद्धर्मान्तरं स विकार इति लक्षयितव्यम्। परमुक्तवान् साङ्ख्यः प्रकृतार्थपरित्यागदोषेणोपपाद्यते। सोऽयं वादी प्रकृतार्थविपर्ययादनियमात् कथां प्रसञ्जयति। पूर्वप्रकृतं परित्यजतीत्यर्थः। कथम्? इत्याह—प्रतिज्ञातं खल्वनेनेति। पूर्वोक्तं स्मारयति। यद्येवम्, को दोषः? इत्याह—सदसतोरित्यादि। सतस्तिरोभावमेकान्तेन विनाशमन्तरेण न कस्यचिद् धर्मस्य

---

१. ०मनुपदर्शनात्–रा०। २. मृदर्थपानां (न)–रा०। ३. ०विपर्यणेयं–पा०।

त्तिर्वा—इत्येवं प्रत्यवस्थिते; यदि स सत आत्महानमसतश्चात्मलाभमभ्युपैति, अपसिद्धान्तो भवति। अथ नाभ्युपैति, पक्षोऽस्य न सिद्धयतीति।

इतोऽपि[1] न कश्चिदनियमात् कथाप्रसङ्गो यत्तेनोपगतम् 'नासदुत्पद्यते, न सद्विनश्यति' इति तस्य समर्थनायेदमुक्तम्—'एकप्रकृतिकमिदं व्यक्तमन्वयदर्शनाद्[2]' इति। तत्रैका प्रकृतिः सुखदुःखमोहास्तदविभक्तयोनिकमिदं व्यक्तम्, तदन्वयदर्शनात्। व्यक्तस्य तत्स्वभावताऽभेदोपलब्धेरिति[3]।

---

प्रवृत्त्युपरमः सिद्धयति। केनचिद् विरूपेणावस्थाने सति स तिरोहितोऽङ्गस्तस्यावस्थितस्यात्मभूतः परभूतो वा भवेत्। आत्मभूतत्वे तिरोहितादव्यतिरेकात् तिरोहितवदवस्थितस्याप्यनवस्थानम्, अवस्थितवच्च तदव्यतिरेकतस्तिरोहितस्याप्यनवस्थानमाशङ्क्यते। परभूतत्वेऽपि कथमनन्वयो न विनाशः, न ह्यन्यस्यावस्थानेऽन्यदवतिष्ठते। अन्यो वान्यस्यान्वयः, चैतन्यस्यापि घटान्वयप्रसङ्गात्। तथा नासत आविर्भावमुत्पादमन्तरेण कस्यचिद् धर्मस्य प्रवृत्तिर्वा सिद्धयति।

ननु च विद्यमानमेव धर्मान्तरमाविर्भाव्यते, ग्रहणविषयभावमापाद्यते। न विद्यमानस्य क्रियाऽस्त्युपादानमिति, उपलब्धिर्वा; विद्यमानत्वात्। न कारकजन्यत्वमित्येवं प्रत्यवस्थितः प्रतिषिद्धः साङ्ख्यः। क्वचित् सप्तमी आपद्यते। तत्र प्रत्यवस्थिते प्रतिवादिनि सतीति व्याख्येयम्। यदि स कापिलः सतो धर्मस्यात्महानमसतश्चात्मलाभमभ्युपैति, तदानीमपसिद्धान्तो भवति। अभ्युपगमविरुद्धस्य प्रतिज्ञानापसिद्धान्तसंज्ञकं निग्रहस्थानमस्य भवतीत्यर्थः। अथ सत आत्महानमसतश्चात्मलाभं नाभ्युपैति, एवमपि 'एकप्रकृतिर्विकाराणाम्' इति योऽयं पक्षः पूर्वप्रतिज्ञातः, सोऽस्य न सिद्धयति; प्रकृतिविकारलक्षणस्यानवस्थितत्वात्। तथाहि तयोर्लक्षणं 'यस्यावस्थितस्य' इत्यादिनोक्तम्, तस्य चायोगः। सदसतोश्चेत्यादिना प्रतिपादित इत्येतावान् परग्रन्थः।

अत्र सम्प्रत्याचार्यः प्रतिविधत्ते—इतोऽपि। प्रतिविदध्महे इति शेषः। न कश्चिदनियमात् सिद्धान्तनीतिविरोधात् साङ्ख्यस्य प्रसङ्गः। तस्माद् यत् तेनोपगतम्—'नासदुत्पद्यते, न सत् तिरोभवति' इति, तस्य समर्थनायेदमुक्तम्। किमुक्तम्? इत्याह—एकप्रकृतिकमिदं व्यक्तमन्वयदर्शनादिति। तत्रैकेति। एतदेव विभजति—तदविभक्तयोनिकमिदं व्यक्तम्। ते सुखादयोऽविभक्ता अपृथग्भूता योनिः स्थानमधिकरणं यस्य व्यक्तस्य तदविभक्तयोनिकम्। किं कारणम्? तदन्वयदर्शनात्। तैः सुखादिभिरन्वयदर्शनात् तादात्म्योपलम्भात्। ततः किं सिद्धम्? इत्याह—व्यक्तस्य तत्स्वभावता सुखादिस्वभावता। तत्र स्वभावतैव कथं निश्चिता? अभेदोपलब्धेरिति; सुखादिभिः शब्दादीनामनानात्वदर्शनादिति यावत्।

---

१. इहापि—रा०। २. ०मनुपदर्शनात्—रा०। ३. ०लब्धिरिति—रा०।

सुखादीनामुत्पत्तिविनाशाभ्युपगमाभावात् सर्वस्य तदात्मकस्य नोत्पत्ति-विनाशाविति सिद्धं भवति।

अत्र तदुक्तस्य हेतोर्दोषमनुद्भाव्य विकारप्रकृतिलक्षणं पृच्छन् स्वयमयं प्रष्टा[1] सत्त्वेनानियमात् कथां प्रवर्तयति। तत्रेदं स्याद्वाच्यम्—व्यक्तं नाम प्रवृत्तिनिवृत्तिधर्मकम्, न तथा सुखादयः; व्यक्तस्य सुखाद्यन्वये सुखादिस्वभावता प्रवृत्तिनिवृत्तिधर्मतालक्षणमवहीयत इति। न तद्रहितसुखादिस्वभावता[2], व्यक्त-लक्षणविरोधादिति, सुखाद्यन्वयदर्शनादित्यसिद्धो हेतुरिति।

एवं हि तस्य साधनदोषोद्भावनेन पक्षो दूषितो भवति। सोऽनुपसंहृत्य साधनदोषकथां प्रतारयन् स्वदोषं परत्रोपक्षिपति।

---

एवमपि किं सिद्धं भवति? इत्याह—सर्वस्य शब्दादेर्विकारग्रामस्य सुखाद्यात्मकस्य नोत्पत्तिविनाशाविति। कस्मात्? इत्याह—सुखादीनामुत्पत्तिविनाशाभावात्। सुखाद्यव्यतिरेकात् तदात्मवच्छब्दादयोऽपि नित्याः सिद्धाः भवन्ति। तथा च यत् पूर्वमभ्युपगतम्—'न सतो विनाशः, नासदुत्पद्यते' इति, तत् समर्थितं भवति।

अत्र एवं कापिलेन स्वोपगमे समर्थिते सति तदुक्तस्य तेन साङ्ख्ये नोक्तस्य हेतोरन्वयदर्शनस्य दोषमसिद्धतादिकमनुद्भाव्य, 'स एवमुक्तवान् पर्यनुयुज्यते—अथ प्रकृतिर्निर्विकार इति कथं लक्षयितव्यम्' इत्येवं विकारप्रकृत्योर्लक्षणं पृच्छन् स्व-यमयमक्षपादः प्रकृतासम्बन्धेनानियमात् प्रकृतार्थोपरोधात् कथां प्रवर्तयति। यस्मात् प्रकृतिविकारयोरिह लक्षणं न प्रकृतमेव, तत् किं तदभिधाय पर्यनुयुज्यते; तस्मा-दप्रस्तुतपर्यनुयोक्तृत्वादक्षपाद एव निग्रहार्ह इति भावः। किं तर्ह्यत्रोत्तरसम्बद्ध-वाक्यम्? इत्याह—तत्र अन्वयदर्शनहेतौ इदं स्याद् वाच्यम्—व्यक्तं नाम प्रवृत्तिनिवृत्ति-धर्मकं न तथा व्यक्तवत् सुखादयः प्रवृत्तिनिवृत्तिधर्मका इति लिङ्गवचनपरिणामेन सम्बन्धः। तथा च व्यक्तस्य सुखाद्यन्वयेऽस्य व्याख्यानं सुखादिस्वभावतायां सत्यां प्रवृत्तिनिवृत्तिधर्मतालक्षणं व्यक्तस्यावहीयते। तदव्यतिरेकेण तेषामपि सदावस्था-नात्। इति तस्मात् न तद्रहितसुखादिस्वभावता। व्यक्तस्य ताभ्यां प्रवृत्तिनिवृत्तिभ्यां रहितास्तथोक्तास्ते च सुखादयश्च, ते स्वभावो यस्य यस्य भावस्तद्रहितसुखा-दिस्वभावता। कस्माद्? इत्याह—व्यक्तलक्षणविरोधादिति। व्यक्तस्य लक्षणं प्रवृत्तिनिवृत्तिधर्मकत्वम्, तस्य तद्विपरीतः सुखादिभिः परस्परपरिहारस्थिति-लक्षणो विरोधः। तथा च साधनम्—न सदावस्थितरूपसुखादिस्वभावमिदं ते व्यक्तं प्राप्नोति; तद्विपरीतधर्मत्वात्, क्षेत्रज्ञवत्। न च सुखादिव्यक्तयोरेकस्व-भावता; परस्परविरुद्धधर्माध्यसितत्वात्। एवं च व्यक्तस्य सुखादिस्वभावतायोगे सुखाद्यन्वयदर्शनसिद्धो हेतुः।

कस्मादिदं सम्बद्धं दूषणम्? इत्याह—एवं हि तस्य साङ्ख्यस्य साधनदोषो-द्भावनेन हेत्वसिद्धताचोदनेन 'एकप्रकृतिकमिदं व्यक्तम्' इत्ययं पक्षो दूषितो भवति। स पुनर्नैयायिकः साधने दोषमसिद्धताख्यमनुपसंहृत्य अप्रदर्श्य अप्रकृतप्रकृति

---

१. पृकता०–रा०। २. तद्धित०–रा०।

अयमेव दोषोऽनेन प्रकारेणोच्यते इति चेत् ?

एष नैमित्तिकानां विषयः, न लोकः शब्दैरप्रतिपादितमर्थं प्रतिपत्तुं समर्थ इति, स एवायं भण्डालेख्यन्यायोऽत्रापि ।

यथोक्तेन न्यायेन पूर्वकस्यासाधनाङ्गस्यासिद्धस्य हेतोरविधानादेव निग्रहः, नापि नियमात् कथाप्रसङ्गादिति । इदमपि हेत्वाभासेष्वन्तर्भावात् न पृथग्वाच्यम् ॥ २३ ॥

२४. हेत्वाभासाश्च यथोक्ताः" ( न्या० ५. २. २५ ) । हेत्वाभासाश्च निग्रह-स्थानानि । किं पुनर्लक्षणान्तरयोगाद् हेत्वाभासा निग्रहस्थानभावमापद्यन्ते, यथा प्रमाणानि प्रमेयत्वम् ? इत्यत आह—यथोक्तहेत्वाभासलक्षणेनैव निग्रह-स्थानभाव[1] इति ।

---

विकारलक्षणपर्यनुयोगेन कथां प्रतानयति, अविमुञ्चन् स्वदोषमन्यस्मात् कथा-प्रसङ्गं परत्र साङ्ख्ये तपस्विन्युपक्षिपति ।

पर आह—अयमेवासिद्धताख्यो दोषोऽनेन प्रकारेण प्रकृतिविकारलक्षणपर्यनु-योगद्वारेणास्माभिरप्युच्यते इति ।

आचार्य आह—एष नैमित्तिकानां ज्योतिर्ज्ञानविदां विषयः । नायं तदुक्तस्य वाक्यस्यार्थ इति यावत् । यतो न लोकः शब्दैरप्रतिपादितमर्थं प्रतिपत्तुं समर्थः । अर्थप्रकरणादिभिर्विनेत्यध्याहारः । तस्मात् स एवायं प्रतिज्ञाविरोधप्रस्तावे निर्दिष्टो भण्डालेख्यन्यायोऽत्रापीति । अपसिद्धान्तः । न केवलं तत्रेत्यपि-शब्दः ।

यथा हि भण्डाः प्राकृतान् विस्मापयन्तः शीघ्रमर्धचन्द्राकारामल्पीयसीं रेखा-मालिख्य भणन्ति—पश्यत, तालमात्रेण हस्ती विलिखितोऽस्माभिरिति । तत्र केचित् मन्दमतयस्तथैव प्रतिपद्यन्ते । केचिद् दुर्विदग्धधियः पर्यनुयुञ्जते—ननु नोऽस्य कर्णपाददन्तादयः प्रतीयन्ते, तत् कथमयं तद्विकलो हस्ती भवतीति ? ते पुनराहुः—सत्यं न प्रतीयन्ते, अस्माभिस्तु समाप्तसकलकलः करेणुरयं लिखितः; तास्तस्य सकलाः कलाः सलिल इव मग्नत्वान्नोपलभ्यन्ते, कुम्भक-देशमात्रं त्विदमस्योपलभ्यते इति । तथाजातीयकमेतत् परस्यापि धाष्ट्र्यवि-जृम्भितम्—यदि नाम नायमर्थोऽस्माद् बाह्यात् प्रतीयते तथाप्यनेन प्रकारेणो-च्यत इति ।

अपि च—उच्यतामयमेवार्थोऽनेन प्रकारेण, तथाप्यसिद्धस्य हेत्वाभासेष्व-न्तर्भावात् तद्वचनेनैवाभिधानमिति नापसिद्धान्तः पृथगुपादेयो भवेदित्येदुपसं-हारव्याजेनाह—यथोक्तेन न्यायेनेत्यादि ॥ २३ ॥

२४. हेत्वाभासाश्च यथोक्ता इति सूत्रम् । इदमाक्षेपपूर्वकं वात्स्यायनो व्याचष्टे—किं पुनरिति । हेत्वाभासलक्षणाद् यदन्यल्लक्षणं तेन सम्बन्धान्निग्रहस्थानत्वमापद्यन्ते । किमिव ? इत्याह—यथा प्रमाणानि प्रमेयत्वम् । 'लक्षणान्तरवशादापद्यन्ते' इति

---

१. ०स्थानता च–रा० ।

अत्रापि यथोक्तत्वाच्चिन्त्यमेव[1]-किं ते यथा लक्षितप्रभेदास्तथैव, आहोस्वि-दन्यथैवेति ? तत्तु[2] चिन्त्यमानमिहातिप्रसज्यते इति न[3] प्रतन्यते ।

वर्तते । तानि हि प्रमितिक्रियायाः कारणत्वात् प्रमाणानि, प्रमाणान्तरेण तु यदा प्रमीयन्ते तदा कर्मत्वात् प्रमेयानि । तत एव पदार्थत्वात् प्राप्तः संशय इति । अत्राह—मुनिना यथोक्त इति । अस्यैव विवरणम्—यथोक्तहेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति ।

इदमुक्तं भवति—"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमाकालातीता इति हेत्वाभासाः" ( न्या० सू० १. २. ४ ) इति प्रभेदमुपक्रम्य यत् प्रत्येकं लक्षणमुक्तम्—"अनैकान्तिकः सव्यभिचारः" ( न्या० सू० १. २. ५ ), "सिद्धान्तमभ्युपेत्य तद्विरोधाद् विरुद्धम्" ( न्या० सू० १. २. ६ ), "यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" ( न्या० सू० १. २. ७ ), "साध्याविशिष्टः साध्यत्वात् साध्यसमः" ( न्या० सू० १. २. ८ ), "कालात्ययापदिष्टः कालातीतः" ( न्या० सू० १. २. ९ ) इति । तेनैव लक्षणेनैषां निग्रहस्थानत्वम्, न पुनस्ततो लक्षणान्तरमपेक्ष्यत इति ।

अत्रापीत्याचार्यः । कथं चिन्त्यम् ? इत्याह—किं ते यथा भवद्भिर्लक्षितप्रभेदास्तथैव ते भवन्ति, आहोस्विदन्यथेति । लक्षितः प्रभेदो येषामिति विग्रहः । तत् तर्हि किं तच्चिन्त्यते ? इत्याह—तत्तु चिन्त्यमानमिहातिप्रसज्यत इति न प्रतन्यते । इदमेवागूरितम्—विदन्त्येव केचिदत्र हेत्वाभासा एव न युज्यन्ते, केचित्तु हेत्वाभासा अपि न संगृहीता इति । अस्मिंश्च विचारे हेत्वाभासवार्त्तिकं सकलमवतारयितव्यमिति शास्त्रान्तरमेव भवेत् । अवदातमतयस्त्वस्मद्विहितहेत्वाभासलक्षणविपर्ययेण दूरान्तरत्वाद् तद् वैशसम् । तस्मादुपेक्षैव युज्यत इति ।

तथापि मन्दमतिबोधनायापि शास्त्रमुच्यत इति कालातीत-प्रकरणसमयोस्तावद्धेत्वाभासत्वं यथा नोपपद्यते तथा वर्ण्यते । तत्र "कालात्ययापदिष्टः कालातीतः" ( न्या० सू० १. २. ९ ) इति । तदिह वृद्धनैयायिकानामपास्य मतमाचार्यदिङ्नागपादैर्भाषितत्वादिदानीन्तना वात्स्यायनादयोऽमुमेव स्थितपक्षमाहुः । तत्रैवं ब्रूमः—कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य, स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम्—'नित्यः शब्दः संयोगव्यंग्यत्वाद्, रूपवत्' । प्रागूर्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते । तथा शब्दो व्यवस्थितो भेरीदण्डसंयोगेन दारुपरशुयोगेन वा व्यज्यते । तस्मात् संयोगव्यंग्यत्वान्नित्यः शब्द इति । अयमहेतुः; कालात्ययापदेशाद् । व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति । सति प्रदीपसंयोगे रूपस्य ग्रहणं भवति, न निवृत्तेसंयोगे रूपं गृह्यते । निवृत्ते तु दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले, नेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति संयोगनिमित्ता भवति । कारणाभावाद्धि कार्याभाव इति ।

१. ०दिदमेव–रा० । २. तत्ते–रा० । ३. रा० पुस्तके नास्ति ।

नन्वयमनैकान्तिक एव; संयोगव्यङ्ग्यत्वादिति । अनित्यमपि संयोगेन व्यज्यमानं दृष्टम्, यथा घट इति ? न; संयोगव्यङ्ग्यत्वेनावस्थानस्य साध्यत्वात् न ब्रूमः—नित्यः शब्द इति, अपि त्ववतिष्ठते शब्द इत्ययं प्रतिज्ञार्थः, तदा च 'संयोगव्यङ्ग्यत्वाद्' इत्ययं हेतुरनैकान्तिकः । न ह्यनवस्थितं किञ्चित् संयोगेनाभिव्यज्यमानम् । कथमिति ? तदनेन प्रकारेण संयोगव्यङ्ग्यत्वमेव शब्दस्य प्रतिषिध्यत इति नायमसिद्धाद् व्यावर्तते । अन्यथा नेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति न संयोगनिमित्ता भवतीति वचनस्य कोऽर्थ इति वक्तव्यम् !

स्याद् बुद्धिः—सर्वदा धर्मिण्यविद्यमानस्यासिद्धत्वम्, अयं तु न सर्वथा धर्मिण्यसिद्धो येनोत्पत्तिकाले संयोगव्यङ्ग्यत्वमस्ति, न तूपलब्धिकाल इति ? तदयुक्तम्; एकदेशासिद्धस्यापि असिद्धत्वपरिज्ञानात् । यथा—नित्या परमाणवः; गन्धवत्त्वात् । चेतनाश्च[1] तरवः; स्वापादिति । यश्च 'अनित्यः शब्दः' इति प्रतिजानीते, स कुठारदारुसंयोगादेः शब्दस्योत्पत्तिमेव प्रतिपद्यते । न पुनरवस्थितस्याभिव्यक्तिमिति व्यक्तमस्यान्यतरासिद्धत्वम् ।

अथ संयोगे सत्युपलब्धेरिति हेत्वर्थाभ्युपगमान्नायमसिद्धो हेतुरिति समाधीयते । तथापि तैलतेजोवर्त्तिसंयोगे कुलालमृत्पिण्डदण्डसंयोगे च सति दीपघटादयः समुपलभ्यन्ते । न च तेषां तत्र संयोगाप्राप्त्यवस्थानमित्यनेनानैकान्तिक एव प्राप्नोतीति न कालातीतः । तदुत्तरकालमप्यवस्थाने साध्ये 'समुदायान्तरव्यय( ? )वादिनो विरुद्धः; सपक्षाभावादेव तत्र वृत्तेरभावात् । क्षणस्थितिधर्मवति च धर्मिणि रूपादिके विद्यमानत्वात् । स्थिरभाववादिनं तु प्रति प्रतिबन्धवैकल्यम्, साधनवैफल्यं च । अनङ्गीकृतसिद्धान्ते तु न्यायवादिनि प्रतिवादिनि पूर्वपक्षप्रतिपादितो दोष इति । एवमुदाहरणान्तरेऽपि दूषणमुत्प्रेक्ष्य वक्तव्यमिति ।

"यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" ( न्या० सू० १. २. ७ ) । विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम्, तस्य चिन्ताविमर्शात् प्रभृति प्राङ्निर्णयात् परीक्षणम्, सा यत्र कृता स निर्णयार्थं प्रयुक्तोभयपक्षसाम्यात् प्रकरणमनतिवर्तमानः प्रकरणसमो न निर्णयाय कल्प्यते । कस्मात् पुनः प्रकरणचिन्ता ? तत्त्वानुपलब्धेः । यस्मादुपलब्धे तत्त्वेऽर्थे निवर्तते चिन्ता, तस्मात् सामान्येनाधिगतस्य या विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रयोजयतीति । उदाहरणम्—'अनित्यः शब्दः, नित्यधर्मानुपलब्धेः' । अनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टम्—स्थाल्यादि । यत्र समानो धर्मः संशयकारणहेतुत्वेनोपादीयते, संशयसमः सव्यभिचार एव । या तु विमर्शस्य विशेषापेक्षता, उभयपक्षविशेषानुपलब्धौ सा प्रकरणं प्रवर्तयति । यथा च शब्दे नित्यधर्मो नोपलभ्यते तथा अनित्यधर्मोऽपि । सेयमुभयपक्षविशेषानुपलब्धिः प्रकरणचिन्तां प्रयोजयति । कथम् ? विपर्यये प्रकरणनिवृत्तेः । यदि नित्यधर्मः शब्दे गृह्येत, न स्यात् प्रकरणम् । यदि न[2] नित्यधर्मो गृह्येत, एवमपि निवर्तते प्रकरणम् । सोऽयं हेतुरु-

१. श्वेतनाश्च–रा० ।　　　२. ह० पुस्तके नास्ति ।

भौ पक्षौ प्रवर्तयन्नान्यतरस्य निर्णयाय कल्प्यत इति । न त्वयं साध्याविशिष्ट एव नाविशिष्टः; तस्यैव प्रकरणप्रवृत्तिहेतोर्धर्मस्य हेतुत्वेनोपादानात् ।

यत्र साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः । यत्र पुनः प्रकरणप्रवृत्तिहेतुरेव स प्रकरणसम इति । अत्रापि नित्यानित्यधर्मानुपलम्भद्वयादेव प्रकरणचिन्ता, न त्वेकस्मात्; 'विपर्यये प्रकरणनिवृत्तिः' इति वचनात् । तद्यदि 'नित्यानित्यधर्मानुपलब्धेः' इति हेतुः स्यात्, स्यात् प्रकरणसमः । तदेकधर्मानुपलब्धेस्तूपादाने कथं प्रकरणसम इत्यभिधानीयम् ! उभयधर्मानुपलम्भोपादानेऽपि सपक्षविपक्षयोरनुवृत्तिव्यावृत्त्योरनिश्चयादसाधारणानैकान्तिको भवतीति कथमस्य हेत्वाभासान्तरत्वम्[1] ।

भवतु नामैकधर्मानुपलब्धिरेव हेतुः प्रकरणसमः, तथापि नित्यशब्दवादी अवश्यमेव व्यामोहान्नित्यधर्मान् प्रतिपद्यत इति प्रतिवाद्यसिद्धीयं भवति । अथ प्रमाणेन नित्यधर्मप्रतिक्षेपान्नित्यधर्मानुपलब्धिः प्रतिपाद्यते, तदापि निश्चायकत्वात् सम्यग्ज्ञानहेतुरेवायमिति कथं हेत्वाभासः प्रकरणसमः ! तदा हि विशेषोपलब्धिरेव हेत्वर्थो व्यवतिष्ठते, विशेषाश्च नित्यस्य कृतकत्वादयः । न च तत्कृता प्रकरणचिन्ता; 'विपर्यये प्रकरणनिवृत्तेः' इति वचनात् ।

अपि च 'नित्यधर्मानुपलब्धेः' इति किमयं प्रसज्यप्रतिषेधः ? किं वा प्रतियोगिविधानम् ? यदि प्रसज्यप्रतिषेधः, तदा प्रमेयत्वादिवत् साधारणानैकान्तिकोऽयं नित्यधर्मोपलब्धिः, प्रतिषेधमात्रस्यानित्यत्वरहितेष्वसत्स्वपि सम्भवात् । अथ प्रतियोगिविधानम्, तदाप्यनन्तरोदितया युक्त्या हेतुप्रतिरूपत्वायोगः ॥

अन्यस्त्वन्यथेदं सूत्रद्वयं व्याचष्टे—यो हेतुर्हेतुकालेऽपदिष्टोऽत्येति अपैति । कस्मादपैति ? प्रत्यक्षेणागमेनोभयेन वा पीड्यमानः स कालमतीत इति कालातीत इत्युच्यते । कुतः पुनः प्रत्यक्षागमविरोधो लभ्यत इति चेत् ? 'चतुर्लक्षणो हेतुः' इति वचनात् । तथा हि—"पूर्ववच्छेषवत्सामान्यतो दृष्टं च" ( न्या० सू० १. १. ५ ) इत्यत्र चतूरूपो हेतुरिष्टः । पूर्ववन्नाम साध्ये व्यापकम्, शेषवदिति तत्समानेऽस्ति । सामान्यतश्च दृष्टं च, शब्दादविरुद्धं चेति । तथा भाष्यवचनमप्यस्ति—"यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः सः" ( न्या. सू. भा. ) इति । तदेवं त्रैरूप्ये सति प्रत्यक्षागमाभ्यां यो बाध्यते, स कालात्ययापदिष्टः । स च त्रिधा भिद्यते—प्रत्यक्षविरुद्धः, आगमविरुद्धः, उभयविरुद्धश्चेति । प्रत्यक्षविरुद्धो यथा—'अनुष्णोऽग्निर्द्रव्यत्वादुदकवत्' । आगमविरुद्धो यथा—'ब्राह्मणेन सुरा पातव्या; द्रवत्वाद्, क्षीरवत्' । उभयविरुद्धो यथा—'अरश्मिवच्चक्षुरिन्द्रियत्वाद्, घ्राणादिवद्' इति । न चायं किल पक्षविरोधः; पक्षविरोधस्य प्रतिक्षेपादिति । तदेतत् त्रैरूप्यलक्षणानवबोधवैशद्यम् । त्रैरूप्यं हि यदा स्वं प्रमाणैः परिनिश्चितं पक्षधर्मत्वादिकं त्रयं च यत्र बाधा तत्र प्रतिबन्धोऽस्ति; बाधाविनाभावयोर्विरोधात् । अविनाभावो हि सत्येव साध्यधर्मे हेतोर्भावः, कथं

---

१. हेत्वासान्त०—पा० ।

चासौ तल्लक्षणो धर्मिणि हेतुः स्यात् । न चात्र साध्यधर्म इत्यादिकमत्राबाधित-विषयत्वदूषणानुसारेण वक्तव्यम् । यत्र पुनरियं बाधोदाहृता, न तेषां त्रैलक्षण्यं मनागप्यस्ति; प्रतिबन्धवैकल्यात् । अभ्युपगतपक्षप्रयोगस्य च पक्षदोष एवायं युक्तः । यत् पुनः पक्षदोषत्वपरिहाराय बहु असम्बद्धमुद्ग्राहितम्, तदत्यन्तम-सारमिति नेहावसीयते ॥

यस्मात् प्रकरणचिन्तेति प्रकरणं भाष्ये निरूपितम्, तस्योदाहरणम्—अणु-रण्वन्तरकार्यत्वं प्रतिपद्यते न वा ? इति चिन्तायां कश्चिदभिधत्ते—'अणुरण्वन्तर-कार्यः, रूपादिमत्त्वात्, तद्द्व्यणुकादिवत्' इति । योऽसावणोरणुः कारणत्वेनो-पादीयते, तत्रापि रूपादिमत्त्वमस्तीति चिन्ता—किमियं रूपादिमत्त्वादण्वन्तर-कार्यो न वेति ? चिन्तायां च यदि 'तस्यापि अण्वन्तरकार्यत्वम्, रूपादिमत्त्वाद्' इति वक्ति, तदा तस्यापि रूपादिमत्त्वमस्तीति पुनरपि चिन्ता । तदेवमनवस्था-रूपं प्रकरणं प्रवर्तयतीति प्रकरणसम इत्युच्यते । अथाणुरण्वन्तरकार्यत्वं न प्रति-पद्यते रूपादिमत्त्वे सति, तदानैकान्तिको हेतुरिति । तस्माद् भिद्यतेऽनैकान्तिकात् प्रकरणसमः । न चायं विरुद्धः; अविपर्ययसाधकत्वात् । नासिद्धः; पक्षधर्मत्व-दर्शनात् । न कालात्ययापदिष्टः; प्रत्यक्षागमाभ्यामबाध्यमानत्वात् । अतोऽर्था-न्तरमिति ।

अथवा—प्रदेशे करणं प्रकरणं चेति । कारणसिद्धिरित्यर्थः । प्रदेशे सिद्धि-रितीयं चिन्ता यस्माद्धेतोरपदिष्टा भवति स प्रकरणसमः । स प्रदेशसाधकत्वात् समः । यथैकदेशेऽसाधकत्वं तथेतरत्रापीत्यसाधकत्वसामान्यात् समः । तस्मादेक-वर्ती धर्मः प्रकरणसमः । तद्यथा—'पृथिव्यप्तेजोवाय्वाकाशान्यनित्यानि, सत्ता-वत्त्वाद्' इति ।

अत्रापि यदि आक्षपादमतानुसारी तावदेवं प्रमाणयति—'परमाणुः परमाण्व-न्तरपूर्वकः, रूपादिमत्त्वाद्, द्व्यणुकादिवत्' इति, तदा तस्याभ्युपेतविरोधः इति नायमतीतकालाद् भिद्यते । अथ बौद्धः करोति, तदापि हेतोरसिद्धिः; परमाणूनां रूपादिव्यतिरेकेणानभ्युपगमात् । अयोगाच्च, द्व्यादीनां चाभावादुभयविकलो दृष्टान्तः ।

यदाप्यनपेक्षितसिद्धान्तो न्यायवादी ब्रूते, तदापि द्वितीयपक्षोदितदोषानिवृत्ति-रिति नायमसिद्धाद् व्यावर्तते । योऽप्यनुमेयैकदेशवर्ती धर्मः 'पृथिव्यादीन्यनित्यानि गन्धवत्वात्' इति; अयमप्यपसिद्धान्तान्तर्भूत एवेति न पृथग् वाच्यः ।

'नासिद्धः; पक्षैकदेशधर्मत्वात्, सपक्षैकदेशवर्तिवत्' इति चेत् ? विषमोऽय-मुपन्यासः । 'सपक्षे एव च सत्त्वम्' इत्यत्र हि समुच्चीयमानावधारणमेव न सकलसपक्षधर्मतां साधनस्य प्रतिपादयति । अनुमेये सत्त्ववचनं पुनरयोगव्य-वच्छेदेन नियन्तृभूतमशेषसाध्यधर्मिधर्मतायाः प्रतिपादकमिति अनेनैव पक्षैक-देशासिद्धभेदानामपोहः कृत इत्यपार्थकं यत्नान्तरमिति यत् किञ्चिदेतत् ॥

भाविविक्तोऽप्यत्रैव खररवे पतितः प्रकरणसममन्यथा समर्थयति—यस्माद्धेतोः प्रकरणचिन्ता विपक्षस्यापि विचारः पश्चाद् भवति, स एवंलक्षणो हेतुर्निर्णयाय योऽपदिश्यमानः प्रकरणसमो भवति। प्रकरणे साध्ये समः=तुल्यः सत्त्वेऽसत्त्वे वा। यथा—'सत् सर्वज्ञम्; इतरतद्विपरीतविनिर्मुक्तत्वाद्, रूपादिवत्' इति। यस्मादयं हेतुरुभयत्र समानः, योऽप्यसत्त्वं साधयति तस्यापि समानः। कथम्? 'असत् सर्वज्ञत्वम्; इतरद्विपरीतविनिर्मुक्तत्वात्, खरविषाणवत्' इति। न चायं किलोभयधर्मत्वेऽप्यनैकान्तिकः; विपक्षवृत्तिवैकल्यात्।

तदिदमाचार्येण स्वयं प्रमाणविनिश्चये प्रतिषिद्धम्—"कं पुनरत्र भवान् विपक्षं प्रत्येति साध्याभावम्, कथमिदानीं हेतुं विपक्षवृत्तिरुभयधर्मेणैव" इत्यादिना।

अर्थग्रहणव्याख्याने च यदुक्तं तदत्रापि वक्तव्यम्। विशेषेण दूषणं चास्य प्रपञ्चेनोक्तमेव। एवं प्रकरणसमातीतकालयोरनुपपत्तिः।

साध्यव्यभिचारस्य तु युज्यते हेत्वाभासत्वम्, न तु यथा भवतामभ्युपगमः। तथा हि—भवन्तः सन्दिग्धविपक्षव्यावृत्तिकस्यानैकान्तिकत्वं न प्रतिपद्यन्ते; अदर्शनमात्रेणैव व्यतिरेकसिद्ध्यभ्युपगमात्। अत एव च भवद्भिरपगतशङ्कैरेवं प्रयुज्यते—'प्राप्यकारिणी चक्षुःश्रोत्रे प्रमाणत्वात्, घ्राणादिवत्', 'सविकल्पं प्रत्यक्षम्; प्रमाणत्वात्, अनुमानवत्' इत्यादि। न चादर्शनमात्रेणैव विना प्रतिबन्धेन व्यतिरेकसिद्धिरिति प्रतानितमन्यत्र—

"आत्मभूच्चेतनादीनां यो भावस्याप्रसाधकः।
स एवानुपलम्भः किं हेत्वभावस्य साधकः" ॥ इत्यादिना ॥

तथा सपक्षविपक्षयोः सन्दिग्धः सदसत्त्वस्यापि सम्यग्ज्ञानहेतुत्वमेव युष्माभिरिष्यते, नानैकान्तिकत्वम्। यथा—सात्मकं जीवच्छरीरम्; प्राणादिमत्त्वात्' इति। अस्य च तद्भावः प्रतिपादितः प्रमाणविनिश्चयादौ।

विरुद्धप्रभेदस्तु भारद्वाजविहितः प्रतिज्ञाविरोधप्रस्ताव एव निराकृतः।

साध्यसमेऽपि योऽयमन्यथासिद्धो वर्ण्यते, यथा—'अनित्याः परमाणवः; क्रियावत्त्वाद्, घटादिवत्' इति, अयमपि किल साध्यसमः; यस्मात् 'मूर्तिक्रियारूपादिमत्त्वादणूनां क्रियावत्त्वम्, नानित्यत्वात्' इति। स नोपपद्यते; धर्मिणि सिद्धत्वात्। न हि धर्मिणि विद्यमान एवासिद्धो हेतुर्युज्यते; सर्वहेतूनामसिद्धताप्रसङ्गात्। नैतदेवम्; न हि पक्षेऽस्तीत्येतावता पक्षधर्मत्वम्, साध्यवशेन हि धर्मिणः पक्षधर्मत्वमिष्यते; केवलस्य साध्यत्वात्। न च साध्यो धर्मः, यदि धर्मिणि तेन साधनेन विना न सम्भवति, तस्य च साधनस्य साध्यधर्माभावे धर्मिणा सम्भवः, ततो हेतोः पक्षधर्मत्वम्। यदा पुनरन्यथापि साधनायोपात्ते धर्मिणि धर्म उपपद्यते तदा हेतुत्वम्। एवं च विशिष्टमेव सत्त्वं पक्षधर्मत्वेन विवक्षितम्। अन्यथासिद्धत्वं युक्तमेव साध्यसमम्।

तदिदमत्र प्रतिविधानम्—यदि खलु साध्यधर्माभावे धर्मिणि असम्भवो हेतोरेवंविधमेव सत्त्वं पक्षधर्मत्वेन विवक्षितम्, न तु भावमात्रम्, तदा किं तदित्थम्भूतं पक्षधर्मत्वमविज्ञातमेवानुमेयप्रकाशकम्? आहोस्वित् परनिश्चितमेव? इति

हेत्वाभासाश्च यथान्यायं निग्रहस्थानमिति, एतावन्मात्रमिष्टमिति ॥ २३ ॥

प्रकारद्वये, यद्यविज्ञातं प्रकाशकं तदाज्ञापकहेतुन्यायमतिवर्तते। ज्ञापको हि हेतुः स्वात्मनि ज्ञानापेक्षो ज्ञाप्यमर्थं प्रकाशयति। सत्तामात्रेण च हेतवो विप्रतिपत्ति-निराकरणपटवः सन्तीति प्रतिवादिनां परस्परपराहतं प्रवचननानात्वं न भवेत्। विज्ञातस्यापि गमकत्वे प्रमाणाद् वा तस्य निश्चयः, अप्रमाणाद्वा[1] ? न तावद-प्रमाणस्य भूतार्थनिश्चयहेतुत्वाभावादप्रमाणाद् गतिः, अन्यथा प्रामाण्यमेवाव-हीयेत; यस्मादिदमेव प्रमाणस्य प्रमाणत्वं यद् यथावस्थितवस्तुप्रकाशकत्वम्। तच्चेदमप्रमाणस्याप्यस्ति, तदा कथं तदप्रमाणात् साध्ये धर्मिणि विना साध्य-धर्मेणासद्भूष्णोर्हेतोः सत्त्वं पक्षधर्मत्वेनाधिगम्यते। तदापि यत एव प्रमाणाद्धेतोः सिद्धिः तत एव साध्यधर्मस्यापीयं जायत इति किमर्थमयमकिञ्चित्करो हेतुरुपा-दीयते! न च हेतोरेव केवलस्य ततः सिद्धिः, साध्यधर्मस्य तु नेति युक्तं वक्तुम्; हेतोरपि ततोऽसिद्धिप्रसङ्गात्। तथा हि एवमयं हेतुस्तत्र धर्मिणि सिद्ध्यति यद्यनेन साध्यधर्मेण विनेह नोपपद्यते, सहैव तूपपद्यते इति सिद्ध्येत्। तथा च कथं तत एव प्रमाणात् साध्यधर्मस्यापि न सिद्धिः सञ्जातेति चिन्तनीयमेतत्।

एवं च तेनैव प्रमाणेन सहास्य साध्यधर्मस्य गम्यगमकभावः, न त्वनेन हेतु-नेति महदनिष्टमापद्यते। एवंविधपक्षधर्मत्वसमाश्रयणे च यावत् साध्यस्यासिद्धि-स्तावद्धेतोरपि, यावच्च हेतोरसिद्धिस्तावत् साध्यस्यापीति परस्पराश्रयप्रसङ्गः। पक्षधर्मत्वनिश्चयवेलायां च साध्यधर्मसिद्धिः सम्पद्यत इति व्यर्थमुत्तरलिङ्ग-रूपानुसरणम्। इत्थं च न द्विलक्षणः, चतुर्लक्षणः, पञ्चलक्षणश्च हेतुर्वक्तव्यः।

अस्मन्मते तु धर्मिणि सत्त्वमात्रं विज्ञाय च तदुत्तरकालमन्वयव्यतिरेकयो-र्विज्ञानम्, अन्वयव्यतिरेकौ वा सर्वोपसंहारेण विज्ञायेते। उत्तरकालं धर्मिणि सत्त्वमात्रं विज्ञातम्, अतश्चानन्तर्येणैव तत्सामर्थ्यात् साध्यधर्मस्य तत्र प्रतीति-रुपपद्यते। तेनेदमत्र सकलं दोषजालं नभसीवामले जले नावस्थानमलं लभते—इत्यलमप्रतिष्ठितमिथ्याप्रलापैरिति विरम्यते।

यद्येवम्, किं पुनरत्रेष्टमिष्टम्? इत्याह—हेत्वाभासाश्च यथान्यायमित्यादि। ये न्याया हेत्वाभासास्तदुक्तिः निग्रहस्थानं भवति। ते च येऽस्माभिरुक्ताः—

"एकाप्रसिद्धिसन्देहेऽप्रसिद्धव्यभिचारभाक् ।
द्वयोर्विरुद्धोऽसिद्धौ च सन्देहव्यभिचारभाक्" ॥ इति।

ननु चायं वादन्यायमार्गः सकललोकानिबन्धनबन्धुना वादविधानादौ आर्य-वसुबन्धुना महाराजपथीकृतः, क्षुण्णश्च तदनु महत्यां न्यायपरीक्षायां कुमतिमत-मत्तमातङ्गशिरःपीठपाटनपटुभिराचार्यदिङ्नागपादैः, तत् किमिदं पुनश्चर्वितचर्वण-

[1] प्रमाणाद्वा—रा०।

लोकेऽविद्यातिमिरपटलोल्लेखनस्तत्त्वदृष्टे[1]-
वादन्यायः परहितरतैरेष सद्भिः प्रणीतः ।
तत्त्वालोकं तिमिरयति तं दुर्विदग्धो जनोऽयम् ,
तस्माद्यत्नः कृत इह मया तत्समुज्ज्वालनाय[2] ॥

**वादन्यायो नाम प्रकरणं समाप्तम् ।**

( कृतिरियमाचार्यधर्मकीर्तिचरणानाम्[3] )

---

मास्थितं त्वयेति ? एतच्चोद्यपरिहारपरमिमं श्लोकमुपन्यस्यति[4]—लोक इत्यादि ।

तिमिरं च पटलं चेति तिमिरपटलम्, अविद्यैव तिमिरपटलमविद्यातिमिरपटलम्; भूतार्थदर्शनविबन्धकत्वात् । तस्योल्लेखनः । वादन्याय इति सम्बन्धः । उल्लेखन-शब्दः कर्तृसाधनः । कस्य पुनरविद्यातिमिरपटलम् ? इत्याह—तत्त्वदृष्टेः तत्त्व-दर्शनस्य । प्रज्ञालोचनस्येत्यर्थः । य एष समनन्तरमावेदितो वादन्यायः । सद्भिः पूर्वाचार्यैः । परहितरतैः करुणापारतन्त्र्यात् लोकान् सम्यग्वर्त्मनि व्यवस्थापयितुं प्रणीतः परां प्रसिद्धिं नीतः । लोके सुष्ठु स्पष्टीकृत इत्यर्थः । न तु परस्पर्द्धया, नापि यशःकामतादिभिः ।

यद्येवम्[5], तर्हि तदवस्थितं चोद्यम् ? इत्यत आह—तत्त्वस्यालोकम् उद्द्योतं वादन्यायमाचार्यैरुपदिष्टम्[6] । तिमिरयति अन्धकारीकरोति । कुदूषणतमसा प्रच्छादयतीति यावत् । कः पुनरसावतिसाहसिको यो महानागैः क्षुण्णं पन्थानं रोद्धुमीहते ? इत्याह—दुर्विदग्धः सम्यग्विवेकरहिततया जनोऽयम् उद्द्योतकर-प्रीति-चन्द्र-भाविविक्तप्रभृतिः । यतश्चैवम्, तस्माद् यत्नः कृतः इह वादन्यायप्रकरणे मया तस्य महद्भिरुद्भावितस्यान्तरा जातैरवधूतस्य समुज्ज्वालनाय । कुदूषणपरिहारेण तन्नीत्युद्द्योतनेन मम व्यापृतत्वान्न मया पिष्टं पिष्टमिति संक्षेपार्थः ।

अनर्घवनितावगाहनमनल्पधोशक्तिना ऽप्यदृष्टपरमार्थसारमधिकाभियोगैरपि ।
मतं मतितमः स्फुटं प्रतिविभज्य सम्यग्मया, यदाप्तमकृशं शुभं भवतु तेन शान्तो जनः ॥

अहं च—नैरात्म्यबोधपरिपाटितदोषशैलसम्बुद्धभारवहनक्षमभूरिशक्त-
मञ्जुश्रियः श्रियमवाप्य समस्तसत्त्वसर्वावृतिक्षयविधानपटुर्भवेयम् ॥

महारयेनैव न किञ्चिदत्र त्यक्तं विविक्तं न विभज्यमेव ।
तथापि मन्दप्रतिबोधनार्थमालोक एष ज्वलितः प्रदीपः ॥

लोकेऽविद्यातिमिरपटलोल्लेखनस्तत्त्वदृष्टेः,
वादन्यायः परहितरतैरेष सम्यक् प्रणीतः ।
तत्त्वालोकं तिमिरयति तं दुर्विदग्धो जनोऽयम्,
तस्माद् यत्नः कृत इह मया तत्समुज्ज्वालनाय ॥ इति ॥

विपञ्चितार्था नाम वादन्यायटीका समाप्ता
(कृतिरियं शान्तरक्षितपादानामिति)

---

१. ०दृष्टेः—रा० । २. तत्समुद्घातनाय—रा० । ३. ०अलेखि वागीश्वरेण—रा० ।
४. मुपन्यस्यतिपन्यस्यते—रा० । ५. तद्येवं—पा० । ६. ०माचाचार्यै०—रा० ।

# सम्बन्धपरीक्षा

( प्रभाचन्द्रकृतव्याख्योपेता )

आचार्यधर्मकीर्तिविरचिता

# सम्बन्धपरीक्षा

## ( प्रभाचन्द्रकृतव्याख्योपेता )

ननु चाणू[1]नामयःशलाकाकल्पत्वेनान्योन्यं सम्बन्धाभावतः स्थूलादि-प्रतीतेर्भ्रान्तत्वात् कथं तद्वशात् तत्स्वभावो भावः स्यात् ? तथा हि–सम्बन्धोऽर्थानां पारतन्त्र्यलक्षणो वा स्यात्, रूपश्लेषलक्षणो वा स्यात् ? प्रथमपक्षे किमसौ निष्पन्नयोः सम्बन्धिनोः स्यात्, अनिष्पन्नयोर्वा ? न तावदनिष्पन्नयोः; स्वरूपस्यैवाऽसत्त्वात् शशाश्वविषाणवत् । निष्पन्नयोश्च पारतन्त्र्याभावादसम्बन्ध एव ।

उक्तञ्च—

**पारतन्त्र्यं हि सम्बन्धः सिद्धे[2] का परतन्त्रता[3] ।**
**तस्मात् सर्वस्य भावस्य सम्बन्धो नास्ति तत्त्वतः ॥ १ ॥**

नापि रूपश्लेष[4]लक्षणोऽसौ; सम्बन्धिनोर्द्वित्वे रूपश्लेषविरोधात् । तयोरैक्ये वा सुतरां सम्बन्धाभावः, सम्बन्धिनोरभावे सम्बन्धायोगात्; द्विष्ठत्वात्तस्य । अथ नैरन्तर्यं तयो रूपश्लेषः ? न;[5] अस्यान्तरालभाव[6]-रूपत्वेनातात्त्विकत्वात्[7] सम्बन्धरूपत्वायोगः । निरन्तरतायाश्च सम्बन्ध-रूपत्वे सान्तरतापि कथं सम्बन्धो न स्यात्[8] ?

किञ्च—असौ रूपश्लेषः सर्वात्मना, एकदेशेन वा स्यात् ? सर्वात्मना

---

१. रूपरसगन्धस्पर्शपरमाणूनां सजातीयविजातीयव्यावृत्तानां परस्परम-सम्बद्धानामित्यर्थः ।

२. सम्बन्धिनि ।

३. सह्यविन्ध्ययोरिव ।

४. अन्योन्यस्वभावानुप्रवेशलक्षणः ।

५. इति चेदित्युपरितः ।

६. अन्तरालाभावो नैरन्तर्यमिति ।

७. तुच्छभावरूपत्वादभावस्य ।

८. निरन्तरतावत्पदार्थद्वयापेक्षत्वाविशेषात् ।

रूपश्लेषे अणूनां पिण्डः अणुमात्रः स्यात् । एकदेशेन तच्छ्लेषे किमेकदे[1]-शास्तस्यात्मभूताः, परभूता वा ? आत्मभूताश्चेत्; न एकदेशेन रूपश्लेष-स्तदभावात्[2] । परभूताश्चेत्; तैरप्यणूनां सर्वात्मनैकदेशेन वा रूपश्लेषे स एव पर्यनुयोगः, अनवस्था च स्यात् । तदुक्तम्—

रूपश्लेषो हि सम्बन्धो द्वित्वे[3] स च कथं भवेत् ।
तस्मात्[4] प्रकृतिभिन्नानां[5] सम्बन्धो नास्ति तत्त्वतः ॥ २ ॥

किञ्च—परापक्षैव सम्बन्धः, तस्य द्विष्ठत्वात् । तं चापेक्षते भावः[6] स्वयं सन्, असन् वा ? न तावदसन्; अपेक्षाधर्माश्रयत्वविरोधात् खर-शृङ्गवत् । नापि सन्; सर्वनिराशंसत्वात्[7], अन्यथा[8] सत्त्वविरोधात् । तन्न परापेक्षा नाम यद्रूपः सम्बन्धः सिद्ध्येत् ।

उक्तञ्च—

परापेक्षा हि सम्बन्धः सोऽसन् कथमपेक्षते[9] ।
संश्च सर्वनिराशंसो भावः कथमपेक्षते ॥ ३ ॥

किञ्च—असौ सम्बन्धः सम्बन्धिभ्यां भिन्नः, अभिन्नो वा ? यद्य-भिन्नः; तदा सम्बन्धिनावेव, न सम्बन्धः कश्चित्, स एव वा, न ताविति ? भिन्नश्चेत्; सम्बन्धिनौ केवलौ[10] कथं सम्बद्धौ स्याताम् ?

भवतु वा सम्बन्धोऽर्थान्तरम्[11]; तथापि तेनैकेन सम्बन्धेन सह द्वयोः सम्बन्धिनोः कः सम्बन्धः ? यथा सम्बन्धिनोर्यथोक्तदोषान्न कश्चित् सम्बन्धः, तथात्रापि । तेनानयोः सम्बन्धान्तराभ्युपगमे चानवस्था स्यात्;

---

१. अंशाः । २. निरंशत्वादणोः ।
३. सम्बन्धिनोः । ४. प्रकृत्या = स्वभावेन ।
५. अणूनाम् । ६. सम्बन्धलक्षणः ।
७. सर्वेषु निराकांक्षत्वात् । ८. परमपेक्षते चेत् ।
९. परम् । १०. सम्बन्धरहितौ ।
११. सम्बन्धिभ्याम् ।

तत्रापि सम्बन्धान्तरानुषङ्गात् । तन्न सम्बन्धिनोः सम्बन्धबुद्धिर्वास्तवी; तद्व्यतिरेकेणान्यस्य सम्बन्धस्यासम्भवात् । तदुक्तम्—

**द्वयोरेकाभिसम्बन्धात् सम्बन्धो यदि तद्द्वयोः[1] ।**
**कः[2] सम्बन्धोऽनवस्था[3] च न सम्बन्धमतिस्तथा ॥ ४ ॥**

ततः—

**तौ च भावौ तदन्यश्च[4] सर्वे ते स्वात्मनि स्थिताः ।**
**इत्यमिश्राः स्वयं भावास्तान् मिश्रयति कल्पना[5] ॥ ५ ॥**

तौ च भावौ सम्बन्धिनौ ताभ्यामन्यश्च सम्बन्धः, सर्वे ते स्वात्मनि स्वस्वरूपे स्थिताः । तेनामिश्रा व्यावृत्तस्वरूपाः स्वयं भावाः, तथापि तान्मिश्रयति योजयति[6] कल्पना ॥ ५ ॥

अत[7] एव तद्वास्तवसम्बन्धाभावेऽपि तामेव कल्पनामनुरुन्धानैर्व्यवहर्तृभिर्भावानां 'भेदोऽन्यापोहः[8]', तस्य प्रत्यायनाय क्रियाकारकादिवाचिनः शब्दाः प्रयोज्यन्ते—'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यादयः । न खलु कारकाणां क्रियया सम्बन्धोऽस्ति; क्षणिकत्वेन क्रियाकाले कारकाणामसम्भवात् । उक्तञ्च—

**तामेव[10] चानुरुन्धानैः क्रियाकारकवाचिनः ।**
**भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ॥ ६ ॥**
**कार्यकारणभावोपि तयोरसहभावतः ।**
**प्रसिद्ध्यति कथं द्विष्ठोऽद्विष्ठे सम्बन्धता कथम् ॥ ७ ॥**

---

१. स च सम्बन्धिनौ च ।
२. सम्बन्धसम्बन्धिनोः ।
३. अन्यथेति शेषः ।
४. सम्बन्धः ।
५. वासनारूपा कर्त्री ।
६. अवास्तवी ।
७. कल्पनैव मिश्रयति यतः ।
८. स्थिरस्थूलसाधारणाकाररूपः ।
९. अगोव्यावृत्तिर्गौः, अघटव्यावृत्तिर्घट इत्यादि ।
१०. कल्पनामवास्तवीं बुद्धिम् ।

[1]कार्यकारणभावस्तर्हि सम्बन्धो भविष्यति---इत्यप्यसमीचीनम्, कार्यकारणयोरसहभावतस्तस्यापि[2] द्विष्ठस्यासम्भवात् । न खलु कारणकाले कार्यं तत्काले वा कारणमस्ति, तुल्यकालं कार्यकारणभावानुपपत्तेः, सव्येतरगोविषाणवत् । तन्न सम्बन्धिनौ[3] सहभाविनौ विद्येते येनानयोर्वर्तमानोऽसौ सम्बन्धः स्यात् । अद्विष्ठे च [4]भावे सम्बन्धतानुपपन्नैव ॥ ७ ॥

**क्रमेण भाव एकत्र[5] वर्त्तमानोऽन्यनिस्पृहः ।**
**तदभावेऽपि[6] तद्भावात्[7] सम्बन्धो नैकवृत्तिमान् ॥ ८ ॥**

कार्ये कारणे वा क्रमेणासौ सम्बन्धो वर्तते—इत्यप्यसाम्प्रतम्; यतः क्रमेणापि भावः सम्बन्धाख्य एकत्र कारणे कार्ये वा वर्त्तमानोऽन्यनिस्पृहः=कार्यकारणयोरन्यतरानपेक्षो नैकवृत्तिमान् सम्बन्धो युक्तः; तदभावेपि=कार्यकारणयोरभावेऽपि[10] तद्भावात् ॥ ८ ॥

**यद्यपेक्ष्य तयोरेकमन्यत्रासौ प्रवर्तते ।**
**उपकारी ह्यपेक्ष्यः स्यात् कथं चोपकरोत्यसन् ॥ ९ ॥**

यदि पुनः कार्यकारणयोरेकं कार्यं कारणं[11] वापेक्ष्यान्यत्र कार्ये कारणे वासौ सम्बन्धः क्रमेण वर्त्तत इति[12] सस्पृहत्वेन द्विष्ठ एवेष्यते; तदानेना-

---

१. सामान्यसम्बन्धं संदूष्य सम्बन्धविशेषं दूषयन्नाह ।
२. क्षणिकत्वात् ।
३. कार्यकारणलक्षणौ ।
४. कार्यकारणलक्षणे ।
५. कार्ये कारणे वा ।
६. तयोः कार्यकारणयोः ।
७. तस्य=सम्बन्धस्य ।
८. 'अन्यनिस्पृहस्य' प्रत्यर्थः ।
९. प्रत्यर्थः ।
१०, अन्यतरस्य ।
११. अस्य कार्यस्येदं कारणमिति ।
१२. हेतोः ।

पेक्ष्यमाणेनोपकारिणा[1] भवितव्यम्[2], यस्मादुपकार्यपेक्ष्यः स्यात्[3], नान्यः। कथं चोपकरोत्यसन्? यदा कारणकाले कार्याख्यो भावोऽसन् तत्काले वा कारणाख्यस्तदा नैवोपकुर्याद्[4]; असामर्थ्यात्[5] ॥ ९ ॥

**यद्येकार्थाभिसम्बन्धात् कार्यकारणता तयोः।**
**प्राप्ता द्वित्वादिसम्बन्धात् सव्येतरविषाणयोः॥ १०॥**

किञ्च—यद्येकार्थाभिसम्बन्धात्[6] कार्यकारणता तयोः कार्यकारण-भावत्वेनाभिमतयोः; तर्हि द्वित्वसंख्यापरत्वापरत्वविभागादि[7][8]सम्बन्धात् प्राप्ता सा सव्येतरगोविषाणयोरपि[9] ॥ १० ॥

**द्विष्ठो हि कश्चित् सम्बन्धो नातोऽन्यत्तस्य लक्षणम्।**
**भावाभावोपधिर्योगः[10] कार्यकारणता यदि॥ ११॥**

न येन केनचिदेकेन सम्बन्धात् सेष्यते; किं तर्हि? सम्बन्धलक्षणेनैवेति[11] चेत्; तन्न, द्विष्ठो हि कश्चित्पदार्थः सम्बन्धः, नातोऽर्थद्वयाभिसम्बन्धाद-न्यत् तस्य लक्षणम्, येनास्य संख्यादेर्विशेषो व्यवस्थाप्येत ॥ ११ ॥

**योगोपाधी न तावेव कार्यकारणतात्र किम्।**
**भेदाच्चेन्नन्वयं शब्दो नियोक्तारं[12] समाश्रितः॥ १२॥**

कस्यचिद्भावे[13] भावोऽभावे[14] चाभावः,[15] तावुपाधी विशेषणं यस्य

---

१ कार्येण कारणेन वा।

२ सम्बन्धेन।

३ लोके।

४ कार्यं कारणमपेक्ष्य कारणे कार्यमपेक्ष्य यो वर्त्तते सम्बन्धस्तम्।

५ खरविषाणादिवत्।

६ सम्बन्धलक्षण।

७. द्वन्द्वः।

८ आदिना पृथक्त्वादि।

९ द्वित्वसंख्यालक्षणैकार्थाभिसम्बन्धस्याविशेषात्।

१० सम्बन्धः।

११ एकेन सह।

१२ नरम्।

१३ कार्यस्य कारणस्य वा।

१४ कार्यकारणतायाः स्यात्।

१५ भावाभावौ।

योगस्य=सम्बन्धस्य स कार्यकारणता यदि न सर्वसम्बन्धः; तदा तावेव योगोपाधी[1] भावाभावौ कार्यकारणताऽस्तु[2], किमसत्सम्बन्धकल्पनया ? भेदाच्चेत्[3] 'भावे हि भावोऽभावे[4] चाभावः' इति[5] बहवोऽभिधेयाः[6] कथं कार्यकारणतेत्येकार्थाभिधायिना शब्देनोच्यन्ते ? नन्वयं शब्दो[7] नियोक्तारं समाश्रितः। नियोक्ता हि यं शब्दं यथार्थ[8] प्रयुङ्क्ते तथा प्राह[9], इत्यनेकत्राप्येका[10] श्रुतिर्न विरुध्यते इति तावेव कार्य-कारणता ॥ १२ ॥

**पश्यन्नेक[11]मदृष्टस्य[12] दर्शने तददर्शने[13]।**
**अपश्यत्कार्यमन्वेति विना व्याख्यातृभिर्जनः ॥ १३ ॥**

यस्मात् पश्यन्नेकं कारणाभिमतमुपलब्धिलक्षणप्राप्तस्याऽदृष्टस्य[14] कार्याख्यस्य दर्शने सति तददर्शने च सत्यपश्यत्कार्यमन्वेति[15] 'इदमतो भवति' इति [16]प्रतिपद्यते जनः 'अत इदं जातम्' [17]इत्याख्यातृ-भिर्विनापि ॥ १३ ॥

---

१ उपाधिः=विशेषणम् ।
२ सम्बन्धः ।
३ जैनानाशङ्क्याह बौद्धः ।
४ भावाभावाभ्यां कार्यकारणभावसम्बन्धस्य ।
५ सम्बन्धस्य ।
६ चत्वारोऽर्थाः ।
७ कार्यकारणसम्बन्धप्रतिपादकः कार्यकारणलक्षणः ।
८ एकार्थमभिप्रेत्यानेकार्थं वाभिप्रेत्य ।
९ एकार्थाननेकार्थान् वा ।
१० यथोदधिशब्दः उदकानि अस्मिन्धीयन्ते स उदधिरित्यादिः ।
११ कारणम् ।
१२ कार्यस्य ।
१३. तस्य=कारणस्य ।
१४ कारणाभिमतपदार्थदर्शनात् पूर्वम् ।
१५ कथम् ? तथा हि ।
१६ स्वयम् ।
१७ शब्दोल्लेखमन्तरेण उपदेशकैः पुरुषैः ।

दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसम्भवात् ।
कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥ १४ ॥

तस्माद्[1] दर्शनादर्शने[2 3] विषयिणि[4] विषयोपचारात्–भावाभावौ मुक्त्वा कार्यबुद्धेरसम्भवात्[5] कार्यादिश्रुतिरप्यत्र[6] 'भावाभावयोर्मा लोकः [7]प्रतिपदमियतीं[8] शब्दमालामभिदध्यात्' इति व्यवहारलाघवार्थं [9]निवेशितेति[10] ॥ १४ ॥

तद्भावाभावात्[11] तत्कार्यगतिर्याप्यनुवर्ण्यते[12] ।
सङ्केतविषयाख्या सा सास्नादेर्गोगतिर्यथा[13] ॥ १५ ॥

[14]अन्वयव्यतिरेकाभ्यां कार्यकारणता नान्या चेत् कथं भावाभावाभ्यां सा प्रसाध्यते[15] ? [16]तदभावाभावात् लिङ्गात् तत्कार्यतागतिर्याप्यनु-

---

१ कारणस्य ।
२ कार्यस्य ।
३ कार्यकारणाभितयोः पदार्थयोः कार्यकारणता भवत्विति ।
४ दर्शनादर्शनलक्षणे ज्ञाने ।
५ भावाभावावेव कार्य, नान्यदित्यर्थः ।
६ श्रुतिः = शब्दः ।
७ न केवलं कार्यकारण श्रुतिः, किंतु ।
८ भावे भावः, अभावे चाऽभाव इत्येतावतीम् ।
९ समर्थिता ।
१० इति = सम्बन्धवादी ब्रूते ।
११ तस्य = कारणस्य ।
१२ तस्य = कारणस्य ।
१३ साधनात् ।
१४ भावाभावाभ्यामनुमीयमाना यदि कार्यकारणता ताभ्यामन्या तदा दूषणम् ।
१५ सम्बन्धवादिना ।
१६ तस्य = कारणस्य ।

वर्ण्यते[1] –'अस्येदं कार्यं कारणं च' इति; सङ्केतविषयाख्या सा । यथा 'गौरयं सास्नादिमत्त्वात्' [2]इत्यनेन गोव्यवहारस्य विषयः प्रदर्श्यते ॥१५॥

**भावे भाविनि तद्भावो भाव एव च भाविता[3] ।**
**प्रसिद्धे हेतुफलते प्रत्यक्षानुपलम्भतः[4] ॥ १६ ॥**

[5]यतश्च 'भावे[6] भाविनि=भवनधर्मिणि तद्भावः=कारणाभिमतस्य भाव एव कारणत्वम्, भावे एव कारणाभिमतस्य भाविता कार्याभिमतस्य कार्यत्वम्' इति प्रसिद्धे प्रत्यक्षानुपलम्भतो हेतुफलते । ततो भावाभावावेव कार्यकारणता, नान्या ॥ १६ ॥

**एतावन्मात्रतत्त्वार्थाः कार्यकारणगोचराः ।**
**विकल्पा दर्शयन्त्यर्थान् मिथ्यार्था घटितानिव ॥ १७ ॥**

तेनैतावन्मात्रं=भावाभावौ तावेव [7]तत्त्वं [8]यस्यार्थस्यासावेतावन्मात्रतत्त्वः, [9]सोऽर्थो येषां [10]विकल्पानां ते एतावन्मात्रतत्त्वार्थाः =एतावन्मात्रबीजाः कार्यकारणगोचराः, [11]दर्शयन्ति घटितानिव= सम्बद्धानिवासम्बद्धानप्यर्थान् । एवं घटनाच्च [12]मिथ्यार्थाः ॥ १७ ॥

**भिन्ने का [13]घटनाऽभिन्ने कार्यकारणतापि का ।**
**भावे ह्यन्यस्य[14] विश्लिष्टौ श्लिष्टौ स्यातां कथं च तौ ॥१८॥**

---

१ अस्य कारणस्येदं कार्यम्, अस्य च कार्यस्येदं कारणमिति ।
२ अनुमानेन ।
३ कार्यता ।
४. अन्वयव्यतिरेकतः ।
५ प्रकारान्तरेण तावेव कार्यकारणतेति निरूपयति ।
६ कार्यलक्षणे ।
७ स्वरूपम् ।
८ कार्यकारणस्य ।
९ अर्थः=विषयः ।
१० भ्रान्तज्ञानानाम् ।
११ विकल्पाः ।
१२ विकल्पाः ।
१३ सम्बन्धः ।
१४ सम्बन्धस्य ।

किञ्च, असौ कार्यकारणभूतोऽर्थो भिन्नः[1], अभिन्नो वा स्यात् ? यदि भिन्नः, तर्हि भिन्ने का [2]घटना स्वस्वभावव्यवस्थितेः[3] ? अथाभिन्नः; तदाऽभिन्ने कार्यकारणतापि का ? नैव स्यात् ।

स्यादेतत् न भिन्नस्याभिन्नस्य[4] वा सम्बन्धः । किं तर्हि ? सम्बन्धाख्येनैकेन सम्बन्धात्; इत्यत्रापि भावे [5]सत्तायामन्यस्य[6] सम्बन्धस्य विश्लिष्टौ कार्यकारणाभिमतौ श्लिष्टौ स्याताम्, कथं च तौ संयोगिसमवायिनौ ? [8]आदिग्रहणात् स्वस्वाम्यादिकम्[9] ॥ १८ ॥

**संयोगिसमवाय्यादि सर्वमेतेन चिन्तितम् ।**
**अन्योन्यानुपकाराच्च न सम्बन्धी च तादृशः ॥ १९ ॥**

सर्वमेतेनानन्तरोक्तेन सामान्यसम्बन्धप्रतिषेधेन चिन्तितम्[10] संयोग्यादीनामन्योन्यमनुपकाराच्चाजन्यजनकभावाच्च न सम्बन्धी[11] च तादृशोऽनुपकार्योपकारकभूतः ॥ १९ ॥

**जननेऽपि हि कार्यस्य केनचित् समवायिना ।**
**समवायी तदा नासौ न ततोऽतिप्रसङ्गतः ॥ २० ॥**

अथास्ति कश्चित्[12] समवायी[13] योऽवयविरूपं कार्यं जनयति, अतो नानु-

१ परस्परम् ।
२ सम्बन्धः ।
३ कार्यकारणयोः ।
४ कार्यस्य कारणस्य वा ।
५ प्रत्यर्थोऽयम् ।
६ भिन्नस्य ।
७ स्वरूपेण ।
८ कारिकायाम् ।
९ स्वाभिभृत्यभावसम्बन्धादिकम् ।
१० निराकृतम् ।
११ अर्थः । १२ उपकारकः ।
१३ तन्त्वादिः ।

पकारादसम्बन्धितेति; तन्न; यतो जननेऽपि कार्यस्य केनचित् समवायिनाभ्यु-पगम्यमाने[1] समवायी,[2] नासौ तदा; जननकाले कार्यस्यानिष्पत्तेः[3] । न च ततो जननात् समवायित्वं[4] सिद्ध्यति; कुम्भकारादेरपि घटे समवायित्व-प्रसङ्गात् ॥ २० ॥

**तयोरनुपकारेऽपि[5] समवाये परत्र वा ।**
**सम्बन्धो यदि[6] विश्वं स्यात् समवायि परस्परम् ॥ २१ ॥**

तयोः[7] समवायिनोः परस्परमनुपकारेऽपि ताभ्यां वा समवायस्य नित्यतया समवायेन वा तयोः परत्र[8] वा क्वचिदनुपकारेऽपि सम्बन्धो यदीष्यते; तदा विश्वं परस्परासम्बद्धं समवायि परस्परं स्यात्[9] ॥ २१ ॥

**संयोगजननेऽपीष्टौ ततः संयोगिनौ न तौ[10] ।**
**कर्मादियोगितापत्तेः स्थितिश्च प्रतिवर्णिता ॥ २२ ॥**

इत्यचार्यधर्मकीर्तिविरचिता
**सम्बन्धपरीक्षा समाप्ता ।**

यदि च संयोगस्य[11] कार्यत्वात्तस्य ताभ्यां[12] जननात् संयोगिता

---

१ सम्बन्धवादिना ।

२ कार्येण समम् ।

३ समवायिना कारणेन कार्यस्य निष्पादनसमये कार्यस्यानिष्पन्नत्वात् कुतः कार्येण समत्वं कारणस्य ? तत्करणे सति तस्य विनष्टत्वात् ।

४. तन्तूनाम् ।

५. समवायिनोः ।

६. तर्हीति शेषः ।

७. तन्तुपटयोः ।

८. असमवायिनि कारणे कार्ये वा ।

९. उपकारकत्वाभावाविशेषात् ।

१०. कुतः ? यतः ।

११. सम्बन्धस्य ।

१२. समवायिभ्याम् ।

तयोः[1] तदा संयोगजननेऽपीष्टौ, ततः संयोगजननान्न तौ संयोगिनौ, कर्मणोऽपि[2] [3]संयोगितापत्तेः[4]। संयोगो ह्यन्यतरकर्मजः[5] उभयकर्मजश्चेष्यते[6]। [7]आदिग्रहणात् संयोगस्यापि[8] संयोगिता स्यात्[9]। न संयोगजननात् संयोगिता, किन्तर्हि ? स्थापनादिति[10] चेत्; न स्थितिश्च[11] प्रतिवर्णिता[12]=ग्रन्थान्तरे प्रतिक्षिप्ता[13], स्थाप्यस्थापकयोर्जन्यजनकत्वाभावान्नान्या स्थितिरिति[14] ॥ २२ ॥

इति प्रभाचन्द्रकृता सम्बन्धपरीक्षाव्याख्या समाप्ता[15]।

---

१. संयोगिनोः ।

२. क्रियायाः ।

३. कर्मणः सकाशात्संयोगजननात् ।

४. तथा च द्रव्ययोरेव हि संयोगः न कर्मणोरेवेति मतं विघटेत ।

५. शैलश्येनयोः ।

६. मल्लयोः ।

७. कारिकायाम् ।

८. गुणरूपस्य ।

९. हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगस्योत्पत्तेः ।

१०. संयोगिभ्यां स्थाप्यपदार्थस्य संयोगलक्षणस्य स्थितिनिष्पादनात् ।

११. संयोगिनोः संयोगस्य च ।

१२. निराकृता ।

१३. प्रत्यर्थः ।

१४. जन्यजनकभावस्तु प्राक् प्रतिक्षिप्त इत्यर्थः ।

१५. इतोऽग्रे भोटभाषानुवादे अन्या अपि तिस्रः कारिकाः समुपलभ्यन्ते, परन्तु तासां संस्कृतमूलं नोपलब्धमिति अत्र नैवोद्धृताः । जिज्ञासुभिस्तु तास्तत एवावगन्तव्याः ।

# भाष्यवार्त्तिकसहिते
# न्यायदर्शने
## पञ्चमाध्याये द्वितीयमाह्निकम्
( निग्रहस्थानप्रकरणम् )

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति सङ्क्षेपेणोक्तम् (न्या.सू. १. २. २०), तदिदानीं विभजनीयम् । निग्रहस्थानानि खलु पराजयवस्तून्यपराधा-

---

## न्यायवार्त्तिकम्

१. विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति सङ्क्षेपेणोक्तम् । तदिदानीं विभजनीयम् । निग्रहस्थानानि तु पराजयवस्तूनि अपराधाधिकरणानि । सामान्यतो द्वे निग्रहस्थाने । कर्तृकर्मकरणानां तस्य ।

तत्रैके वर्णयन्ति पक्षस्येति । एवं चाहुर्दूषणानि—न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानि; एभिर्ह्यसौ परपक्षो दूष्यत इति । एतत्तु न सम्यक्, कर्मणस्तादवस्थ्यात् । न हि दूषणाभिधानेन कर्मणोऽन्यथात्वं भवति; यथाभूत एवार्थो दूष्यमाणस्तथाभूत एवादूष्यमाणोऽपि । न करणस्य; विषयान्तरेऽसामर्थ्यात् । साधनमपि प्रतिज्ञादिकं न दूष्यते; विषयान्तरेऽसामर्थ्यात् । न हि किञ्चित् साधनं यद्विषयान्तरे समर्थं स्यात् । सर्वं साधनं स्वविषये समर्थमिति । तस्मादसमर्थयोः कर्मकरणयोरुपादानात् कर्तुर्निग्रह इति । यत् कर्म क्रियार्थमुपादीयमानमभीष्टक्रियां न निर्वर्तयति तदिदमसमर्थम्, यथा—सिकता घटादिकरण इति । यच्च करणं क्रियार्थमुपादीयमानं क्रियां न निर्वर्तयति तदसमर्थम्, यथा—तुर्यादि घटे । स्वविषये तूभयं समर्थम् । तदन्यविषयस्य च कर्मणः, अन्यविषयस्य च करणस्यान्यथोपादानात् कर्तुरज्ञानम् । अज्ञानं पुनरप्रतिपत्तिर्विप्रतिपत्तिर्वेति कर्ता निगृह्यते, न कर्म; करणे पारतन्त्र्यात् । तस्मात् स्वतन्त्रस्य कर्तुर्निग्रह इति । विप्रतिपत्त्यप्रतिपत्त्योश्च पुरुषधर्मत्वात् पुरुषस्येति । विप्रतिपत्त्यप्रतिपत्ती च पुरुषस्य वचनद्वारेण गम्येते, तस्मात् प्रतिज्ञादिदोषा इति भक्तिः ।

कानिचिन्निग्रहस्थानान्यज्ञानादीनि पुरुषधर्मा एव ।

द्वैविध्यानुपपत्तिरनेकाभिधानादिति चेत् ?—अनेकं निग्रहस्थानं प्रतिज्ञाहान्यादिसूत्रे पठ्यते, तस्माद् निग्रहस्थाने इत्ययुक्तम् ? न; सामान्यभेदविस्तरस्य विवक्षातः प्रवृत्तेः । सामान्यमधिकृत्य निग्रहस्थाने द्वे, भेदविस्तरविवक्षायां तु द्वाविंशतिधा भेदः । उदाहरणमात्रत्वाच्च भेदस्यानन्त्यमिति ।

धिकरणानि प्रायेण प्रतिवाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसम्प्लवन्ते। तेषां विभागः—

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥**

तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते ॥ १ ॥

निग्रहस्थानपञ्चकप्रकरणम् [ २–६ ]

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥**

साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति 'प्रतिज्ञाहानिः'। निदर्शनम्—'ऐन्द्रियकत्वादनित्यः शब्दो घटवत्' इति कृते, अपर आह—'दृष्टमैन्द्रियकत्वं सामान्ये नित्ये, कस्मान्न तथा शब्दः' इति प्रत्यवस्थिते, इदमाह—'यद्यैन्द्रियकं सामान्यं नित्यं कामं घटो

---

प्रायेण प्रतिज्ञाद्यवयवाश्रयाणीति भाष्यम्। वक्तृविषयकत्वात् प्रतिज्ञाद्यवयवाश्रयत्वमनुपपन्नमिति चेत्?—अथ मन्यसे विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमित्यभिधाने प्रतिज्ञाद्यवयवाश्रितत्वे कः प्रसङ्ग इति? न; क्रियावचनदोषद्वारेण कर्तृवक्तृणामज्ञत्वोपपत्तेः। क्रियाद्वारेण कर्ता दूष्यते, वचनद्वारेण वक्तेति न प्रतिज्ञाद्याश्रयत्वमनुपपन्नम्। न चाधाराधेयभाव आश्रयाश्रयिभावो विवक्षितः। किं तु प्रतिज्ञादिमुखेनोद्भावनमिति।

तत्त्ववादिनमतत्त्ववादिनं चाभिसम्प्लवन्त इति भाष्यम्। तत्त्ववादिनो निग्रहस्थानानुपपत्तिः; प्रतिपादकत्वात्। तत्त्वं ब्रवीतीति प्रतिपादयति, प्रतिपादयंश्च निगृह्यत इति न युक्तम्? न; परापदिष्टदूषणदोषानवबोधद्वारेण तदुपपत्तेः। तत्त्ववादी प्रथमपक्षे द्वितीयपक्षवादिना यो दूषणाभास उक्तस्तस्य तत्त्वानवबोधान्निगृह्यते तत्त्वमभिदधानोऽपि। तत्र वस्तु निर्णीतम्, निर्णीते च वस्तुनि दूषणाभासस्याप्रतिपत्त्या निगृह्यत इति।

तत्रोदाहरणभेदप्रदर्शनार्थं प्रतिज्ञाहान्यादिसूत्रम् ॥ १ ॥

२. लक्षणं च—प्रतिदृष्टान्तेत्यादि।

प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वपक्षे दृष्टान्तेऽभ्यनुजानाति तदा निगृहीतो वेदितव्यः। यथा—अनित्यः शब्द ऐन्द्रियकत्वात् घटवदित्येकः। सामान्यमैन्द्रियकं दृष्टं नित्यं कस्मान्न तथा शब्द इति द्वितीयः। यदि सामान्यमैन्द्रियकं नित्यमिति घटोऽप्येवमस्त्विति तृतीयः। अनेन किल प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानाति, अभ्यनुज्ञानाच्च दृष्टान्तं जहन्निगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते।

एतत्तु न बुद्ध्यामहे—कथमत्र प्रतिज्ञा हीयत इति। हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते, तस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते

नित्योऽस्तु' इति। स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति, पक्षं च जहत् प्रतिज्ञां जहातीत्युच्यते; प्रतिज्ञाश्रयत्वात् पक्षस्येति ॥ २ ॥

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥**

प्रतिज्ञातार्थः 'अनित्यः शब्द ऐन्द्रियकत्वात् घटवत्' इत्युक्ते योऽस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः 'सामान्यमैन्द्रियकं नित्यम्' इति, तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पादिति दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात् 'सामान्यमैन्द्रियकं सर्वगतम्, ऐन्द्रियकस्त्वसर्वगतो घटः' इति धर्मविकल्पात्तदर्थनिर्देश इति साध्यसिद्धयर्थम्, कथम्? यथा घटोऽसर्वगतः, एवं शब्दोऽप्यसर्व-

---

नित्यतां प्रतिपद्यते, नित्यताप्रतिपत्तेश्चासिद्धता दृष्टान्तदोषो भवति। सोऽयं दृष्टान्तदोषेण साधनदोषेण वा निग्रहः, न प्रतिज्ञाहानिः। दृष्टान्तं च जहत् प्रतिज्ञामपि जहातीत्युपचारेण निग्रहस्थानम्। न च प्रधानासम्भवे उपचारो लभ्यते इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्यः।

कथं तर्हीदं सूत्रम्—प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति? दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः, स्वश्चासौ दृष्टान्तश्चेति स्वदृष्टान्तशब्देन पक्ष एवाभिधीयते। प्रतिदृष्टान्तशब्देन च प्रतिपक्षः—प्रतिपक्षश्चासौ दृष्टान्तश्चेति। एतदुक्तं भवति—परपक्षस्य यो धर्मस्तं स्वपक्ष एवानुजानातीति। यथा—'अनित्यः शब्द ऐन्द्रियकत्वात्' इति द्वितीयपक्षवादिनि सामान्येन प्रत्यवस्थिते, इदमाह—'यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति शब्दोऽप्येवं भवतु' इति, एषा प्रतिज्ञाहानिः। प्रागनेन प्रतिज्ञातम्—'अनित्यः शब्दः' इति, सामान्येन अनैकान्तिकत्वेन प्रत्यवस्थित इदमाह—'नित्यः' इति। प्राक् प्रमाणावधारितार्थपरित्यागाद् विप्रतिपत्तितो निग्रहस्थानमिति। प्रसङ्गविधानादिति चेत्?—अथ मन्यसे नासौ पश्चादपि शब्दस्य नित्यतां प्रतिपद्यते, किं तु प्रसङ्गं करोति—यदि सामान्यमैन्द्रियकं नित्यं दृष्टं शब्दोऽप्येवं भवत्विति प्रसङ्गं विधत्ते? तच्च न; अत एव तत्प्राप्तेः। यत एवासौ हेतुदोषोद्धारे कर्तव्ये प्रसञ्जयत्यत एव निगृह्यत इति।

हेतुदोषेण चरितार्थत्वान्न प्रतिज्ञाहानिर्निग्रहस्थानमित्यन्ये। अन्ये तु वर्णयन्ति—नैवेदं निग्रहस्थानं युक्तम्; हेतुदोषेण चरितार्थत्वात्। यस्मादैन्द्रियकत्वादित्यस्य हेतोरनैकान्तिकत्वं दोषस्तेनायं निगृहीत इति। नानैकान्तिकत्वदोषपरिहारेण; विप्रतिपत्तेस्तदुपपत्तेः। तस्यैवानैकान्तिकस्य परिहारं कुर्वाणोऽयं निगृह्यत इत्यतोऽनैकान्तिकत्वं न निग्रहस्थानमिति ॥ २ ॥

३. उदाहरणं पूर्ववत्। सर्वगतासर्वगतविकल्पेन प्रतिज्ञान्तरं करोति—असर्वगतोऽनित्यः शब्द इति। तत्र 'अनित्यः शब्दः' इति पूर्वा प्रतिज्ञा सामान्येनैन्द्रिय-

गतो घटवदेवानित्य इति। तत्र 'अनित्यः शब्दः' इति पूर्वा प्रतिज्ञा, 'असर्वगतः' इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम्। तत् कथं निग्रहस्थानमिति ? न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरम्, किन्तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः, तदेतदसाधनोपादानमनर्थकमिति आनर्थक्यान्निग्रहस्थानमिति ॥ ३ ॥

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥**

गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा, रूपादितोऽर्थान्तरस्यानुपलब्धेरिति हेतुः, सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। कथम् ? यदि गुणव्यतिरिक्तं द्रव्यम्, रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते; अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः, 'गुणव्यतिरिक्तं द्रव्यम्' इति नोपपद्यते। गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते = व्याहन्यते, न सम्भवतीति ॥ ४ ॥

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः॥ ५ ॥**

'अनित्यः शब्द ऐन्द्रियकत्वात्' इत्युक्ते परो ब्रूयात्—'सामान्यमैन्द्रियकं न चानित्यम्, एवं शब्दोऽप्यैन्द्रियको न चानित्यः' इति। एवं प्रतिषिद्धे पक्षे यदि

---

केण प्रतिहता, 'असर्वगतोऽनित्यः शब्दः' इति प्रतिज्ञान्तरम्। तत् कथं निग्रहस्थानम् ? साधनसामर्थ्यापरिज्ञानात्। अपरिज्ञाय साधनसामर्थ्यं कुर्वतः 'असर्वगतोऽनित्यः शब्दः' इति प्रतिज्ञा। न च प्रतिज्ञा प्रतिज्ञान्तरं साधयति; साधनसामर्थ्यापरिज्ञानात्। तदेतत् प्रतिज्ञान्तरम्। तदिदमप्रतिपत्तितो विप्रतिपत्तितो वा निग्रहस्थानमिति ॥ ३ ॥

४. यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञया, स प्रतिज्ञाविरोधो नाम निग्रहस्थानम्। यथा—गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति।

एतेनैव प्रतिज्ञाविरोधोऽप्युक्तः—यत्र प्रतिज्ञा स्ववचनेन विरुध्यते, यथा—श्रमणा गर्भिणी। हेतुविरोधोऽपि—यत्र प्रतिज्ञा हेतुना विरुध्यते, यथा—'सर्वं पृथक्, समूहे भावशब्दप्रयोगात्' इति। एतेन प्रतिज्ञया दृष्टान्तविरोधोऽपि वक्तव्यः, हेतोश्च दृष्टान्तादिभिर्विरोधः प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः। परपक्षसिद्धेन गोत्वादिनाऽनैकान्तिकदेशनाद् विरोधः—यः परपक्षसिद्धेन गोत्वादिना व्यभिचारयति तद्विरुद्धमुत्तरं वेदितव्यम्। स्वपक्षानपेक्षं च तथा—यश्च स्वपक्षानपेक्षं हेतुं प्रयुङ्क्ते—अनित्यः शब्द ऐन्द्रियकत्वादिति, स प्रसिद्धस्य गोत्वादेर्नित्यत्वविरोधाद्विरुद्धः। उभयपक्षसम्प्रतिपन्नस्त्वनैकान्तिकः। यदुभयपक्षसम्प्रतिपन्नं वस्तु तथात्वेन तेनानैकान्तिकदेशनेति।

दृष्टान्ताभासाश्च कस्मान्निग्रहस्थानेषु नोक्ताः ? हेत्वाभासपूर्वकत्वाद् दृष्टान्ताभासानां तदभिधानेनैवोक्ता वेदितव्या इति ॥ ४ ॥

५. यः प्रतिज्ञातमर्थं प्रतिषेधे कृते परित्यजति स प्रतिज्ञासंन्यासो वेदितव्यः। उदाहरणं पूर्ववत्। सामान्येनानैकान्तिकत्वे हेतोः कृते ब्रूयात्—कश्चैवमाह

ब्रूयात्—'कः पुनराह अनित्यः शब्दः' इति ! सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासंन्यास इति ॥ ५ ॥

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥**

निदर्शनम्—'एकप्रकृतीदं व्यक्तम्' इति प्रतिज्ञा, कस्माद्धेतोः ? एकप्रकृतीनां विकाराणां परिमाणात् । मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणम् । यावान् प्रकृतेर्व्यूहो भवति तावान्विकार इति, दृष्टं च प्रतिविकारं परिमाणम् । अस्ति चेदं परिमाणं प्रतिव्यक्तम्, तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामः—व्यक्तमिदमेकप्रकृतीति ।

अस्य व्यभिचारेण प्रत्यवस्थानम्—नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते आह—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्, सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते, तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति ।

तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति, सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम् । हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते ? नेदं व्यक्तमेकप्रकृति भवति; प्रकृत्यन्तरोपादानात् । अथ नोपादीयते ? दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकाभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति ॥ ६ ॥

निग्रहस्थानचतुष्कप्रकरणम् [ ७–१० ]

**प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥**

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्—नित्यः शब्दोऽस्पर्शत्वादिति हेतोः, हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम्, पदं च नामाख्यातोपसर्गनिपाताः, अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः शब्दो नाम, क्रियाकारकसमुदायः, कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम्, धात्वर्थमात्रं च कालाभिधानविशिष्टम्, प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः, उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि—तदर्थान्तरं वेदितव्यमिति ॥ ७॥

---

अनित्यः शब्द इति, एतत् साधनसामर्थ्यापरिच्छेदात् विप्रतिपत्तितो निग्रहस्थानमिति ॥ ५ ॥

६. उदाहरणं भाष्ये । साधनान्तरोपादाने पूर्वस्यासामर्थ्यख्यापनान्निग्रहस्थानमिति । सामर्थ्ये वा हेत्वन्तरं व्यर्थमिति ॥ ६ ॥

( इति प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम् )

७. उदाहरणं भाष्ये । अभ्युपगतार्थासङ्गतत्वान्निग्रहस्थानं यदभ्युपगतं तत्सम्बद्धम्, अन्यदसम्बद्धमुच्यत इति ॥ ७ ॥

**वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥**

यथा 'नित्यः शब्दः कचटतपाः, जबगडदशत्वात्, झभञ्घढधष्वत्' इति । एवम्प्रकारं निरर्थकम् । अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णा एवं क्रमेण निर्दिश्यन्त इति ॥ ८ ॥

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥**

यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चरितमित्येवमादिना कारणेन तदविज्ञातम्—अविज्ञातार्थम्, असामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ॥ ९ ॥

**पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥**

यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्ति इत्यसम्बद्धार्थत्वं गृह्यते तत्समुदायार्थस्यापायादपार्थकम् । यथा—दश दाडिमानि षडपूपाः कुण्डम् अजाजिनम् पललपिण्डः अथ रौरुकमेतत् कुमार्याः पाय्यम् तस्याः पिता अप्रतिशीन इति ॥ १० ॥

निग्रहस्थानत्रिकप्रकरणम् [ ११-१३ ]

**अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥**

प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः, तत्रावयवविपर्यासेन वचनमप्राप्तकालमसम्बद्धार्थं निग्रहस्थानमिति ॥ ११ ॥

---

८. उदाहरणं भाष्ये । साधनानुपादानादज्ञानमेवं ब्रुवन्न साधनं साध्यं जानीत इति न साध्यं न साधनं चोपादत्त इति निगृह्यते ॥ ८ ॥

९. उदाहरणं भाष्ये । असामर्थ्यख्यापनान्निग्रहस्थानम् । असामर्थ्यं चाज्ञानमिति ॥ ९ ॥

१०. यथा दशदाडिमादि वाक्यम् । निरर्थकापार्थकयोरभेद इति चेत् ?—अथ मन्यसे निरर्थकादपार्थकं न भिद्यते तत्राप्यर्थो न गम्यते, इहापीति ? भिद्यत इति ब्रूमः । कथम् ? तत्र हि वर्णमात्रम्, इह तु पदान्यसम्बद्धानि । तत् कथं निग्रहस्थानम् ? । वाक्यादृते न विशेषावगतिरिति साधनसामर्थ्यापरिज्ञानात् निग्रहस्थानम् ॥ १० ॥

( इति प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम् )

११. अवयवानां विपर्यासेनाभिधानं निग्रहस्थानम् ।

नैवमपि सिद्धेरित्येके । एके तु ब्रुवते—नैतन्निग्रहस्थानम्, एवमपि सिद्धेरिति । समयानभ्युपगमाच्च—न च वयमेवं समयं प्रतीच्छाम इति । प्रयोगाच्च—प्रयुक्तश्चावयवव्यत्ययः सर्वशास्त्रेष्विति कस्यायं समय इति । यत्तावन्नैवमपि सिद्धेरिति ? प्रयोगापेतशब्दवदेतत् स्यात् । यथा गौरित्यस्य पदस्यार्थे गवीति प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति । न च शब्दान्वाख्यानं

**हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥**

प्रतिज्ञादीनामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानम्; साधनाभावे साध्यासिद्धिरिति ॥ १२ ॥

**हेतूदाहरणाधिकमधिकम् ॥ १३ ॥**

एकेन कृतत्वाद् अन्यतरस्यानर्थक्यमिति, तदेतन्नियमाभ्युपगमे वेदितव्यमिति ॥ १३ ॥

---

व्यर्थम्। अनेन शब्देन गोशब्दमेवासौ प्रतिपद्यते, गोशब्दात् ककुदादिमन्तमर्थम्। तथा प्रतिज्ञाद्यवयवविपर्यासेनानुपूर्वी प्रतिपद्यते, आनुपूर्व्या चार्थमिति। एतत् कथम्? पूर्वं तावत् कर्मोपादीयते, ततः करणम्। मृत्पिण्डाद्युदाहरणम् अनेकधा लोक इति। यत्पुनरेतत् समयानभ्युपगमात् इति? नायं समयः, अपि त्वर्थस्यानुपूर्वी। सोऽयमर्थस्यानुपूर्वीमन्वाचक्षाणो नाभ्याख्येय इति। यत्पुनरेतत् प्रयोगादिति? न; निग्रहस्थानविषयापरिज्ञानात्—शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्ते, संगृहीतं त्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयाऽऽनुपूर्व्या प्रतिपादयतीति ॥ ११ ॥

१२. यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं न्यूनं वेदितव्यम्। तत् कथं निग्रहस्थानम्? न साधनाभावे साध्यसिद्धिरिति।

एके तु प्रतिज्ञान्यूनं नास्तीत्याचक्षते। एतत् तु न युक्तम्; प्रतिज्ञामात्रेण प्रयोगो विकल्पतः पर्यनुयोज्यः। यः प्रतिज्ञान्यूनवाक्यं ब्रूते किमयं निगृह्यते, अथ नेति? यदि निगृह्यते, कतमत् निग्रहस्थानमिति, न हि हेत्वाभासादयोऽत्र सन्तीति? न च हेत्वादिदोषाः सन्तीति निग्रहं चाभ्युपैति। तस्मात् प्रतिज्ञान्यूनमेवेति। अथ न निग्रहः? न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति। यत्तु ब्रवीषि—सिद्धान्तपरिग्रह एव प्रतिज्ञा? एतदपि न बुद्ध्यामहे। कर्मण उपादानं प्रतिज्ञा। सामान्यविशेषवतोऽवधारितस्य वस्तुनः परिग्रहः सिद्धान्त इति ॥ १२ ॥

१३. यस्मिन् वाक्ये हेतू द्वौ दृष्टान्तौ द्वौ तद्वाक्यमधिकं निग्रहस्थानम्; आधिक्यात्।

तच्च न; दार्ढ्यादित्येके। एके तु ब्रुवते—नेदं निग्रहस्थानम्; दार्ढ्याद्। दार्ढ्यं हि ज्ञाप्यस्य भूयोभिर्ज्ञापकैर्दृष्टम्, यथा धूमालोकाभ्यामग्नेरिति। न, दार्ढ्यार्थानभिधानात् भूयोभिर्ज्ञापकैर्दार्ढ्यं भवतीति न दार्ढ्यार्थोऽभिधीयते, किं ब्रवीषि दार्ढ्यादिति! सुतरां प्रतिपत्तिर्दार्ढ्यमिति? तदपि तादृगेव, किमुक्तं भवति सुतरामिति! अथ ब्रवीषि—द्वे अपि ज्ञापके?। सत्यं द्वे अपि ज्ञापके। एकेनैवाभिधानात् व्यर्थमभिधानं द्वितीयस्य; प्रकाशिते दीपान्तरोपादानवदिति। अनवस्था वा; प्रकाशितेऽपि साधनान्तरोपादानादिति ॥ १३ ॥

( इति स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानप्रकरणम् )

पुनरुक्तनिग्रहस्थानप्रकरणम् [ १४–१५ ]

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥**

अन्यत्रानुवादात् शब्दपुनरुक्तम्, अर्थपुनरुक्तं वा। 'नित्यः शब्दो नित्यः शब्दः' इति शब्दपुनरुक्तम्। अर्थपुनरुक्तम्—'अनित्यः शब्दो निरोधधर्मको ध्वनिः' इति ॥ १४ ॥

**अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः ॥ १५ ॥**

यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति ॥ १५ ॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १६ ॥**

पुनरुक्तमिति प्रकृतम्। निदर्शनम्—उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयाद् 'अनुत्पत्तिधर्मकं नित्यम्' इति, तच्च पुनरुक्तं वेदितव्यम्। अर्थसम्प्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ॥ १६ ॥

उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् [ १७–२० ]

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १७ ॥**

विज्ञातस्य वाक्यार्थस्य परिषदा, प्रतिवादिना वा त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति। अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात् ॥ १७ ॥

---

१४. शब्दपुनरुक्तम्–'अनित्यः शब्दोऽनित्यः शब्दः' इति। अर्थपुनरुक्तम्–'अनित्यः शब्दो निरोधधर्मको ध्वनिः' इति ॥ १४ ॥

१५. नाबाधनादित्येके। एके तु ब्रुवते–नेदं निग्रहस्थानम्; अबाधनात्। न हि परीक्षाविधेः पुनर्ब्रुवता किञ्चिद् बाध्यते, परप्रतिपादनार्थं च वाक्यप्रयोगः, पुनरभिधानेन सुतरामर्थं प्रतिपद्यत इति न निग्रहस्थानम्; प्रतिपादकत्वात्। सत्यं प्रतिपादयति; प्रतिपादितार्थप्रतिपादकत्वात् वैयर्थ्यं स्यात्, वैयर्थ्यान्निग्रहस्थानम्; साधनविषयापरिज्ञानात्। न चायं शिष्यो न गुरुस्तस्मान्नायं पुनः प्रतिपाद्यत इति ॥ १५ ॥

१६. पूर्ववन्निग्रहस्थानमिति ॥ १६ ॥

( इति पुनरुक्तनिग्रहस्थानप्रकरणम् )

१७. उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति केचित्। उत्तरेणावस्थानात्–उत्तरेण गुणदोषवता मूढत्वामूढत्वं गम्यत इति किं पुनरुच्चरिते नास्ति। अस्ति हि उत्तरे कश्चित् समर्थो दृश्यते न प्रत्युच्चारणे, नासौ तावता निग्रहस्थानमर्हति। यश्चारभ्य स्वपक्षं न निर्वाहयेत्, तस्य स्यात् खलीकारमात्रमिति। नोत्तरविषयापरिज्ञानात्—यद्ययं न प्रत्युच्चारयति, निर्विषयमुत्तरं प्रसज्यते; अथोत्तरं ब्रवीति; कथं नोच्चारयति; तदिदं व्याहतमुच्यते—नोच्चारयत्युत्तरं च ब्रवीतीति। अप्रतिज्ञानाच्च—नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यं पश्चादुत्तर-

**अविज्ञातं चाज्ञानम् ॥ १८ ॥**

विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्थानमिति। अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति ॥ १८ ॥

**उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १९ ॥**

परपक्षप्रतिषेध उत्तरम्, तद्यदा न प्रतिपद्यते तदा निगृहीतो भवति ॥ १९ ॥

**कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ २० ॥**

यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति—'इदं मे करणीयं विद्यते तस्मिन्नवसिते पश्चात् कथयामि' इति विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति ॥ २० ॥

मतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् [ २१–२३ ]

**स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २१ ॥**

यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुदधृत्य वदति—भवत्पक्षेऽपि समानो दोष इति, स स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यत इति ॥ २१ ॥

---

मभिधेयम्, अपि तु यथाकथञ्चिदुत्तरं वक्तव्यम्। उत्तरं चाश्रयाभावे न युक्तमिति युक्तम्—अप्रत्युच्चारणं निग्रहस्थानमिति ॥ १७ ॥

१८. स्फुटं भाष्ये। अप्रतिपत्तितो निग्रहस्थानम् ॥ १८ ॥

१९. श्लोकपाठादिभिरवज्ञां दर्शयन्नोत्तरं प्रतिपद्यत इति तदप्रतिभा नाम निग्रहस्थानम्; मू(रू)ढत्वादिति ॥ १९ ॥

२०. यत्र कर्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति स विक्षेपो विज्ञेयः। यथा 'रसालया मया भुक्तं प्रतिश्यायकणो मे कण्ठं क्षिणोति' इत्येवमादि। तत् कथं निग्रहस्थानम्? अज्ञाननिगूहनार्थं तु प्रत्युक्तमज्ञानमेव परिहारेणाविष्करोति ॥ २० ॥

( इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् )

२१. यः परेण चोदितं दोषमनुद्धृत्य 'भवतोऽप्ययं दोषः' इति ब्रवीति सा मतानुज्ञा। परमतं स्वमतेऽनुजानाति। उदाहरणम्—भवांश्चौरः पुरुषत्वादिति। स तं प्रति ब्रूयात्—भवानपीति। सोऽभ्युपगम्य दोषं परपक्षेऽभ्यनुजानातीति निगृहीतो वेदितव्यः। अनभ्युपगच्छता न पुरुषत्वं चौर्ये हेतुरिति वक्तव्यम्। किन्तु परस्वेनानतिसृष्टेन सम्बन्धः। तद् उत्तरापरिज्ञानान्निगृह्यत इति।

प्रसङ्गविधानान्न निग्रहस्थानमित्यन्ये। अपरे तु ब्रुवते—नैतन्निग्रहस्थानम्; प्रसङ्गविधानात्। नैवायं पश्चादपि तं दोषं प्रतिपद्यते, अपि तु प्रसङ्गं करोति—यदि पुरुषत्वाच्चौरो भवति भवानपि पुरुषस्तस्माच्चौर इति। एतत्तु नात एव। यत एवायमुत्तरे वक्तव्ये प्रसङ्गं करोति, तत एवोत्तरापरिज्ञानान्निगृह्यत इति ॥ २१ ॥

**निहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २२ ॥**

पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, तस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः। एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम्, न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ! ॥ २२ ॥

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २३ ॥**

निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति ॥ २३ ॥

कथकान्योक्तिनिरूप्यनिग्रहस्थानप्रकरणम् [ २४–२५ ]

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २४ ॥**

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययाद् अनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः। यथा 'न सदात्मनं जहाति, न सतो विनाशः, नासदात्मानं लभते, नासदुत्पद्यते' इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति-- 'एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनात्। मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम्, तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते तस्मात् समन्वयदर्शनात् सुखादिभिरेकप्रकृतीदं शरीरम्' इति। एवमुक्तवाननुयुज्यते–'अथ प्रकृतिर्विकार इति कथं लक्षितव्यमिति'? यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः, यच्च धर्मान्तरं प्रवर्तते निवर्तते वा स विकार इति। सोऽयं प्रतिज्ञातार्थविपर्यासादनियमात् कथां प्रसञ्जयति। प्रतिज्ञातं खल्वनेन—'नासदाविर्भवति न सत्तिरोभवति' इति। सदसतोश्च तिरोभावाविर्भावमन्तरेण न कस्यचित् प्रवृत्तिः, प्रवृत्त्युपरमश्च भवति। मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति, अभूदिति च प्रवृत्त्युपरमः, तदेतन्मृद्धर्माणामपि न स्यात्। एवं प्रत्यवस्थितो यदि सतश्चात्महानमसतश्चात्मलाभमभ्युपैति, तदस्यापसिद्धान्तो निग्रहस्थानं भवति; अथ नाभ्युपैति, पक्षोऽस्य न सिध्यति ॥ २४ ॥

---

२२. यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो भवति; निग्रहस्थानप्राप्तस्यापरिज्ञानात्।

नान्यवचनादित्यन्ये। अन्ये ब्रुवते—नेदं निग्रहस्थानम्; अन्योत्तरस्याभिधानात्। यस्मादसौ निग्रहस्थानप्राप्तं न निगृह्णाति ब्रुवन्नन्यदुत्तरमभिधत्त इति। तच्च नात एव—यत एवासौ निग्रहस्थाने वक्तव्ये अन्यदभिधत्तेऽत एव निगृह्यते। जानानो ह्यसौ किमर्थमन्यद् ब्रवीति ॥ २२ ॥

२३. अनिग्रहस्थान एवाभिधत्ते—निगृहीतोऽसीति। एतन्निग्रहस्थानापरिज्ञानान्निग्रहस्थानमिति ॥ २३ ॥

( इति दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् )

**हेत्वाभासाश्च यथोक्ताः ॥ २५ ॥**

हेत्वाभासाश्च निग्रहस्थानानि। किं पुनर्लक्षणान्तरयोगाद् हेत्वाभासा निग्रहस्थानत्वमापन्नाः यथा प्रमाणानि प्रमेयत्वम् ? इत्यत आह—यथोक्ता इति। हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति।

त इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ २५ ॥

योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम्।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये पञ्चमोऽध्यायः समाप्तः



---

२४. अस्योदाहरणं स्फुटं भाष्ये। प्रतिज्ञातार्थव्यतिरेकेणाभ्युपगतार्थपरित्यागान्निगृह्यत इति ॥ २४ ॥

२५. यथैव विभक्ता लक्षणेन, तथैव तेषां निग्रहस्थानभाव इति।

त इमे प्रमाणादय उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये, परीक्षिताः शेषेष्विति त्रिविधा तत्त्वस्य परिसमाप्तिरुक्ता वेदितव्येति ॥

( इति कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम्। )

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम्।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥
यदपक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥

इति श्रीपरमर्षि-भारद्वाज-पाशुपताचार्यश्रीमदुद्द्योतकरकृतौ
न्यायवार्त्तिके पञ्चमोऽध्यायः समाप्तः



## २. ग्रन्थान्तराणां समुद्धरणानि

**वादन्यायेऽन्यग्रन्थांशा आचार्याभ्यां समुद्धृताः ।**
**तेषां सूचीह निर्दिष्टा नामग्रहणपूर्वकम् ॥**


| | | |
|---|---|---|
| अतश्चानग्नितो धूमो | | १६ |
| अनिग्रहस्थाने निग्रहस्थानानुयोगो | (न्या. सू. ५. २. २३) | १२४ |
| अनैकान्तिकः सव्यभिचारः | (न्या. सू. १. २. ५) | १३० |
| अम्बाम्बेति यथा बालः | (वा. प. १. १५२) | ९८, १०० |
| अर्थादापन्नस्य स्वशब्देन पुनर्वचनं च | (न्या. सू. ५. २. १५) | १०४, १०६ |
| अवयवविपर्यासवचनम् | (न्या. सू. ५. २. ११) | ९८ |
| अविज्ञातमज्ञानम् | (न्या. सू. ५. २. १७) | ११४ |
| अविशेषोक्ते हेतौ प्रतिषिद्धे | | ९३ |
| असदकरणादुपादानग्रहणात् | (सां. का. ९) | ५६ |
| आत्ममृच्चेतनादीनां | ( ) | १३४ |
| इत्थम्भूतलक्षणे | (पा. सू. २. ३. २१) | १२४, १२६ |
| इष्टं विरुद्धकार्येऽपि | (प्र. वा. ३. ६) | १६ |
| उत्तरस्य ह्यप्रतिपत्तिरप्रतिभा | (न्या. सू. ५. २. १९) | १२२ |
| उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः | (न्या. सू. १. १. ३४) | ७६ |
| उदाहरणापेक्षस्तथेत्युपसंहारः | (न्या. सू. १. २. ३८) | ६१, ९८ |
| एकप्रत्यवमर्शस्य | | ८१ |
| एकाप्रसिद्धिसन्देहे | | १३५ |
| एतत्तु न बुध्यामहे कथमत्र प्रतिज्ञा··· | (न्या. वा. ५. २. २) | ७३ |
| एतत् साङ्ख्यपशोः कोऽन्यः | (प्र. वा. १६७-६८) | ४० |
| एवं साधौ प्रयोक्तव्ये | (वा. प. १. १५३) | १०१ |
| कामेऽष्टद्रव्यकोऽशब्दः | (अभि. को. २. २२) | ८१, ८५ |
| कार्यव्यासङ्गात् कथाविक्षेपः | (न्या. सू. ५. २. २०) | ११८ |
| कालात्ययापदिष्टः कालातीतः | (न्या. सू. १. २. ९) | १३० |
| गुणव्यतिरिक्तं द्रव्यम् | (न्या. भा. ५. २. ४) | ७७ |
| गोशब्देऽवस्थितेऽस्माकं | (श्लो. वा. शब्द. २७६) | १०० |
| चोदनालक्षणो धर्मः | (मी. सू. १. १. २) | ६६ |
| चोदना हि भूतं भवन्तं भविष्यन्तं | (मी. द. भा. १. १. २) | ६६ |
| तत्र व्यक्तौ च जातौ च | (श्लो. वा. व. वा. ९१) | ८२ |
| तत्रानुमेयनिर्देशो | ( ) | ५४ |
| तत्त्वाध्यवसायसंरक्षणार्थं | (न्या. सू. ४. २. ५०) | ६९ |

| | | |
|---|---|---|
| तद्भावहेतुभावौ हि | | १०५ |
| तस्य तस्यैकता नास्ति | | ८३ |
| तानीमानि द्वाविंशतिविधानि | (न्या. वा. ५. २. १) | ७३ |
| ते साधुष्वनुमानेन | (वा. प. १. १५०) | ९८ |
| त्रिरूपो हेतुरित्युक्तं | | ८८ |
| त्वं राजा वयमप्युपासितगुरु···· | (नी. श. ५२) | ६६ |
| दुर्जनविप्रतिपत्त्यधिकरणे सतां शास्त्राप्रवृत्तेः···· | | ११४ |
| द्व्येकयोर्द्विवचनैकवचने | (पा. सू. १. ४. २२) | ३२ |
| न किञ्चिदेकमेकस्मात् | (प. वा. २. ५३६) | ३८ |
| ननु चासर्वगतत्वे··· | (अविद्धकर्णः) | ७६ |
| नहि विशेषशब्दसन्निधिरेव शब्दानां···· | | ७ |
| नास्त्यात्मेति प्रतिज्ञापदयोः परस्परविरोधः | (न्या. वा.) | ६९ |
| निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् | (न्या. सू. ५. २. २१) | १२२ |
| पक्षधर्मत्वसम्बन्ध० | | ६४ |
| पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं | (न्या. सू. ५. २. ५) | ९२ |
| पङ्क्तेन युगपद् योगात् | | ८३ |
| पर्यायान्तरकथनमुपादानम् | (न्या. सू. २. १. १२) | |
| पर्षत्प्रतिवादिभ्यां त्रिरभिहितम् | (न्या. सू. ५. २. ९) | ९६, १०७ |
| पाचकादिष्वभिन्नेन | (प्र. वा. २. १५७–१५८) | २७ |
| पूर्ववच्छेषवत् सामान्यतो दृष्टं च | (न्या. सू. १. १. ५) | १३२ |
| पौर्वापर्यायोगादप्रतिबद्धार्थम् | (न्या. सू. ५. २. १०) | ९७ |
| प्रकृतार्थादप्रतिबद्धार्थम् | (न्या. सू. ५. २. ७) | ९४ |
| प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् | (न्या. सू. ५. २. ३) | ७५ |
| प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि | (१. १. ३२) | ८० |
| प्रतिज्ञाहेत्वोर्विरोधः | (न्या. सू. ५. २. ४) | ७७ |
| प्रतिदृष्टान्तधर्माभ्यनुज्ञा | (न्या; सू. ५. २. २) | ७३ |
| प्रत्यक्षादिविरोधा ये | | ९० |
| प्रत्ययेऽत्र प्रतिज्ञादीन् | | ६३ |
| बहुषु बहुवचनम् | (पा. सू. १. ४. २३) | ३२ |
| मन्त्रो हीनः स्वरतो वर्णतो वा | (म. भा. प. आ. १) | १०१ |
| महत्यनेकद्रव्यवत्ताद्रूप्याच्च | (वै. द. ४. १. ६) | ३७ |
| यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं | (न्या. भा.) | १३२ |
| यदिष्टं हीनमन्यतमेनाप्यवयवेन | (न्या. सू. ५. २. १२) | १२१ |
| यद् यथा वाचकत्वेन | ( ) | २९ |
| यस्मात् प्रकरणचिन्ता स निर्णयार्थम्० | (न्या. सू. १. २. ७) | १३०, १३१ |
| येन येन हि नाम्ना वै | | ८१ |

| | | |
|---|---|---|
| येषां वस्तुवशा वाचो | | २९ |
| रक्षोहागमलघ्वसन्देहाः | (म. भा. प. आ.) | १०३ |
| रूपसंस्काराभावाद् वायावनुपलब्धिः | (वै. द. ४. १. ८) | ३७ |
| रूपाद्यग्रहेऽपि द्रव्यग्रहणमस्त्येव | (अविद्धकर्णः) | ३४ |
| वक्तुरेव हि तज्जाड्यम् | | ९७ |
| वर्णक्रमनिर्देशवन्निरर्थकम् | (न्या. सू. ५. २. ८) | ९५ |
| वर्तमानसामीप्ये वर्तमानवद्वा | (पा. सू. ३. ३. ३१) | ४ |
| विज्ञातस्य पर्षदा त्रिरभिहितस्य | (न्या. सू. ५. २. १७) | १०९ |
| शब्दार्थयोः पुनर्वचनम् | (भा. सू. ५. २. १४) | १०५ |
| शास्त्राधिकारासम्बद्धा | | २४ |
| शिष्टेभ्य आगमात् सिद्धाः | (वा. प. १. २७) | १०१ |
| सतो यदि भवेज्जन्म | | ५४ |
| सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां | (मी. सू. २. १. ४) | ६६ |
| सप्रतिघा दश रूपिणः | (अभि. को. १. २९) | ३५ |
| सव्यभिचारविरुद्धप्रकरणसम० | (न्या. सू. १. २. ४) | १३० |
| सांव्यवहारिकस्यैतत् प्रमाणस्य रूपमुक्तम्…. | | १६ |
| साधकतमं करणम् | (पा. सू. १. ४. ४२) | ५८ |
| साधर्म्यवैधर्म्यसमादीनि | (न्या. सू. ४. ४ १) | ७० |
| साध्यधर्मप्रत्यनीकेन धर्मेण… | (न्या. भा. ५. २. २) | ७३ |
| साध्यनिर्देशः प्रतिज्ञा | (न्या. सू. १. १. ३३) | ७६ |
| साध्यविशिष्टः साध्यत्वात् साध्यसमः | (न्या. सू. १. २. ८) | १३० |
| सिद्धान्तमभ्युपेत्य तद्विरोधाद्० | (न्या. सू.. १ २. ६) | १३० |
| सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गो | (न्या. सू. ५. २. २४) | १२५ |
| स्वपक्षदोषाभ्युपगमात् परपक्षे | (न्या. सू. ५. २. २१) | १२१ |
| स्वपक्षस्थापनाहीनो वाक्यसमूहो वितण्डा | (न्या. सू. १. २. ३) | १२० |
| स्वभावो यः सत्स्वन्येषूपलम्भ० | ( न्या. वि. २. १४) | २१ |
| हसति हसति स्वामिन् | | १०६ |
| हीनमन्यतमेनाप्यवयवेन | (न्या. सू. ५. २. १२) | १०४ |
| हेतूदाहरणाधिकमधिकम् | (न्या. सू. ५. २. १३) | १०५ |
| हेतोः साध्यान्वये यत्र | | ८२ |
| हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनम् | (न्या. सू. १. १. ३९) | ६१, १०९ |
| हेत्वाभासाश्च निग्रहस्थानानि | (न्या. सू. ५. २. २५) | ८५, १३४ |
| हेत्वाभासाश्च यथोक्ताः | (न्या. सू. ५. २. २५) | १२९ |

